–रम् शौ ५, ३०, ८; ९, १३, ५; पै ९, १३, ८.

अङ्ग-भेद्[a]– -दः शौ ५, ३०, ९; १९, ४४, २; पै १५, ३, २; –दम् शौ ९, १३, ५; पै ३, १७, ५.

अङ्ग-रोग[b]– -गम् पै १, ९०, ४; ९, १३, ९; १६, ७४, ५.

?आङ्गरोग[c]– -गात् पै ७, १५, ७.

अङ्ग-वत्[d]– -वते काठ ४५, ३.

¶अङ्गा-परुस्[e]– -रूंषि तै २, ५, ६, १[2].

अङ्गिन्[f]– -ङ्गिने तै ७, ५, १२, २.

अङ्गीन- यावत्°, विश्व°

अङ्गे-ष्ठा[g]– -ष्ठाः शौ ६, १४, १.

अङ्ग्य[h]– -ङ्ग्यः शौ ६, १२७, ३; –ङ्ग्याः ऋ १, १९१, ७. [°ङ्ग्य- विश्व°]

२अङ्ग[i]– -ङ्गेभ्यः शौ ५, २२, १४.

¶अङ्गार[j]– -रः खि ३, १५, २०$; काठ ३५, १८; क ४८, १६; –रम् तै ६, ३, ९, ५[2]; मै ४, १, ८; काठ ३१, ६; क ४७, ६; –राः ऋ १०, ३४, ९$; तै ३, ४, ८, ४; मै १, ८, ६; काठ ६, ७; २१, १०; क ४, ६; –रान् काठ २६, १; क ४०, ४; –रेण मै ४, १, ९; काठ ३१, ७; क ४७, ७; –रेषु तै ५, १, ९, २[2]; मै १, ४, १२; ८, ६; २, ५, ५; काठ ६, ७; १९, १०[2]; क ४, ६; ३०, ८[2]; –रैः तै ६, ३, १, २. [°र- अन°]

अङ्गारि[k]– -॰रे मै ३, ७, ७.

अङ्गिर[l]– -रस्य पै ५, ३०, ९; –†राः ऋ १, ८३, ४; शौ २०, २५, ४; –रे ऋ ४, ५१, ४; –रेभ्यः शौ १९, ३९, ५; पै ७, १०, ५.

अङ्गिरस्[m]– -॰रः ऋ १, १, ६; ३१, १७; ७४, ५; ११२, १८; २, २३, १८; ४, ३, १५; ९, ७; ५, ८, ४; १०, ७; ११, ६; २१, १; ६, २, १०; १६, ११; ८, ६०, २; ७४, ११; ७५, ५; ८४, ४; १०२, १७; खि २, १३, ४; ५; ५, २०, ४; मा ३, ३; ५, ९[3]; ११, ४५; १२, ८; १५, २८†; का ३, १, ३; ५, ३, २[3]; १२, ४, ८; १३, १, ९; १६, ५, ९†; तै १, २, १२, १[2]; †२, ५, ८, १; ४; ६, ११, २; ४, १, ४, ३; २, १, ३; ४, ४, ३†; ५, १, ५, ६; ६, २, ७, ३; मै १, २, ८[3]; ७, १; २, ७, ४; ८; १३, ७†; ३, ८, ५; ४, ११, ६†; काठ २, ९[3]; ७, १३; १७; १६, ४; ८; १९, ५; ११; २२, १२; २५, ६; ३९, १३; १४; ४०, ११; क २, ३[2]; ३०, ३; ३१, १; ३९, ३; †कौ १, २९; २, ११; २५८; ८९९; ९०३; †जै १, ३, ९; ३, २, २; २२, ५; ४, १४, ३; २५, ५; शौ २०, १०३, ३†; १३५, ९; –रसः ऋ १, ६२, २; ७१, २; [३, ५३, ७; (७, १०३, १०); १०, ६७, २]; ४, २, १५; ३, ११; ५, ११, ६; ४५, ८; ६, ६५, ५;

---

[a]) कर्मण्युपपदे √भिद्+अण्। कृद्-उपप्रस्व. (पा ३, २, १; ६, २, १३९)।

[b]) व्यु.नापूदि.द्र.। °ज्वर- इति शौ.-शाखीयः पाभे.।

[c]) 'जत्रव्याद् अङ्गरोगाद्' इत्येवं मूलतः सतः पा. स्थाने 'अत्रव्या आङ्गरोगाद्' इत्याकारकः प्रामादिकः मुपा. द्र.।

[d]) मतुपो मस्य वः (पा ५, २, ९४; ८, २, ९)।

[e]) द्रस. 'न दधिपयआदीनि' (पा २, ४, १४) इत्युक्तगणस्य तदाकृतिव्यापकत्वे 'इध्मा-बर्हिषी' इतिवत् पूर्वपददीर्घ उभयपदप्रकृतिस्वरश्च (पा ६, २, १४०)। यत्तु भा. 'परादिस्' (पा ६, २, १९९) इति शिष्टिमनुस्मरन्निवोत्तरपदाद्युदात्तत्वमात्रमाह तच्चित्रमिव भवति। पाठान्तरवद्-ग्रन्थानुरोधेन वा दृष्टिदोषेण वा तस्य तथा मतं स्यादिति भूयोविमृश्यं सम्पद्यते विविचाम्।

[f]) मत्वर्थीय इनिः (पा ५, २, ११५)। प्रत्ययस्वरः।

[g]) कारकोपपदे √स्था+विच्। कृद्-उपप्रस्व. (पा ३, २, ७४; ६, २, १३९)। पूप. स. अलुक्।

[h]) तात्रभविके यति द्व्यच्कत्वादाद्युदात्तत्वम् (पा ४, ४, ११०; ६, १, २१३)।

[i]) जनपदवाचित्वाच् शब्दस्य पृथङ् निर्देशः।

[j]) आरन् प्रत्ययः (पाउ ३, १३४)। नित्स्वरः (पा ६, १, १९७)। अथवा 'अग्नि-गार-' इत्येवं मूलतः सतः प्राति. अपभ्रंशः। तत्र च उप.<√गद् (ल्) द्र.।

[k]) एवं किल मुपा. भवति। तस्य च चिन्त्यत्वार्थम् 'अङ्गारि-' इति अद्र.। एवं तु. मै १, २, ५; १२; ३, ८, १० यत्र तादृक्प्रकारक एव मुपा. भवति।

[l]) किरन् प्रत्ययो नित्-स्वरश्च (तु. पाउ १, ५२; पा ६, १, १९७)। यद्वेह च नाउ. च एपूदि. प्राकृतिकत्वं द्र.।

[m]) असुन् प्रत्यय इड्-रुटावागमौ च। यत्तु (पाउ ४, २३६) इत्यत्र 'असिः' प्रत्यय उपादेशि तच् चिन्त्यमिव भवति। प्रत्ययस्वरेणान्तोदात्तत्वापत्तेः। अतः पूर्वतः प्रवर्त्तितः (तु. पाउ ४, १८९) असुन् प्रत्यय एवोकावागमौ च द्र.। नित्स्वरः (पा ६, १, १९७)।

[७, ४२, १; ५२, ३]; १०,१४, ६; ६२, ५; ७८, ५; १०८, ८; १०; १६९, २; खि ४, ८, १; †मा १५, २८; १९, ५०; ३४, १७; †का १६, ५, ९; ३३, १, ११; ¶तै २,६,३, २; १२, ६†; ३, १, ९, ४; ५, १, २; ४, ४, ४, २†; ५, १, २, ४; २, ८,४; ४, २,३; ३,२; ७, २, २$; ६, १, १, २; ३, ३; २, ६, २[२]; ७, १, ४, १; ४, १७, १†; मै १,४, १; २, ७, १२; १३, ७†; ¶३, १,३; ३,४; ६, ७;८, ४[२]; ¶४, ८, ३; ५; काठ ४, १४; ५, ४; ८,४; ९, १६[३]; १९, २; २१, ६; २२, १०;१३; २३, ४;२८, ३; ३१, १५; ३२,४; ३८,१३; ३९;१४; ४०,५; ४४, ६; ¶क ६, ९; २९, ८; ३१, २१; ३५, ४$; ३६, १; ४४, ३[२]; कौ १, ९२; २, २५८†; जै १, १०, २; ३,२२,५†; शौ २, १२, ५; ३, २१, ८; ८, ८, १३; ९, ५, १६; १०, ६, २०; ७, १८;३४; ११, ८, १३; १२,३, ४३;४५; १८, १, ५८; ६१; ३, २०; ४, ३; २०, ९१,२†; पै ३, १२,८; ३८, ९; ५, ११, ४; १४, ८; ११, २, ६; १५, १४, ६; १६, ३०, ३;४४,३;९८,७;१४०,४; –०रसः ऋ १०, ६२, [१–४]; पै २, ५, ५; –रसम् शौ ४,२९, ३; पै ४, ३८, ३; –रसाम् ऋ १, ६२, ३; १०७, २; १२१,१; ३; १२७, २; २, २०, ५; ६, ११, ३; १०, ७०, ९; खि ३, १५, ३०; ३२; ५, १,३; मा १, १८; का १, ६, ४; तै १, १, ७, २; ३, ५,१,२¶; ५, ६,१६,१; ७, १७, १; मै १, १, ८; ६, १; २; ५; ४, १,८; काठ १, ७; ७, १३[३]; ८, ४; ३१, ६; ३९,१५; ४९, ६; ५३, ७; क १, ७; ६, ९; कौ २, ११६४†; शौ ६,३५, ३; १६, ८, १४; १८,४, ८; –रसौ मै ३, ४, २¶; –राः ऋ १, ३१, १; १३९, ९; ३, ३१,७; ५, ४५, ७; १०, ९२, १५; मा ३४,१२†; का ३३,१, ६†; शौ १९, ३४, ६; ५४,५; पै ११, ३, ६; १२, २, १५; –†रोभिः ऋ १, ६२, ५; १००, ४; २, १५, ८; ४, १६, ८; ६, १८, ५; ७, ४४, ४; १०, १४, ३–५; १११, ४; तै २, ३, १४, ५; ६, १२, ५; ६[२]; ७, १, १८, २$; मै ४, १४, ५; १६[३]; काठ ४१, ९; शौ २, १२, ४$; १८, १, ४७; ५९; ६०; २०, ७७, ८; पै २,५,४$; –रोभ्यः ऋ १, [५१, ३; ९, ८६, २३]; १३२, ४; १३९, ७; ८, १४, ८; ६३, ३; ९, ६२, ९; खि ५, २०, १; तै ७, ५, ११, २; काठ ४५. २; †कौ २,३३१;९९१; जै ३,२७, ७†; शौ १२,३,४४; १९, २२, १८; २०, २८,२†; ३९, ३†; १३५, ६; पै १६, ९४,५. [°स्- आदित्य°, रुद्र°]

आङ्गिरस[a]– -सः ऋ ६,७३, १; १०, ४७,६; ६८,२; १४९, ५; १६४, ४; मा १९, ७३; का २१, ५, २; मै १, ६, ५¶; ३, ११, ६; काठ ३८, १; शौ ६, ४५, ३†; ८, १३,१५; १०, १, ६; ११, १२, १०; १२; १३; १९,४,४; †२०, १६, २; ९०, १; पै ७, १९, १; १६, ३५, ६; ९६,८;१३५,५; –सम् खि १, २, ९; २, ४, २; शौ ५, १९,२; पै ९,१८, ८; –सस्य ऋ ४, ४०,१; काठ ९,१२¶;–सान् ऋ ६, ३५,५; –सानाम् शौ १६, ८, १५; १९, २२, १; –साय मै १, ९, ४¶; काठ ९, ९; ११¶.

आङ्गिरसी[b]– -०सि शौ १२, १०, ६; पै १६,१४६,२; –सी मा ४,१०; का ४,४,२; तै १,२, २, २; मै १, २, २; काठ २, ३; क १, १५; पै ३, २२, १; –सीः शौ ८, ५, ९; ७, १७; २४; ११, ६, १६; पै १६, १३, ९; १४, ३; २२, ६; २७,९.

†अङ्गिरस्-तम,मा[c]– -०म ऋ १,७५,२; ८,४३,१८;२७;४४, ८; मा १२, ११६; का १३, ७, १५; तै १, ३,१४,३; काठ ३५, १७; क ४८, १५; जै १, ५३, ९; –मः ऋ १, ३१, २; १००, ४; १३०, ३; ९, १०७,६; १०, ६२, ६; कौ १, ५१९; –मम् ऋ ८, २३, १०; –मा ऋ ७, ७५, १; ७९, ३.

१अङ्गिरस्-वत्[d]– -स्वतः मै ४, ९,९;–स्वते मा ३८,९; का ३८, २, ३; मै ४, ९, ८; –स्वन्तौ ऋ ८, ३५, १४; –स्वान् ऋ २, ११, २०; ६, १७, ६.

[a]) अपत्य-दृष्ट-कृताऽन्यतमेऽर्थे अण् प्रत्ययस्तत्स्वरश्च (यक्र. पा ४, १, ११४; २, ७; ३, ११६)।

[b]) स्त्रियां ङीप उदात्तनिवृत्तिस्वरेणोदात्तत्वम् (पा ४, १, १५; ६, १, १६१)।

[c]) आतिशायनिकस् तमप् प्रत्ययः। तस्य पित्त्वान्निघाते स्वरः पूर्वावस्थः (पा ५, ३, ५५; ३, १, ४)।

[d]) मतुपो मस्य वत्वे भत्वम् (पा १,४, १९)। स्वरः नापूदि. द्र.।

२अङ्गिरस्-वत्[a] ऋ १, ३१, १७; ४५, ३; ६२, १; ७८, ३; २, १७, १; ३, ३१, १९; ६, ४९, ११; ८, ४०, १२; ४३, १३; खि ४, ९, ३; मा ११, ९$^{३}$; १०; ११; १६$^{३}$; २८$^{२}$; ४७; ५८$^{४}$; ६०$^{४}$; ६१$^{५}$; ६५$^{४}$; १२, ५३$^{२}$; १३, १९; २४; २५; १४, ६; १२; १४–१६; २७; १५, ५७; ५८; ६४; २७, ४५; ३४, १६†; का १२, १, ९$^{३}$; १०; ११; २, ५$^{३}$; ३, १$^{२}$; ४, १०; ५, ९$^{४}$; ११$^{४}$; ६, १; २$^{५}$; ५$^{४}$; १३, ४, ९$^{२}$; १४, २, ४; १०; ११; १५, १, ५; ४, २; ३$^{३}$; ८, ५; १६, ७, १$^{२}$; ६; २९, ६, १; ३३, १, १०†; तै ४, १, १, ३; ४$^{४}$; २, २$^{४}$; ३, १$^{२}$; ५, २; ३$^{२}$; ४$^{३}$; ६, १$^{८}$; २$^{४}$; ३$^{४}$; २, ४, ४$^{२}$; ७, ४; ९, २; ३, ६, २; ४, ३, ३; ६, २; ५, १, २, ४$^{२}$; ५$^{२}$; ५, २, ४$^{२}$¶; ५, ४¶; ६, ३; मै २, ७, १; २$^{५}$; ४; ६$^{२१}$; ११$^{२}$; १५$^{२}$; १६$^{८}$; ८, ७; १४$^{३}$; १३, १४$^{२}$; २०$^{२}$; ३, १, ३$^{३}$; ७¶; ८$^{६}$; ४, ९, १$^{२}$; १५; १६; काठ १, ९$^{३}$; १६, १$^{५}$; ३$^{२}$; ५$^{८}$; ६$^{१०}$; ११$^{२}$; १६; १९, २$^{२}$; ३८ १३; ३९, १; ३$^{३}$; ४$^{४}$; ७; १३; ४०, ३$^{३}$; ५$^{४}$; क २५, २$^{२}$; २९, ८$^{२}$; ३०, ४$^{२}$; ५.

¶अङ्गिरोधा(रस्-धा)मन्[b]– –मानः मै ३, २, ९; काठ २०, ११$^{३}$; क ३१, १३$^{३}$.

अङ्गु*[c]-

अङ्गु-ष्ठ[d]– -¶ष्ठम् तै ६, १, ९, ५; मै ४, ५, ८; –ष्ठाभ्याम् मै ४, ६, ३; –ष्ठेन मै ४, ५, ८; काठ १३, ७; २४, ५; क ३७, ६.

अङ्गुरि[e]– -रिम् शौ ४, १८, ६; ५, ३१, ११; २०, १३६, १३. [°रि- अन्°, पञ्च°, सु°]

अङ्गुल[f]- दश°, द्वि°

अङ्गुलि[g]– -लयः मा १८, २२; का १९, ७, ४; तै ४, ७, ९, १; ¶६, १, १, ८; ९, ५$^{२}$; ७, ३, ९, २¶; ¶मै १, १०, १३; २, ११, ६$; ३, ६, ३; काठ १८, ११; २३, १; ३३, ३; ८; ३६, ७; ३८, ४; क २८, ११; ३५, ७; –लिभिः तै ६, १, ९, ५¶; शौ ४, १४, ७; –लिभ्यः शौ २, ३३, ६; २०, ९६, २२; पै ४, ७, ४; –लिम् मै ४, ५, ८¶; पै ५, २४, ५; –लीः मा २०, ६; का २१, ७, ५; मै ३, ११, ८; काठ ३८, ४[h]; शौ १०, २, १; पै १६, ५९, १[h]; १४७, ८[h]; १४९, १[h]; –ल्या ¶मै १, ८, ५; ४, ५, ८. [°लि- अन्°, पञ्च°, मृदु°]

अङ्गुली*[i]– -लीभिः पै १६, ९८, १०.

अङ्गुलि-काण्ड[j]– -ण्डम् काठ २६, ४; क ४१, २.

अङ्गुलि-मात्र[k]– -त्रम् मै ३, ९, ४$^{२}$.

१अङ्ग- २अङ्ग- √अङ्ग् द्र.

३†अङ्ग[l] ऋ १, १, ६; ८४, ७–९; १९; [११८, ३; ३, ५८, ३]; १६४, ७; २, ४१, १०; ३, ३३, ११; ५, ३, ११; [६, ४४, १०; ८, ८०, ३]; ५०, १०; ५२, ३$^{३}$; ७२, ५; ७, २०, ९; ५६, २; ९१, १; ८, [६, २६; ७, २]; २४, १२; १५; ९६, १०–१२; ९, १०८, ३; १०, ४, ४; ४२, ३; ५४, ४; ६४, १३; ७९, ४; ८६, ७; १२९, ७; १३१, २; १४६, ४$^{२}$; १४९, ३; खि ४, ७$^{२}$, १०; मा ६, ३७; १०, ३२; १९, ६; २३, ३८$; का ६, ८, ८; ११, १०, २; २१, १, ५; २५, ७, ६$; तै १, ८, २१, १; ३, १, ३, २; ५, २, ११, २; मै १, ४, १२¶; ११, ४; २, ३, ८;

---

a) क्रियातुल्यत्वे गम्ये, इवार्थे वा वतिः । भत्वम् । प्रत्ययस्वरः (पा ५, १, ११५; ११६ पावा १, ४, १८)।

b) बस. पूर्वपदप्रकृतिस्वरः ( पा ६, २, १ )। उप. यद्र. ।

c) तु. अङ्कु- इति । तद्वदौणादिकेन उ-प्रत्ययेन निष्पाद्यताम् ।

d) सोपपदात् √स्था+कः (पा ३, २,४) । थाथादि-स्वरः षत्वं च ( पा ६,२,१४४; ८, ३, ९७ ) ।

e) अङ्गुलि- इत्यत्र टि. द्र. ।

f) औणादिक उर(→ल)च् प्र. (तु. पाउ १, ३८) ।

g) उलिः प्रत्ययः ( पाउ ४, २) । प्रत्ययस्वरेण मध्योदात्तत्वम् । यत्तु शक. प्रत्ययं चितमनुमेने तत् संस्कारच्युतमिव स्याद् अन्तस्वरापत्तेः । रलयोरभेदे अङ्गुरि- इति गद्र. । एवं ङीषन्तम् 'अङ्गुली-' इति अद्र. ।

h) स्वराङ्कणाभावादिदं विवेक्तुं दुःशकं यथैतद् रूपं ह्रस्वान्तस्य प्राति. भवत्युताहो दीर्घान्तस्येति ।

i) 'कृदिकाराद्' (पाग ४,१,४५) इति ङीष्-विकल्पः । तेन चान्तोदात्तत्वमपि द्र. ।

j) षतस. । उप. यद्र. ।

k) प्रमाणे मात्रच् (पा ५, २, ३७) । तत्प्रयोजित-मन्तोदात्तत्वं च (पा ६,१,१६३) ।

l) अम् इति द्विप्रनाम स्वरादिषु पठितम् । तत्पूर्वकाद् √गम् इत्यतो डे प्रत्यये निष्पन्नस्य शब्दरूपस्याव्यय-त्वेनोपचारः द्र. । गस. उपप्रस्व. (पा ६, २, १३९) ।

३, ११, ७; १२, २; ४, ८, ९; १२, १; १४, २; काठ १२, ९; १४, ३; ३७, १८; ५०, ५; कौ १, २००; २४७; ३८९; ५८३; २, २८८; ६९१–६९३; ८६१; १०७३; जै १, २१, ७; २६, ५; ४३, ९; ५९, ६; ३, २४, ४; ५६, १८–२०; शौ $१, १६, २; $२, ३, २[२]; $५, ११, ५; ७; ९, १४, ५; $११, ६, २१; $१३, ३, २१; २०, २०, ५; ५७, ८; ६३, ४–६; ८९, ३; १२५, २; १२६, ७; पै १, ८, २; ६, ४, १०; ८, १, ४; ५; ७; १६, ६६, ७†; अङ्गो[a] शौ ६, ६०, २; पै ४, २०, ७[2b].

अङ्गार-, अँङ्गारि-, अङ्गिन्-, अङ्गिर-, अङ्गिरस्-, अङ्गीन-, अङ्गुँ-, अङ्गुरि-, अङ्गुल-, अङ्गुलि-√अङ्ग् द्र.

?अङ्गूषँ[c]-

अङ्गे-ष्ठा-, अङ्ग्य- √अङ्ग् द्र.

अङ्गोष[d]-

अङ्गोषिन्[e]– -‡[f]षिणम् कौ १, ५२८; २, ४६७; ७५८; जै १, ५४, १०; ३, ३५, २.

अङ्गोषि[*](य>)या[g]– -याः पै ६, ३, ११.

√अङ्घ्[h]

अङ्घ्रि[i]– -ङ्घ्रिणा मा २, ८; का २, २, २; काठ १, १२; ३१, ११; क १, १२; ४७, ११[j].

अङ्घारि[k]– -रिः मा ५, ३२; का ५, ८, २; तै १, ३, ३, १; मै १, २, १२; काठ २, १३; –०रे मा ४, २७; का ४, ९, ४; तै १, २, ७, १; मै १, २, ५; ३, ८, १०; काठ २, ६; क १, १९.

?अङ्नार-

?आङ्नार[l]– -रः काठ २२, ३.

√अच्[m], अप°, आ°, उद्°, वि°

अचत्[n]– -चतः मै २, ७, १‡[o].

अ-चक्र,क्रा[p]– -क्रम् ऋ १०, १३५, ३; –क्रया ऋ ४, २६, ४; १०, २७, १९; –क्रे ऋ १, १२१, ११; –क्रेभिः ऋ ५, ४२, १०.

¶अ-चक्रवृत्त,त्ता[q]– -त्तम्[r], –त्ताम् काठ ६, ३; क ४, २.

अ-चक्रिवस्[r]– -चक्रुषे शौ ५, १४, ९; पै २, ७१, १.

अ-चरत्[r]– -रन् ऋ ३, ५६, २.

अ-चरन्ती– -न्ती ऋ १, १८५, २; मै ४, १४, ७†.

अ-चरम[r]– -माः ऋ ५, ५८, ५; मै ४, १४, १८†.

अ-चराच(र→)रा[r]– -रा काठ १२, २.

अ-चर्मक[s]– -काय तै ७, ५, १२, २; काठ ४५, ३.

---

[a]) 'अङ्ग'इत्यस्योत्तरेण'उ'इति निपातेन निहतैनैकीभाव इवात्राऽऽपन्नः। अथवा 'अङ्ग' इत्यस्य 'अर्यमन्' इत्यनेन, उनश्च तदुत्तरेण नु-निपातेनाऽर्थः सम्बन्धः द्र.। अत्र यत् सा. उन उत्तरम् अनुं पपाठ तदसत्। 'नु' इत्यत्रत्यं टि. अद्र.।

[b]) एतद्वन्मन्त्रार्धोऽविस्पष्टार्थपदो भवति। तु. दिविश्वस्- दिवि-स्तन्- इत्यत्रत्ये टि.।

[c]) आङ्गूष- इत्येतद्व्युत्पत्तावौपयिकी कल्पनेयं तत्रैव विस्तरेण द्र.।

[d]) आङ्गूष- इत्यनेन समानन्यायत्वात् तदीयनिगमानां च भूरिसंख्याकत्वादस्य वैयुत्पत्तिकः संकेतोऽपि तत एव सुग्रहः द्र.।

[e]) मत्वर्थीय इनिः (पा ५,२,११५)। प्रत्ययस्वरः।

[f]) 'आङ्गूषाणाम्' इति ऋ (९,९०,२) पाभे.।

[g]) इदमाद्यर्थेषु घ→इयः प्र. द्र. (तु. पा ४,४,११७) तु. त. स्तोत्रिय- इति। रू. अप्रसिद्धेरेव अङ्गुष्ठ->?अँङ्गोष्ठ-इत्यस्मादिव प्राति. भ्रान्त्युत्पादितात् प्र.मूको. भवतीति द्र.। अङ्गोष- अङ्गोषिन्- आङ्गूष- आङ्गूष्य- अङ्गोषियँ- इत्यादिषु प्रत्ययकृतभेदे सुभेदेऽपि मूलत एक एव धातुरभिक्लृप्त इति सम्भाव्यत इत्यपि द्र.।

[h]) यतुटि. √१अंह्, √अघ्, √२अह्।

[i]) क्रिन् प्र. नित्स्वरश्च (पाउ ४,६६; पा ६,१,१९७)।

[j]) 'अङ्घ्रिण धिष्णू' इति सुपा.। तु. मा २, ८। एवं 'विष्णु->-०ष्णो' इत्यत्र टि. च।

[k]) पपा. अनवगृहीतः। 'अंहसः अरिः' इत्येवं व्याचक्षाणौ उ. च म. च पूर्वपदप्रकृतिस्वरमधिकृत्य चोद्यौ भवेताम्। तन्मताभ्युपगमस्तु दासीभारादित्वाच् शक्योऽभिसंधातुम्। वस्तुतस्तु संशीतिबहुलत्वान्नेदमित्थमिति वक्तुं पार्येत। भूयान् व्युत्पत्तिविस्तरः वैश. द्र.। अपपाठान्तरयोः कृते ?अंहारि- इति अङ्गारि- इति च गद्र.।

[l]) सस्थ. 'अट्णार-' इत्यत्र वैयुत्पत्तिकं टि. अद्र.।

[m]) √अञ्च् इत्यनेन समानार्थकः यद्र.।

[n]) शतुः शपश्च निघाते धातुस्वरः (पा ६, १,१८६; १, १६२)।

[o]) विशिष्ट इह वाह्वृचः (५, ८१, ३) पाभे.।

[p]) बस. अन्तोदात्तः ( पा ६,२,१७२ )। उप. यद्र.।

[q]) तस.। उप. तृतस. द्र.।

[r]) तस. अव्यय-पूपप्रस्व. (पा ६, २,२)। उप. यद्र.।

[s]) बस. समासान्तः कप् प्र. उसं. (पाग ५,४,१५१)।

?अ-चारुका(क-आस्य>)सन्[a]- -कास्ना शौ २०, ३४, १२.

¹अ-चिकित्वस्[b]- -त्वान् ऋ १, १६४, ६; शौ ९,१४,७; पै १६, ६६, ६.

¹अ-चित्[c]- -चितः ऋ ७, ८६, ७; १०४, १; ९, ९७, ५४; काठ २३,११; कौ २,४५६; जै ३,३४, १४; शौ ८, ४, १; पै १६, ९,१; -चितम् ऋ १०, ८७, १२; काठ ४०, ५$; शौ ८,३, २१; पै १६, ८, १; -चिते ऋ ७, ६१, ५.

¹१अ-चित्त[d]- -त्तम् ऋ १, १५२,५; ६,४६,१२; -त्तात् ऋ ४, ३,१; तै १, ३, १४, १; मै ४, ११, ४; काठ ७, १६; कौ १, ६९; जै १, ७,७; -त्तान् ऋ ३, १८, २; काठ ३५, १४; क ४८, १३.

२अ-चित्त[e]- -त्तम् खि १, ९, ४.

¶अ-चित्तपाजस्[f]- -जाः मै १, ९, १$;५; काठ ९,९$;१२; क ८, १२.

¶अ-चित्तमनस्[f]- -नाः मै १,९,१$; ५; काठ ९,९$;१२; क ८, १२.

अ-चित्ति[g]- -त्तिः ऋ ७, ८६, ६; -¹त्तिभिः ऋ ४, १२, ४; मै ३, १६,५; काठ २, १५; -त्तिम् ऋ ४, २, ११; मा २७,६; का २९, १, ६; तै. ४, १, ७, ३; ५, ५, ४, ४¹; मै २, १२, ५; काठ १८, १६; ४०,५; क २९,४; -¹त्ती ऋ ४, ५४, ३; ७, ८९,५; तै ३, ४, ११, ६; ४, १,११,१; मै ४, १०, ३; १२, ६; काठ २३, १२; -त्तीः शौ २, ६, ५; -त्त्या शौ ५, १७, १२-१७; ३०, ३; ३१, १०; ६, ५१, ३; १२, ४, ५१; ५२; पै ९, १३, ३; १५, ८; १६, ३७, ७.

अ-चित्र[e]- -त्रम् ऋ ६,४९, ११; त्रे- ऋ ४, ५१, ३.

अ-चिष्णु[h]- -ष्णुः मा २०, ४४; का २२, ४, ९; मै ३, ११, १; काठ ३८, ६; -ष्णुम् खि ५, ७, १, १०[i]; मै ४, १३, २; काठ १५, १३.

अ-चेतस्[e]- -तसः ऋ ७, १८, ८; -तसम् ऋ ७, ६०,६; ७; -ताः ऋ १, १२०, २.

अ-चेतान[g]- -नस्य ऋ ७, ४, ७.

अ-चोदत्[j]- -दते ऋ ५, ४४, २; खि ४, ९, ५.

¹अ-चोदस्[e]- -दसः ऋ ९, ७९, १; कौ १, ५५५; जै १, ५७,२.

√*अच्छ्, ?अच्छे[k] पै १, ११२, २; अश्(?च्)छतु, पै १६, १५२, ३[l].

---

यद्वा वैकल्पिकश्चरितार्थयितव्यः ( पा ५, ४, १५४)। कब्-अभावनिगमाश्च मृग्याः । कप्य् उपान्त्यस्वरे प्राप्ते (पा ६,२,१७४) 'कपि पूर्वम्' (पा ६, २, १७३) इत्युक्तः स्वरः पूर्वविप्रतिषेधेन लब्धावसरः द्र. ।

[a]) सा. आधारीकृत्य कल्पितः पाठः द्र.। अतः सर्वथा स्वरूपतश्च स्वरतश्च विमर्शविशेषोऽपेक्षितो भवति । तु. पाराडु. पाभे. । तस. नञ्-स्वरः (पा ६,२,२)। उप.बस.द्र.।

[b]) तस. नञ्-स्वरः । उप. √कित्+क्वसुः प्रत्ययः । √चित् √कित् इत्येतयोरैक्यमिवातिष्ठमानाः पाश्चात्याश् √चित् इत्यस्मादेव मौलिकत्वेन प्रतिपन्नादत्र चान्यत्र चैवंजातीयेषु प्राति. निष्पत्तिमाहुः ।

[c]) बस. अन्तोदात्तः ( पा ६, २, १७२ )। उप. √चित्+भावे क्विप् । यत्तु कैश्चित् √१,२चि इत्यतोऽपि निष्पत्तिरुक्ता भवति तद्विस्तरः साक्षेपः वैश. द्र. । एवं तु. 'चित्-' इत्यत्रत्यं टि. अपि ।

[d]) तत्पुरुषबहुव्रीहिसमासाभ्याम् औभयविध्येन विग्रहे सम्भवति क्रमशस् तस. 'परादिश्छन्दसि' ( पा ६, २, १९९) इत्यनेन, बस. 'नञो जर-' ( पा ६, २, ११६ ) इत्यत्रोपसंख्यानाद् वा स्वरो व्याख्यातव्यः ।

[e]) बस. अन्तोदात्तः (पा ६, २, १७२) । उप. यद्र. ।

[f]) तस. नञ्-स्वरः (पा ६,२,२) । उप. बस. यद्र. ।

[g]) तस. स्वरः नापू. द्र. । उप. यद्र. ।

[h]) परोक्तनिष्पत्तिकं प्राति. । √अच् इत्यत इत्यर्वाञ्चः । नञ्पूर्वाच् √चि इत्यस्माद् वा, √अञ्च् इत्यस्माद् वेति उ. च म. च । 'अ-पाक-' इति नञ्-तत्पुरुषस्य साहचर्यादत्रापि तस. एव तु संभाव्येत ।

[i]) अ-चिष्टम्' इति मुपा. ।

[j]) तस. नञ्-स्वरे (पा ६, २, २) प्राप्ते अन्तोदात्त उसं. (तु. पा ६,२, १६०) । उप. <√चुद् द्र. ।

[k]) अविस्पष्टपदभूयिष्ठं स्थलं द्र. । यथानिर्देशं 'वा' इति 'ते' इति पृथक् पदे इव भवतः । तत ऊर्ध्वं 'तानि' इति 'अच्छे' इति द्वे पदे स्यातामुताहो एषां चतुर्णां पदानां स्थाने 'वाते तान् यच्छे' इति पदत्रयी स्यादिति सन्देहो भवति। प्रथमस्य कल्पस्यापेक्षया द्वितीयः साधीयान् प्रतीयते । अर्थस्य स्फुटत्वविशेषसौकर्यात् । एवं च सति मुपा. यथावत् संशोधनीयः । कल्पद्वयापेक्षया √अच्छ्, इति √यच्छ् इति च विकल्पकल्पने तत्त्वं द्र. ।

[l]) अविस्पष्टपदसङ्कुलः मुपा. द्र. । अभिगमनार्थे मन्त्रस्वारस्यप्रतिभानात् तस्मिन्नर्थे यनि. धातुः सुकल्पः स्यात् । तस्मिन्नेवार्थेऽयं धातुराधुनिक्यां पश्चिमोत्तरभारतीये रावलपिण्डी-प्रदेशे प्रवर्त्तमानायां भाषायां लभ्यत इति च भूयस उक्तोपबृंहणाय द्र. ।

१अच्छ– -च्छम्[a] क ३५,७.
अच्छु[b]– -०च्छवः पै २,९१,२.
२अ॒च्छ, अ॒च्छा[c] ऋ १,२,२;४४,४; १०१, ८; १०५, १४; १२९, ५; १३०, १; ५; [१३२, ५; १३९, १]; १६३, १३; १६५, ४; १३; १४; १६७, २; १७३, ११; १८६, ६; २, १९, २; ३; ३९,१; ३,१,१; ४, ३; १५, ५; १९, २; [३३,५; ६, ४९, ४]; [३५,१; (७,२३,४)]; ३९,१[d]; ५४, ५; ६१, ५; ४, १, २; १४, १; २०, २; २१, ४; २४,८; २९,४; ३४, १; ३; ३८,५; ४४,५; ४५,७; ५,१, १; ४; ४२, १५; ४५,९[e]; ५२, १४; १५;५९, ६[e];७४,३; ७६, १; ६, ६, १; १६, १२[f]; ४४[g]; ३०, ४; ३२, ४; ३७, ३; ४१, १; ४४, १५; [४७, ७; ८, ७१, ६; १०, ४५, ९]; ५१, ३; ६७, २; ७, १, १८;१८,४[h]; २४,३; ३४,२०[i]; ५७, ७[j]; [९०, १[k]; (१,१३५,२; ८, ८२,५)]; ९२, ३[l]; ८,२,२८; ५,३३; १६,१०; २२,४; ३३, १३[m];४८,६;९३, २३; [१०२, ७; (५, ७, १)]; १०३, २; ९;९, [(३८,१);५७, १]; ६४,१६; ६६, [११;१०७, १२]; [१२; (६४, १७)]; ६८, १[n]; ६९,९[२]; ८१, २[o]; ९१, १; ९५,३; ९७,८; २५; १०८, २; १०, १, ७; २६, १; ३०, १;५; ३२,५; ४५,९; ११२,४;१४३, ५; खि १, ४, ८; २, ७, ४; ३, १०, १,६; †मा १२, २६; १५, २४; २०,४९; २७,२७[l]; २९, २४; ३३, ५५; ७८; †का १३, २, ९; १६, ५, ५; २२, ५, ३; २९, ३, ४; ३१, ३, १३; ३२, ५, १; ६, ९; †तै १, १, २, १$; ५, ६, ३; २, २, १२, ८; ४, २,२,३; ३, १३, ६; ४,४,२; ६,७,५; मै १, १, २; ६, ४¶; २, ७, ९; १३, ७†; ३, ९, २¶; †४, १, २; १०, १; ६[२]; ११, २; ३[२]; १४, १८; काठ १, २; २, १५; ८,१७; ९,१८†;१०,१२; १६,९; ३१,१; ३५,२; ३८, ७; ४६, ३; क ४१, २; ४७, १[२];¶; †कौ १, २१; ७३; १५१; ४५९; ४६१; ५१४; ५४३; ५४४; ५६३; ५६६; २, ८; ९; १२; ४३; ११७; २२९; २९६; ४६७; १०९६; ११०२;

[a]) एवं किल मूलकोशीयसाद्ध्यनिभृतो मुपा. भवति। शाखान्तरीयायाऽन्यप्रकारकाय पाठाय तु '?अच्छंवषट्कारम्' इत्यत्र टि. द्र.।

[b]) कर्तर्य् डः प्रत्ययः (तु. पा ३,२,१६८)।

[c]) आद्युदात्तत्वं सांहितिको दीर्घश्च ( फि ४, १२; पा ६, ३, १३६)।

[d]) 'आ॒…जिगाति' इति क्रियया योगं वष्टि PW. किन्तु मतेरागमनस्य, इन्द्राभिमुख्यार्थविशिष्टत्वस्यात्र प्राधान्येन श्रावयितुमिष्टत्वात्तथात्वस्य चासमासाङ्गभूतेनैव सुतरां वक्तुं योग्यत्वात् कर्मप्रवचनीयता समुचिता द्र.।

[e]) तु. नापूटि.। अत्राप्याभिमुख्यार्थस्य श्रावणे मन्त्रस्वारस्यात्तस्य च कर्मप्रवचनीयतायोगेन सुसाधत्वात्तथात्वं निरदेशीति दिक्। गतित्वार्थम् तु. GW. PW.।

[f]) उत्तरेण 'विवाससि' इति क्रियापदेन योग इति सा. GW. च। तु. शब्रा १,४,१,२७; तैब्रा. ३,५,२,२.।

[g]) GW. गतिसंज्ञमाहोत्तरेण 'याहि' इति क्रियापदेन युक्तम्। तन्न। तस्य तदुत्तरेणाऽऽङा विशिष्यान्वयप्रतीतेः। तु. सा.।

[h]) 'आ॒…गन्तु' इति क्रियया योग इति GW.।

[i]) 'आ॒…गमन्ति' इति क्रियया गतियोग इति GW.।

[j]) 'आ॒…जिगात' इति क्रियया गतित्वयोगार्थम् तु. GW. PW.। पार्थक्येनान्वयार्थं च तु. सा.।

[k]) पूर्वेण 'याहि' इति क्रियापदेन युक्तमिति सा.। तद् विमृश्यं भवति। तथात्वेऽप्याङ्पूर्वत्ववतोऽर्थस्य प्रकरणापेक्षितस्याक्षेपसाध्यत्वाद् व्यर्थप्रयासादित्यर्थः। तु. ऋ ६, १६, ४४।

[l]) गतिं पूर्वेण 'यासि' इति क्रियापदेनाभिसम्बद्धं सा.आह 'प्र' इति स्पष्टं श्रावितमुपसर्गं तु स विस्मरतीति चित्रम्।

[m]) गतिरिति सा. GW. च। उत्तरेण 'शृणवत्' इति क्रियापदेन योगात्।

[n]) प्र…√स्यन्द् इत्यनेन गतित्वेन योग इति GW. MW.च। शीघ्रगमनमात्रे धेनुभिरौपम्यस्य श्रूयमाणत्वात् प्रस्यन्दाऽऽस्यन्दनयोर्यथा मन्त्रस्वारस्यं भवति न तथा देवम् अच्छप्रस्यन्दने, अथवाऽच्छाऽऽस्यन्दने। अतो धात्वर्थमात्रद्योतिकायामकर्मिकायामिव क्रियायां तद्द्वारा कर्तुरीप्सितलक्ष्यसमर्पणार्थं देवं प्रति सा क्रिया प्रवर्त्तेत इत्यात्मको वाक्यपूर्त्तिविशेषकरो नूतन इवाऽऽकारविस्तरः द्र.।

[o]) तु. नापूटि.। तत्रोक्तदिशाऽत्रापि मुख्यायाः सोमकर्तृकायाः क्रियायाः शीघ्रगतिमात्रसमर्पणे निदर्शनं ज्ञापकीकृत्याऽकर्मको योगः द्र.। ततश्च 'कलशान्… अच्छ' इत्याकारक आनुषङ्गिको विस्तर इत्युक्तं भवति।

१११९; †जै १, ३, १; ८, १; १६, ७; ४८, ३; ७; ५३, ४; ५५, १०; १२; ५७, ८; ३, १, १०; ११; २, ३[d]; १२, ४; २०, १३; २४, १२; ३५, २; ५३, ७; ८; ५९, २; ४, ५, ३; ७, ५; शौ ६, ३९, २; ११, १, २; १३, २, ४६; २०, १७, १; ४६, १; १४३, ५†; पै १६, ८९, २†.

अच्छ √द्रु, अच्छ···द्रवताम् ऋ ३, १४, ३.

अच्छ √धन्व्, अच्छ···धन्वाति ऋ ३, ५३, ४.

अच्छ √नक्ष्, †अच्छ...नक्षते ऋ ६, २२, ५; शौ २०, ३६, ५.

अच्छ, अच्छा √नी, †अच्छा··· नयन्ति ऋ ९, ८७, १; कौ १, ५२३; २, २७; जै १, ५४, १; ३, ३, ६; अच्छा···नयतु ऋ ४, १, १०; †अच्छा···नयन्तु ऋ १, ४०, ३; मा ३३, ८९; ३७, ७; का ३७, १, ७; मै ४, ९, १; कौ १, ५६; जै १, ६, २; अच्छ··· नयतम् ऋ २, ३९, ५; अच्छा··· नयत[a] ऋ ५, ५५, १०.

†अच्छ···नेषि ऋ ८, १६, १२; शौ २०, ४६, ३; अच्छ···नेषत् ऋ १, १४१, १२.

अच्छ, अच्छा √या, ¶अच्छयाति तै ६, १, ९, ३[2]; ४; अच्छ···याति ऋ १, १२३, ४; ९, ९६, २; अच्छा···याथः ऋ ३, ३३, २; अच्छयाहि ऋ १, ३१, १७; †अच्छा···याहि ऋ ७, ९, ५; २३, ४; मा ३३, १८; ७०; का ३२, २, १; ६, १; मै ४, १४, ११; कौ २, ७३४; शौ २०, १२, ४; अच्छा··· याहि ऋ २, १८, ७; ९, ९७, ६.

अच्छा···अयासम् ऋ ३, ३३, ३.

अच्छा √गम्, अच्छागच्छति ऋ १, ४१, ६; अच्छागमेम ऋ ४, ५, १३.

अच्छा···गन्तु ऋ ५, ४३, ८; अच्छा···गन्तम् ऋ १, १५१, ७.

अच्छा √गा, अच्छा···गासि ऋ ५, २५, १.

अच्छाजिगाति ऋ १०, ४७, ६; अच्छा···जिगाति ऋ १०, ६, ४; †अच्छाजिगासि ऋ ३, २२, ३; मा १२, ४९; का १३, ४, ५; तै ४, २, ४, २; मै २, ७, ११; काठ १६, ११; क २५, २; अच्छा···जिगासि पै १, ५१, ३; अच्छा···जिगातम् ऋ २, २४, १२.

†अच्छा···गात् ऋ १, १०४, ५; ३, ३१, ६; मा ३३, ५९; का ३२, ५, ५; मै ४, ६, ४; काठ २७, ९; †अच्छागुः ऋ ३, ४२, ३; शौ २०, २४, ३; अच्छा ···गाः ऋ ४, १६, ९.

अच्छा √चर्, अच्छा···चरन्ति ऋ ३, ५७, ३; †अच्छा···चरन्ति ऋ ८, ६०, २; कौ २, ९०३; जै ४, २५, ५; शौ २०, १०३, ३; अच्छाचरामसि ऋ ९, १, ५.

अच्छा √दी, अच्छादीद्ये[b] ऋ ३, ५५, ३.

अच्छा √नश्, †अच्छा नक्षि ऋ ५, २४, २; मा ३, २५; १५, ४८; २५, ४७; का ३, ३, १७; १६, ५, ३०; २७, १५, २; तै १, ५, ६, ३; ४, ४, ४, ८; मै १, ५, ३; काठ ७, १; क ५, १; कौ २, ४५८; जै ३, २४, १६.

अच्छा √नू, †अच्छा···अनूषत ऋ १, ६, ६; १०, ४३, १; कौ १, ३७५; जै १, ३९, ६; शौ २०, ७०, २.

अच्छा √वच्, अच्छा···विवक्ति ऋ ७, ७२, ३; अच्छाविवक्मि ऋ ३, ५७, ४; ४, २०, ५; अच्छा ···विवक्मि ऋ ७, ६७, १; अच्छा-वोचे ऋ ६, ५१, ३; अच्छा···वोचेः ऋ ७, ९३, ७; अच्छा-वोचेय ऋ १, १२२, ५; ४, १, १९; †अच्छा-वोचः ऋ ८, ७५, २; तै २, ६, ११, १; काठ ७, १७; अच्छा···वोचः ऋ [६, २, ११; १४, ६; (१५, १५)]; खि २, ६, १, १९; ७, ५; ८, ५; मै ४, ११, ६; अच्छा-वोचम् ऋ ५, ४१, १४. †अच्छा···ऊचिषे ऋ ३, २२, ३; मा १२, ४९; का १३, ४, ५; तै ४, २, ४, २; मै २, ७, ११; काठ १६, ११; क २५, २. अच्छा···वच्यते[c] ऋ १, १४२, ४.

[a]) अभिनयननिर्णयनयोर् वस्त्योऽहतिविषययोः प्रतियोगित्वेन श्रवणे मन्त्रस्वारस्याद् गतित्वकल्पना साधीयसी द्र.। कर्मप्रवचनीयतायोग इति सा.।

[b]) पूर्वपठितेन 'शुभि' इति पदेन कर्मप्रवचनीयतया योगमाह सा.। तदसारमिव भवति। तस्य पदस्य कर्मत्वायोग्यत्वात्। वैवा. अन्वयश्च द्र.।

[c]) कर्मणि यक् (पा ३, १, ६१) द्र.। यश्चात्र सम्प्रसारणाभाव इव प्रतीयते तदर्थं पाप्र. सम्प्रसारणे कृते 'वाच्छन्दसि' (पा ६, १, १०६) इति पूर्वरूपविकल्पे यण् द्र.। मतेरच्छोक्तिसाहचर्यस्य श्रुतौ प्रसिद्धत्वात् (तु. ऋ १, ६१, ३ प्रमृ.) अच्छा-वञ्चनस्य चाश्रुतपूर्वत्वाद् अच्छा √वञ्च् इति याऽर्वाक्तनी कल्पना भवति (तु. MW.)

¶अच्छा-वाक्[a]- -०क खि ५, ७,५,१०४; -कः तै ७,१,५,५; -कम् मै ३, ९, ८; काठ २६, ९; क ४१, ७; -कस्य मै ४, ४, ८; काठ ३४, १६; -काय तै १, ८, १८, १; मै ४, ६,५[२].

¶अच्छावाक-साम्[b]- -मम् तै ५, ४, १२, ३[२].

¶अच्छावा(क्य>)क्या[c]- -क्या मै ४,४,८; काठ २६,९; क ४१, ७; -क्याः मै ३, ९, ८.

†अच्छो(च्छ-उ)क्ति[d]- -क्तिभिः ऋ १,६१,३;१८४,२; ८,१०३, १३; शौ २०, ३५, ३; -क्तौ ऋ ५, ४१, १६[२].

१अच्छा√वद्, अच्छावदामसि मा १६, ४; का १७, १, ४; तै ४, ५,१,२; मै २, ९, २; काठ १७, ११; क २७, १; शौ १९,२,३; पै ८,८,९; १४,२,६; १५, १५, ४; अच्छा···वदामसि ऋ ८, २१, ६; अच्छावदामः ऋ १०, ८८, १४; †अच्छावद ऋ १, ३८, १३; ५, ८३, १; ८, ५१, ३; १०, १४१, १; खि ३, ३, ३; मा ९, २८; का १०, ५, ४; तै १, ७, १०, २; मै १, ११, ४; काठ १४, २; क २९, २; शौ ३, २०, २; पै ३, ३४, ३; अच्छा ···वद पै ७, १२, ७.

२अच्छा( च्छ-आ )√वद्, अच्छा(च्छ-आ)वदामि शौ ६,५९, ३; अच्छावदामसि शौ ६,१४२, २; अच्छा(च्छ-आ)वदामसि शौ ७, ३९,३; ८, ७,१; १०, १०, ४; १२, १,२७; पै १, २९, १; ३, २९, १; ५, १, ६; ७, १२, १; १६, १२, १; १०७, ४.

अच्छा√वृत्[e], अच्छा···ववृतीय ऋ १, १८६, १०.

अच्छा√सृ, अच्छा···असरत् ऋ ९,९२,२; †अच्छा···असरः[f] ऋ ९, ११०, ४; कौ २, ८५८.

अच्छा√ह्वे

अँच्छाहूत- अच्छा···हूतः ऋ ४, १५, ७.

१अच्छे(-च्छ, च्छा√इ), ¶अच्छैति तै २, ४, ९, ३; १०, ३; ५, २, ६; ५, १, ८, १; ६, ३, ३, १[२]; ४, ३, ३[२]; मै २, १, ८; ४, ८[३]; ४, १, २; ५, २[४]; काठ १०, ११; ११, १०; २४, ३; २६, ३; ३१,१; क ३७, ४; ¶अच्छैति मै ३, ७, ६; ४, ५, २; †अच्छ···एति ऋ १०, ३०, ६; काठ १३, १६; अच्छा···एति ऋ २,३६,६; ७,३,३; मा २७, १४; २९,२,४; तै ४, १, ८, १; मै २, १२,६; क २९,५; शौ ५, २७, ४; पै ९, १, ३; अच्छ-यन्ति मै ३,७,८[२]; काठ २४,६[२]; क ३७, ७[२]; अच्छ···यन्ति ऋ ५, ४७, ६; काठ १८, १७; †अच्छा···यन्ति ऋ १, ७१, ३; ७, १०, ३; मै ४, १४, ३; अच्छा···एषि‡[g] कौ २, ५७१; जै ३, ४६, ६; अच्छ···एमि तै २, २, १२, ३; अच्छेमः मा ११, १६; का १२, २, ५; तै ४, १, २, २; ५, १, २, ४; मै २,७, २; ३, १, ३; काठ १६, १; १९, २; क २९, ८; अच्छा[२]··· एतु ऋ ७, ३६, ९; †अच्छा··· यन्तु ऋ ८, २३,१०; ७१,१०; कौ २, ९०४; जै ४, १४, ६;

साऽत्त्वोदत्तमैव भवति। सुजिह्व- इत्येतदप्याऽऽराध्य-विशेषणत्वेन श्रूयमाणम् अच्छोक्तेरेवाऽऽराधनौपयिकतां संकेतयेद् आराध्यप्रियत्वादिति दिक्। अच्छेति कप्र. इति सा. इहानुसंधेयः।

[a]) गत्युत्तरकृत्-प्रकृतिस्वरः (पा ६, २, १३९)। उप. अण् प्रत्ययः। कृत्वार्थे च न्यङ्क्वादिगण उसं. (पा ७,३, ५३)। यत्तु भा. (तै १, ८, १८, १) घ-प्रत्ययान्तमाह तन्मृग्यमूलम्। करणाधिकरणयोरेव तद्भावात्।

[b]) चतस.। शेषम् अग्निष्टोम-साम्- इत्यत्र टि. द्र.।

[c]) तस्येदमित्यर्थे यति तित्त्वात्स्वरितत्वम् (तु. पा ४, ३, १२१; ६,१,१८५)।

[d]) कस. अव्यय-पूर्वपदप्रकृतिस्वरे (पा ६,२,२) प्राप्ते तद्बाधस्वरूपे गत्युत्तरकृत्-प्रकृतिस्वरे च (पा ६,२,१३९) प्राप्ते गतिस्वरः (पा ६,२,५०) प्रकृत्या भवति। यत्तु सा. (ऋ. १, ६१, ३) कस. इत्येवं विवृणोति, बस. इत्येवं च पूपप्रस्व. समादधाति तद् व्याहतत्वाचाऽलक्षणत्वाच्च दुरन्वयत्वाचातीवाऽप्रमाणम्।

[e]) अभिप्रासौ तात्पर्यम् द्र.।

[f]) तु. ऋ ९, ६८, १; ८१, २ टि. यद्-वैपरीत्येनेह गतित्वयोग आस्थीयते। सनिष्यदत् सोमः सदा वाजाभिमुख्येन सरतीति वाजस्य कर्मणः साक्षात् क्रियये‍प्सिततमत्वेन श्रवणं प्रतिभाति। ततश्चाभिमुख्यार्थस्य गुणभावस्तद्वाचकस्य गतित्वाङ्गीकाराद् आपततीति किमु वक्तव्यम्। कर्मप्रवचनीयतादर्शी सा. द्र.। 'अच्छा-सनिष्यदत्' इति योगमुशन्तौ GW. MW. तु चोद्यौ भवेताम्। भृशार्थस्य पदवृत्तिसमर्पितत्वात् √स्यन्द् इत्यत्र गतित्वयोगस्यान्यथासिद्धत्वाद् वाजप्राप्तावभिमुख्यार्थस्य च विशेषाधायकत्वात् √सृ इत्यनेन गतित्वयोगस्य चरितार्थत्वादिति दिक्।

[g]) '···एति' इति वाह्वृचः (७,३,३) पाभे.।

†अच्छ…यन्तु ऋ ९,१०६,१; कौ २, ४४; ८५८; जै १, ५८, १; ३,१६,५;५९,३; शौ ३, ४, ३; पै ३, १, ३; अच्छेहि मा ४, २०; का ४, ६, ५; तै १, २, ४, २; ४,१,२,२;५,१,२,४; ६,१, ७,७; मै १, २,४; ३,७,६; काठ २,५; २४,३; क १,१७;३७,४; अच्छा…इत ऋ १०, ३०, २; अच्छ…इतन ऋ ३, २९, ९; अच्छ…अयाम ऋ ५, ४५, ५; अच्छैताम् मै ४, ८, १.

अच्छे(च्छ-इ)त[a]- -तः मा ८, ५४; का ९, ७,१; तै ४,४,९,१; काठ ३४, १४.

¶अच्छे(च्छ-इ)त्य[b]- -त्यः मै ३,९,२.

२अच्छे(च्छ-आ√इ), अच्छा(च्छ-आ)यन्ति शौ १२,४,१४; १५.

?अच्छंवषट्कार[c]- -रम् क ३५,७.

¶अ-च्-छन्दस्क[d]- -स्कम् मै ४, ७, ५; ६.

¶अ-च्-छन्दोम[e]- -मम् तै ७, ३,६, २; ८, २; ४, १, २; २, ३; ६, २.

¶अ-च्-छम्बट्कार[f]- -रम् तै १, ५, ७,६; २, ३,६,२;४,११, ५; ५, ११, ४; ६, २, ५; ७, ६; ५, ४, ७, ४; मै १, ५, ५; काठ १२, ४; १३, १०; २३, १; -राय मै २, ४, ५; ३, १०, १; ४, ५, १.

अच्छ(र→)रा[g]- -राभिः काठ ५३,३.

अच्छला[g]- -लाभिः तै ५,७,१३,१.

अच्छा २अच्छ द्र.

अ-च्-छाय[e]- -यः ऋ १०,२७,१४.

अ-च्-छिद्यमा(न→)ना[h]- -†नया ऋ २,३२,४; तै ३,३,११,५; मै ४, १२, ६; काठ १३, ६; शौ ७, ५०, १; -ना शौ ८, २, १; पै १६, ३, १.

अ-च्-छिद्र,द्रा[h]- -†द्रम् ऋ २,३,८; ५, ६२,९; ६, ४९, ७; ८, २७, ९; खि ५, ७, १, ९; तै ४,१, ११, २; मै ३, ६, ३¶; ४, ४, २¶; १३, २; १४, ३; १०; काठ १५, ११; १७, १८; ३१, १४$; -द्रस्य ऋ ६, ४८, १८; -†द्रा ऋ १, [५८,८;(४, २, २; ६,५०, ९)]; १६२, १८; [२, २५, ५; ३, १५, ५]; मा २५, ४१; तै ४, ६, ९, ३; ५, ६,८, ६$; काठ ४०,६[2]$; ४६, ५; -द्राः ऋ १, १५२,१; तै ५, ६, ८, ६; मै १, ३, ३५; ३, २, ८¶; ४,१४,१०†; -द्राम् तै १, ५, ११, ५; मै २, ३, ८[3]; १३, २; काठ १२, ९[3]; पै २, २०, १; -द्रे मा ११, ३०; का १२, ३, ३; तै ४, १, ३, २; मै २, ७, ३; ४, १३,४; काठ १६, ३; २१; १९, ४[2]; क ३०, २[3]; -द्रेण मा १,१२; १६; २०; ३१[2]; ४, ४; १०, ६; का १, ४, १; ५, ७; ७, ४; १०, ३[2]; ४, २, २; ११, ४, २; तै १, १, ५, १; १०, ३; २, १, २; मै १, १, ६; ९; २, १; २, ३,८[3]; ६,८; ३, ६,३¶; ४, ४, २¶; काठ १,५; २,१; १२, ९[3]; १५, ६; २३, १; क १, ५; १३; ३५, ७.

अच्छिद्र-तनु[i]- -नु मै १,१,३.

---

a) अनन्तरगति-प्रकृतिस्वरः (पा ६, २, ४९)। उप. कर्मणि क्तः।

b) क्यपः पित्त्वान् निघाते कृद्-उत्तरपदप्रकृतिस्वरः (पा ३, १, १०९; ६, २, १३९)।

c) समानार्थकप्रकरणसाद्याद् मुपा. चिन्त्यः स्यादिति प्रतिभाति। तु. सस्थ. काठ २३, १ । एवंप्रकारकाय पाभे. तु. गोब्रा २, १, ११ यत्र 'छम्बट् कुर्यात्' इत्यस्य 'अच्छंवषट् कुर्यात्' इति पाभे. उपलभ्यते, एतदर्थं वैप२ छम्बट् √कृ इत्यत्र टि. द्र.।

d) बस. कप् प्रत्ययः समासान्तः (पा ५, ४, १५४)। 'कपि' (पा ६,२,१७३) इति स्वरः द्र.।

e) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

f) छम्बट् √कृ>भावे °कार- इति मूलतः सतः क्रियाविशेषणत्वेन योगाद् द्वितीयैकवचने प्रयोग उताहो णमुलन्तं रूपमव्ययमिति विवेक्तुं दुःशकम्। नञ्-समास-तत्स्वरविशिष्टतयैव श्रुत्युपलम्भात्। नञ्-समासाभावपक्षे 'अच्छम्बट्' इत्यव्ययमुपपदीकृत्य प्रयोगं निष्पादयतां (तु. PW. प्रभृ.) तु प्रथमे कल्पेऽन्तोदात्तः (पा ६, २, १४४) स्याद् द्वितीये चोपोत्तमोदात्तः (पा ६, १, १९३) स्यादिति विवेकः सुलभः द्र.।

g) √ऋच्छ्+अरः। प्रत्ययस्वरेण मध्योदात्तत्वम्(पाउ ३,१३१)। अत्रैतत्-सदृशं प्रातिपदिकत्रितयमपरमपि द्र.। तद् यथा अच्छ- (ल→) ला- इति, ऋक्ष- (ल→) ला- इति, ऋच्छ- (र→) रा- इति च। सर्वाणि चैतानि चत्वारि स्वरूपाण्य् ऋक्षर→रा- इति मूलतः सतः पञ्चमस्य प्राति. प्रादेशिकविकारमात्राणि द्र.। भाषासंक्रमे ऋक्ष-→ऋच्छ-, ऋक्ष→अच्छ- इत्याकारकस्य, र→ल- इत्याकारकस्य च परिवर्तनस्य सुप्रसिद्धत्वान्नेह बहु वक्तव्यं स्यात्। एतानि प्राति. यस्था. द्र.।

h) तस. अव्यय-पूपप्रस्व. (पा ६, २,२)। उप. यद्र.।

i) बस. पूपप्रस्व. (पा ६, २, १)। पूप. तस. नापू. द्र.।

¶अच्छिद्र-त्व[a]– -त्वाय मै २,४,२; ३,८,७;१०,४[2]; काठ १२,१२; २२,१३; २३,१; क ३५,७.

¶अच्छिद्रे(द्र-इ)ष्टका[b]– -का मै ३,२,८.

अच्छिद्रो(द्र-ऊ)ति[c]– -तिः ऋ १,१४५,३.

अच्छिद्रो(द्र-ऊ)ध्नी[d]– -ध्नी ऋ १०,१३३,७.

अ-च्-छिन्न[e]– -न्नः तै १,३,५,१[f]; ९,२; ६,३,९,३; मै १,४,२;७; काठ ७,२; ९; क ५,२; ८; शौ १९,५८,१; पै १,११०,१; –न्नम् मा २०,४३; का २२,४,८; तै १,२,३,३; ६,१,४,९; मै १,४,६¶; ३,११,१; ४,८,८¶; काठ २३,८¶; ३८,६; क ४८,१[2]; शौ ६,१२२,१; पै २,६०,२; १६,५१,५; –न्नस्य मा ७,१४; का ७,६,३; ७,४; तै ३,२,३,१; मै १,३,१२; काठ ४,४; क ३,३; –न्नाः शौ १९,५८,१; पै १,११०,१.

अ-च्-छिन्नपत्र,त्रा[g]– -त्रः मै २,७,१६; काठ १,११; २,७; क २,१; –त्रा काठ, क १,११[2]; –त्राः ऋ १,२२,११; मा ११,६१; १३,३०; का १२,६,२; १४,३,४; मै २,७,६; ३,१,८¶; काठ १६,६; १९,७; क ३०,५.

अ-च्-छिन्नपर्ण[h]– -र्णेन शौ १९,३२,२; पै १२,४,२.

अ-च्-छिन्नरै[i]– -रायः क २,९; –रायम् काठ ३,२.

अच्छु- √अच्छ् द्र.

१अच्छे, २अच्छे, अच्छेत-, अच्छेत्य-, अच्छोक्ति- २अच्छ द्र.

१अ-च्युत[e]– -०त खि ७,३,१; –तः ऋ १,५२,२; १०,१११,३; मा २०,२७; का २२,२,४; तै १,२,६,१; काठ ३४,१¶; शौ ६,८८,३; १९,३३,२; पै १२,५,२; –तम् ऋ १,५६,५; २,३,३; ६,१५,१; १७,५; १०,१७०,३; मै २,७,१६; काठ ३९,३; कौ २,८०५†; जै ४,३,११†; शौ ५,२८,१४; १२,३,३५; पै ५,४०,४; –ता ऋ १,८५,४; १६७,८; २,२४,२; ६,२,९; २२,६; ३१,२; ८,२०,५; १०,६१,१०; तै ३,१,११,६†; शौ ९,२,१५; २०,३६,६†; पै ६,७,४; १६,७७,५; –ताः ऋ १०,११५,४; –तानाम् ऋ ८,९६,४; मा ७,२५; का ७,१०,२; तै १,४,१३,१; मै १,३,१५; काठ ४,५; २८,१; क ३,५; –तानि ऋ ३,३०,४; –¶तेन काठ ६,६; क ४,५.

---

[a]) तस. नञ्-स्वरः (पा ६,२,२)। भावे त्वः। स्वरापेक्षया अ-च्-छिद्रत्व- इति द्र. (पावा ५,१,११९)।

[b]) कस. सामान्यः सामासिकः स्वरः (पा ६,१,२२३)।

[c]) बस. पूपप्रस्व.(पा ६, २,१)। उप. <√अव् यद्र.।

[d]) समासस्वरौ नापूटि. द्र.। उप. ऊधस्→ऊधन् इत्यत्राऽऽदेशपरिभाषा प्राचां भवति (तु. पा ५, ४, १३१)। समानार्थे किंचिद्-भिन्ने मौलिकप्रवृत्तिमती द्वे प्राति.इत्याऽऽकारिकाऽर्वाचां परिभाषा भवति। तदत्र वर्णनप्रकार-मात्रे भेदोऽवधेयः।

[e]) तस. अव्यय-पूपप्रस्व. (पा ६,२,२)। उप. यद्र.।

[f]) 'अ-च्-छिन्नरै-' इत्यत्र टि. द्र.। पामे. च यथायथमनुसंधातव्यो भवति।

[g]) समासस्वरौ एपू. द्र.। उप. बस. द्र.।

[h]) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. कस. द्र.।

[i]) अत्र शाखाभेदेन पामे. द्र.। तद् यथा। तै १, ३, ५, १ 'अ-च्-छिन्नः। रायः' इति पदद्वयं श्रूयते। क. २,९ इत्यत्र काठ ३,२ इत्यत्र च समस्तमेकं पदं यथानिर्देशं श्रूयते। यूपच्छेदनानन्तरं तत्परिवासनकाले यजमानाशीरभिप्राया श्रुतिरेषा द्र.। पदद्वये तावद् 'यथाऽयं यूपो मन्त्रबलेनाऽच्छिन्नो भवति तथाऽस्माकं यजमानं राय उपपद्यन्तां सुवीरश्चासौ भवेद्' इत्याकारिकाऽऽशीर् द्र.। यत्तु सा. अत्र 'रायः' इति द्वितीयाबहुवचनान्तं पदमभिप्रयन् 'रायो धनानि यजमानाय देहि' इत्येवं व्याख्यत्। तदविचारसहम्। 'ऊडिदम्-' (पा ६, १, १७१) इति विभक्तिस्वरापत्तेर्दुर्वारत्वात्। एवमैकपद्ये क. २,९ इत्यत्र 'अच्छिन्ना राय इमं यजमानमुपपद्यन्ताम्' इत्याद्यर्थः द्र.। काठ.३,२ इत्यत्र तु भवति कश्चिद् अपरो विशेषः। पूर्वोक्तशाखाद्वये, अच्छिन्न- इत्यारभ्य नवं वाक्यं भवति। अत्र काठ. त्वावसानिकयोः पदयोर्द्वयोरपि पूर्वयैव त्रिष्टुभाऽथवा तस्या उत्तरार्धेनैकवाक्यताऽन्वयः द्र.। एतस्माच्च भेदाद् द्विव्याख्यानम् एतत् प्राति. द्र.। तथाहि, क. वाक्यपार्थक्यकल्पे नञ्-तस. (छिन्ना रायश्छिन्नरायस्तद्भिन्ना इत्यर्थः) अत्र 'छिन्न-रै-' इत्यन्तोदात्तं प्राति.उप.भवेत्। काठ.पूर्वान्वितवाक्यकल्पे तु छिन्ना रायो यस्माद्' इति प्रथमं बस. 'छिन्न-रै-' इत्याकारकं प्राति. भवेत् ततश्च पूर्ववद् नञ्-तस. अव्यय-पूर्वपदप्रकृतिस्वरो भवेत् (तु. पा ६,२,२)। बस.-पक्षे उपसर्जनह्रस्वत्ववारणार्थम् 'ईयसो बहुव्रीहेः' (पावा ५,४,१५६) इत्यत्र उसं. द्र.। विवेकभूयिष्ठापेक्षो विषयः पुनरपि वैश. प्रभृ. द्र.।

२¶अ-च्युत[a]- -तः तै २, ६,३, ३.
अच्युत-क्षित्[b]- -क्षित् मा ५,१३; का ५, ४, ४; तै १, २, १२, ३; मै १, २,८; ३, ८, ५; काठ २, ९; क २, ३.
अच्युतक्षित्-तम[c]- -मः मा ७, २५; का ७, १०, २; तै १, ४, १३, १; मै १, ३, १५; काठ ४, ५; क ३, ५.
अच्युत-च्युत्[d]- -च्युत् ऋ २, १२, ९; शौ ५, २०, १२; २०, ३४, ९†; पै ९, २४, १२; १३, ७, ९†; -०च्युत् ऋ ६, १८, ५.
अच्युत-तम[e]- -मम् काठ २८, १.
अच्युत-वल्ल(भ->)भा[e]- -भाम् खि २, ६[२], २५.
√अज्, अजति ऋ ६, ६६, ७; अजन्ति ऋ ९, ९१, १; अजामसि पै ११,२, १०; अजतु शौ ८, ६, १९; पै १६, ८०, १०; अजन्तु शौ ८, ५, ५;६; पै १६, २७, ५; ६; अज(>जा) ऋ १, १७४, ३; शौ ४, ३७, २; पै १३, ४, २; १५, २०, ६; अजन् पै ९, १९, २; आजः ऋ ७, ५,६; आजतम् ऋ १,११२, १६; अजेत ऋ १,१२९, ६.
अजुः[f] ऋ ५, ६,१०.
अज्यसे ऋ ६, २, ८. [अनु°, अप°, अभि°, अभ्या°, अव°, उद्°, उप°, निर्°, वि°, सम्°]
अज्- पृतना°
१अज,जा[g]- -०ज शौ ९,५,९;१६; -०ज काठ ७, १३; शौ ९, ५, १५; पै ३, ३८, ९; १६, ९७, १०; ९८, ७; -जः ऋ १, ६७, ३; १६२, २; ४; १६३, १२; २, ३१, ६; ३, ४५, २; ६,५०, १४; ७, ३५, १३; ८, ४१, १०; १०, १६, ४; ६४,४; ६५, १३; ६६, ११; १३४, ६; खि ५, ३, ५; मा ५, ३३; १३,५१; २१, २९; २४, ३२; २५, २५; २७; २९, ३३†; ५९; ३४, ५३†; का ५, ८, ३; १४, ५,५; २३, ४, १; २६, ७, २; २७, १२, २; ४; ३१, ३, १२†; ७, १; ३३, २, १६†; तै १, ३, ३, १; ¶२,१,१,४;५;४,४,१०,३; †६,७,५;८,१,२; ५,५,१,३¶; १२, १; २४, १; ७, १, १,४¶; मै १,२,१२;६,२†; ४¶; २,५, १¶;७,१७; १३,२०;३,११,२; १४,१३;१६,१[२]†; ४, ८, ३¶;

[a]) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. भावे क्तः। आद्युदात्तत्वान्तोदात्तत्वयोस्तात्पर्ये तावदेव साम्यं यावद् अप्रतिहत-प्रतिघातरहितेत्येतयोस्तत्पर्यायभूतयोः शब्दयोर्मध्ये भवति। एवं तयोः सामान्येनाऽनर्थान्तरभूतार्थवाचकत्वे सत्यपि यः सूक्ष्मो भेदो भवति तद्विस्तरः वैश.द्र.।

[b]) सोपपदात् √२ क्षि+क्विप्। कृद्-उपप्रस्व. (पा ६, २, १३९)।

[c]) तमपः पित्त्वान्निघाते स्वरस्तदवस्थः (पा ५, ३, ५५)।

[d]) 'अच्युत-क्षित्-' इत्यत्र व्यु. च स्वरश्च द्र.।

[e]) तस. सामान्य-समासस्वरप्राप्तौ (पा ६, १,२२३) परप्रकृतिस्वरत्वमापवादिकं द्र. (तु. पा ६, २, १२१)। उप. √वल्ल्+अभः प्रत्ययः (पाउ ३, १२५)। तस्य च नित्त्वमाद्युदात्तत्वार्थम् उसं. (पा ६,१,१९७)। अथवा मन्त्रस्य पूर्वार्धे माधव-प्रिया- इति बस. भवतीत्यत्रापि बस. एव संभाव्येतेति मुपा. स्वरतो भ्रष्टः स्यादित्यपि सुकल्पं द्र.।

[f]) 'अजुर्यमुः' इत्यत्रत्यं टि. द्र.।

[g]) कर्त्तरि पचाद्य् अच् चित्स्वरश्च (पा ३,१,१३४; ६, १, १६३)। अपशु-प्रकरणे तत्र तत्र तत्तद्देवतादिविशेषणतया बह्व्यः श्रुतयो भवन्ति। तत्र क्वचित् क्वचिद् ६अ-ज(<√जन्)-इत्येवमपि भाष्यकारैर्व्याकृतं भवति। तत्र तेषां पारस्परिकस्य भूयसो वैमत्यस्य सद्भावाद् विमर्शविशेषतो भूयिष्ठेषु तत्प्रकारकेषु स्थलेषु तथाविधाया व्युत्पत्तेर् अप्राकरणिकत्वावभासाच्च तत्तद्वाच्यविमर्शविस्तरतः करिष्यमाणस्याऽस्मदीयस्य विवेचनस्य वैश. एव विशेषेण युक्तावसरत्वाच्चेह व्युत्पत्तिविभागतः शब्दद्वैविध्यनिर्देशो नाऽकारीति मर्षयन्तु युक्तायुक्तविचारिणः। एस्थि. अपि द्वित्रैरुदाहरणैरेषा मौनमुद्रा किंचिदुपपाद्यत इव। तद् यथा। ऋ. १०, ८२, ६ इत्यत्रोपस्थाप्यमाना द्वितीया व्युत्पत्तिः (तु. GG.)। विश्वकर्मणोऽपां गर्भत्वेन श्रूयमाणत्वाद् अजन्मनस्तथाविधविशेषणस्यानुपपत्तेर् अप्रामाण्यमिवाऽऽपतेत्। एवम् ऋ. २, ३१, ६ प्रभृ. 'एक-पाद्-' इति विशेषणाच्च बुध्न्यत्वविशिष्टस्याऽहेः साहचर्याच्च तत्र माहाभाग्याद् एकेनैव पादेन सर्वत्र प्राप्तुमलंभूष्णुर् अतश्च चातुष्पाद्यं प्रति नितरां निरपेक्षः कश्चिद् अद्भुतमायोऽजाऽन्तरविशिष्टोऽज एव शिश्रावयिषितः स्याद् इति संभाव्यते (तु. ऋ. १०, ११७, ८ यत्राऽस्मदभिप्रायत एकद्विचतुष्पदां पारस्परिका उत्कर्षापकर्षौ सम्यक् स्पष्टं च श्राव्येते)। यत्तु G. ऋ. १०, ९०, ३ प्रभृ. स्वपक्षसमर्थनमपश्यत्, तदपि व्यर्थमिव भवति। तत्र सर्वत्र पाद-शब्दस्य सामान्येनांऽशपर्यायत्वदर्शनाद् इति दिक्।

काठ २, १३; ८, ८; १२[२]; १३, १; १६, १७; २४, ७[२]; ३९, १३; ४६, ३; ४[२]; ४७, २; ४८, ३; क २, ७; ¶७, २; ७[२]; २५, ८; ३७, ८[२]¶; †कौ २, ४४१; १०६९; †जै ३, ३३, १६; शौ ४, २४, १; ९, ५, १; ३; ७[२]; १०; ११; १३; १६; १८; २०; २१; ३१-३६; १०, ७, ३१; ८, ४१; १३, १, ६; १८, २, ८†; १९, ११, ३†; पै ३, ३८, १; ९; ८, १९, १-३; ८; १३, ८, १३†; १६, ९७, १; ७-९; ९८, ३; ३; ७; ९९, ६; ८; -¶जम् तै २, १, १, ५; मै १, ६, ४; २, ५, २; ३[२]; ५; ११[५]; ३, १०, २[२]; ४, ८, ३; काठ १२, १२; १३[३]; १३, १; २; ४[२]; ५; १३; १८, १; शौ ४, १४, ६; ९; ९, ५, ७[२]; ११; १२; २२; २४; -२८; ३१; ३७; १८, २, ९; पै ३, ३८, ११[२]; ८, १९, ४; ७; १०; ११; ९, ७, २; १६, ९७, ७[३]; ८; ९८, १; ९[२]; १००, २; ४; -¶जया तै ६, १, ६, ३; १०, १; मै ३, ७, ७; काठ २३, १०; २४, २; ६[२]; क ३७, १; ३; ७[२]; -†जस्य ऋ १, १६४, ६; १०, ८२, ६; मा १७, ३०; का १८, ३, ६; तै ४, ६, २, ३; मै २, १०, ३; काठ १८, १; क २८, २; शौ $४, ४, ८; १४, ७; ८; ९, ५, १९$; १४, ७; पै १६, ६६, ६; $९९, १-२; ५; -जा ऋ २, ३९, २; मा १४, १९; २३, ५६; का १५, ५, ५; २५, १०, ४; तै २, २, ४, ५¶; ३, ४, २, २; ¶३, २; ६; ४, २, १०, ४; ३, ७, १; ¶५, १, ६, २; ४, ३, २; ¶६, १, ६, ३; ५, १०, १; मै ¶१, ५, १०; ८, १; २, ६, १२; ८, ३; १३, १४; ३, ७, ७¶; ४, ४, ९¶; काठ ६, २; ७, ७; १३, ११; १२[४]; १७, ३; १९, ५; २३, १०; ३४, ७; ३९, ४; ¶क ४, १; २६, २$; ३०, ३; ३७, १; ७; -जाः ऋ ६, ५७, ३; १०, २६, ८; तै ५, ६, १९, १; ७, ३, १४, १; मै ४, २, १४; काठ ५, ३; १३, १; २४, ६; २८ १०[२]; ३५, १५; ४३, ४; ४९, ९; क ४५, १[२]¶; पै १, ४०, ४; -जान् मै २, ५, ११¶; काठ १३, ३¶; पै १२, ६, १०; -¶जानाम् तै २, १, १, ५; ५, ५, १, ३; $पै २, ३७, ४; ६, १५, ८; -जाम् ऋ ८, ७०, १५; ¶मै २, ५, २[२]; ३, ७, ७; ४, ८, ८[२]; ¶काठ १३, १; २८, ५; क ४४, ५¶; शौ ६, ७१, १; पै २, २८, २; -जाय पै ६, ३, ११; -¶जायाः तै ६, १, ६, ३; काठ ८, २; २३, १०; क ६, ७; ३७, १; -¶जायाम् तै ५, ४, ३, ३; मै ३, ३, ४; काठ २१, ६; क ३१, २१; -जायै तै २, १, १, ६¶; -जासः ऋ ६, ५५, ६; ७, १८, १९; -जे शौ ५, ३१, २; पै ९, ११, ४; -जेन शौ १८, २, २२. [°ज, जा- गो°, चरम°]

¶अ(जा>)ज-क्षीर॒[a]- -रम् तै ५, १, ७, ४; मै ३, १, ८[२]; -रे तै २, २, ४, ४; ५; -रेण तै ५, १, ७, ४; ४, ३, २; मै ३, १, ८; काठ १९, ७; क ३०, ५.

अज-गर॒[b]- -रः खि २, १४, २; ३; मा २४, ३८; का २६, ८, ३; तै ५, ५, १४, १; मै ३, १४, १९; काठ ४०, ५; ४७, ४; शौ २०, १२९, १७[c]; पै १, ९६, ४; -राः शौ ४, १५, ७; ९; ११, २, २५; पै ५, ७, ६; १६, १०६, ५; -रेण तै ७, ३, १४, १; काठ ३५, १५; ४३, ४.

अज-त्व॒[d]- -त्वम् तै ६, १, ६, ३.

अज-पाल॒[e]- -लम् मा ३०, ११; का ३४, २, ३.

अज-ब(भ्रु->)भ्रू॒[f]- -०भ्रु शौ ५, ५, ८; पै ६, ४, ८.

अज॒-मायु[g]- -युः ऋ ७, १०३, ६; १०.

---

[a]) षतस. सासस्व. पूप. ह्रस्वः (पा ६, १, २२३; ३, ६३)।

[b]) कर्मण्युपपदे √१गॄ+अच् (पा ३, १, १३४)। थाथादि-स्वरः (पा ६, २, १४४)।

[c]) 'अ॒जक-' इत्यत्र टि. यद्र.।

[d]) भावे त्वः (पा ५, १, ११९)। पूप. ह्रस्वः (पा ६, ३, ६४)। प्रत्ययस्वरः।

[e]) कर्मण्युपपदे √२पा->पालि+अण् (पा ३, २, १)। कृद्-उपप्रस्व. (पा ६, २, १३९)।

[f]) सौवरः संकेतस् तस. इति कृत्वा कल्पनामूलः द्र.। शौ. च पै. चोभयत्र समाने प्रकरणे सम्बुद्धिप्रयोगः। तस्य च पादादित्वाद् षाष्ठिकम् आद्युदात्तत्वं द्र. (पा ६, १, १९८)। क्वचिद् 'अ॒जबभ्रुः' इति प्रथमान्तमपि रूपमुपलभ्यते (तु. पाएड्. टि.)। तथात्व उत्तरं श्रूयमाणेन 'पिता' इति पदेनास्य समानाधिकरणता स्यात्। एवमेव PW. प्रभृ. च व्याचक्षते। स्वरस्तु दुरुपपादः स्यात्। क्वचिद् 'अ॒जबभ्रु-' इत्यविभक्तावयवः पपा. अपि दृश्यते। (तु. पाएड्. टि.)।

[g]) बस. पूर्वपदप्रकृतिस्वरः (पा ६, २, १)। उप. यद्र.।

अज-मीळ्ह[a]–

आजमीळ्ह[b]– -ळ्हासः ऋ ४, ४४, ६; शौ २०, १४३, ६†; ¶अज-लोम[c]– -मैः तै ५, १, ६, २; काठ १९, ५; क ३०, ३.

अज-लो(मन्→)म्नी[d]– -म्नी मै ४, २, १४.

अज-(शृङ्ग>)शृङ्गी[e]– -ङ्गि शौ ४, ३७, २; पै १३, ४, २; –ङ्गी शौ ४, ३७, ६; पै १३, ४, १०; ११; १५.

अजा-त्व[f]– -त्वम् काठ २३, १०; क ३७, १.

अजा(जा-अ)वि[g]– -वयः ऋ १०, ६०, १०; मा ३, ४३; ३१, ८†; का ३, ४, ६; ३५, १, ८†; तै ६, ५, १०, १¶; काठ २९, ९¶; शौ ५, २१, ५; ७, ६२, ५; ८, ७, २५; ११, २, ९; १९, ६, १२; पै ३, २६, ५; ९, ५, १०†; ७, १; २३, ९; १६, १४, ४; १०४, ९; –विभिः शौ १०, ६, २३; पै १६, ४४, ५; –विषु शौ ११, २, २१; १२, २, १५; पै १६, १०६, १.

†अजा(ज-अ)श्व[h]– -श्व ऋ १, १३८, ४[2]; ६, ५५, ३; –श्वः ऋ ६, ५८, २; ९, ६७, १०; मै ४, १४, १६; –श्वम् ऋ ६, ५५, ४.

२अज- सुनिर्[i]

अजक[i]– -कः खि ५, १५, ५.

अजका[j]-

अजकाव[k]– -वम् ऋ ७, ५०, १.

अजत्[l]-, अप°, संवि°

अजन, नी[m]- अश्व°, गो°

अजि*[n]-

अ(जि>)जी-गर्त[o]-

¶आजीगर्ति[p]– -र्तिः काठ १९, ११; क ३१, १; –र्तिम् तै ५, २, १, ३.

अजिन[q]– -नम् शौ ६, ६७, ३; –नेन शौ ५, २१, ७; –नैः शौ ४, ७, ६; पै २, १, ५. [°न- अधिकृष्ण°, कृष्ण°, बस्त°]

---

a) वैसं.नाउ. व्युत्पत्तावौपयिकं द्र.। उप.<√मिह् द्र.।

b) अण् प्र. ताद्धितः (तु. पा ४, १, ११२ यद्वा पा ५, ४, ३८)। प्रत्ययस्वरः।

c) तस.। अत्र उप. मूलतो नकारान्तं सत् समासाऽन्ताऽन्तमुताहोऽकारान्तमिति विमृश्यम्। तु. गोब्रा. १, २, २२ यतो मौलस्याऽकारान्तप्रकारकस्य प्राति. अपि सद्भावः प्रत्यक्षमापाद्यते। प्रथमे कल्पे समासान्तदेशितः (पा ५, ४, १०३; ६, १, १६३) स्वरः। उत्तरे च सामान्यः समासस्वरः (पा ६, १, २२३) इति विवेकः।

d) बस. पूपप्रस्व. (पा ६, २, १)। स्त्रियां ङीप् (पा ४, १, २९)।

e) बस. 'शृङ्गम्' (पा ६, २, ११५) इति परादि-स्वरः। स्त्रियां च ङीषि (पा ४, १, ५५) प्रत्ययस्वर इति विशेषः।

f) ह्रस्वाभावे रू.। शेषम् 'अज-त्व-' इत्यत्र द्र.।

g) ऋ. मा. च पपा. अनवगृहीतः। शौ. तु °ज-अ° इति। द्वस. सामान्यः समासस्वरः (पा ६, १, २२३)।

h) बस. पूर्वपदप्रकृतिस्वरः (पा ६, २, १)। उप. यद्र.।

i) 'अजक-' इति विगतस्वरोऽपि मूको. पा. भवति न त्वसौ कोऽपि वास्तविकः पाभे.। तु. शौ २०, १२६, १७, यत्र 'अजागार-' इति मुपा. 'अजगरः' इति च मूको. पाभे.। वस्तुतोऽत्र पदद्वयी वा भवति पदत्रयी वेति पदविभागं प्रति भवत्येव संदेहः। उभयथा संभवाद् उभयथाऽपि तात्पर्यस्याविस्पष्टत्वाद् विनिगमकान्तराभावाच्च। इह 'अरुक-', 'अविका-' इत्यत्रत्ये टि. अपि द्र.।

j) नाउ. प्राति. तद्गतं टि. च द्र.।

k) 'अजका-व-' इति पपा.। तमेवानुसरति सा.। वः प्रत्ययोऽर्णवादिवद् मत्वर्थे द्र. (पावा ५, २, १०९)। एतदुत्तरसूत्रे 'अजगव-' इति प्राति. धनुर्विशेषसंज्ञापरमितोऽन्यदिव भवति। न चासौ संज्ञात्मकोऽर्थ इहाप्यभिप्रेतः स्यादिति वचनायोपलभ्येत। तस्यार्थस्याऽत्रत्यपरिहर्त्तव्य-विषायमिष्टवस्तुवर्णनपरकप्रकरणेन नितान्तमसंगतत्वात्। ये अपि शब्रा. ४, १, ५, १९ इत्यत्र, तांब्रा. २५, १५, ३ इत्यत्र च यक. 'अजकाव-' इति 'अजगाव-' इति च प्राति. श्रूयेते ततोऽप्येतद् भिन्नार्थवाचकत्वाद् अन्यदिव भवति।

l) शत्रन्तं प्राति.।

m) करणे ल्युट्। स्त्रियां ङीप्।

n) नाउ.-व्युत्पत्ता औपयिकं प्राति.। इः प्र. (पाउ ४, १४०)। प्रत्यय-स्वरः।

o) 'अजौ गर्तौ यस्य' इति बस. पूप. दीर्घः (तु. पा ६, ३, १३७)। अत्र अ-जी° इति मन्वानः MW. विमर्शविशेषापेक्षः।

p) बाह्वादित्वाद् अपत्यार्थ इञ् प्रत्ययो ञित्-स्वरश्च (पा ४, १, ९६; ६, १, १९७)।

q) अज्- इत्यतस् ताद्धितमिति MW.। प्राञ्चस्तु √अज्+इनच् प्रत्यय इत्याहुः (तु. काउ. २, २२)। यत्तु (पाउ २, ४८) इत्यत्र (भोउ २, २, १६४) इत्यत्र च इनच् प्रत्यय इत्युक्तं भवति तल् लक्ष्यानानुविधायित्वादलक्षणं द्र.। न ह्यन्तस्वरा श्रुतिर्भवति यतश् चानुबन्धश्च चरितार्थतामियात्। प्रत्ययस्वरेण मध्योदात्तत्वम्।

अजिन-सन्ध्[a]– -न्धम् मा ३०, १५; का ३४,३,२.

अजिर्,रा[b]– -रः ऋ ६,६४, ३; ८, १०१, ३; १०, ९८, २; शौ ३, ४, ३; –रम् ऋ १, १३८, २; ३, ९, ८; ४, ४३, ६; [७, ११, २; (१०, ७०, ३)]; १०, १०२, ४; खि ४,११,६; मा ३४,६; ¶काठ ९, १; १३,१२; २१,८[2]; ¶क ८,४; शौ ८, ८, ३; पै १६,२९, ४; –रा ऋ [१, १३४, ३; ५, ५६, ६]; ३,३५;२; काठ ३१, १४; –ॱराः तै २, ४, ७, २; काठ ११, ९; –राय मा १६, ३१; का १७, ४, ५; तै ४, ५, ५, २; मै २, ९, ५; काठ १७, १४; क २७, ४; –रासः ऋ १, १४०, ४; ५, ४७, २; ८, ४९, ८; खि ३, १, ८. [°र- खदिर°]

†अजिर्-शोचिस्[c]– -चिषः ऋ ९, ६६, २५; कौ २, ६६०; जै ३, ५५, १; –चिषम् ऋ ८, १९, १३.

?अजिरा(र-आ)चरिष्णु[d]– -ष्णुः खि ४, ८, ६.

अजिरा(र-अ)धिराज्[e]– -जौ शौ ७, ७३, ३.

√अजिराय्[f], †अजिरायते ऋ ८, १४, १०; शौ २०, २८, ४; ३९, ५.

†अज्म[g]– -ज्मम् ऋ १, १६३,१०; ३, २, १२; मा २९, २१; का ३१, ३, १०; तै ४, ६, ७, ४; काठ ४६, ३; –ज्मस्य ऋ ४, ५३, ४; –ज्मेषु ऋ १, ३७, ८; १०; ८७,३; ५, ८७,७; ८,४३, २०; तै४,३,१३,७; मै४,११,२.

अज्मन्[h]– -†ज्म ऋ १, १५८, ३; ६, ४, ४; ८, ४६, २८; १०, १०३,६; मा १७, ३८; का १८, ४, ६; तै १, ३, १४, ७; ४, ६, ४, २; मै २, १०, ४; क २८, ५; कौ २, १२०४; शौ ६, ९७, ३; १९, १३,६; पै ७,४,६; –ज्मन् ऋ १,६५,३; ११२,१७; १६६, ५; ६, ३१, २; ८, २०, ५; –ज्मना, –ज्मनि शौ ११, १२, २२; –ज्मभिः ऋ ८,४६, १८; –ज्मा काठ १८, ५.

१अज्यमान[i]– -नः ऋ ५,३०,१४.

†अज्र[j]– -ज्राः ऋ ६,२४,८;–ॱज्राः मै २, ४, ७§; –ज्रान् ऋ ४, १, १७; १९, ७; ५, ५४, ४; ६, ६२, २; ८, १५, २; १०, ४४, ८; ५९, ३; शौ २०, ६१, ५; ६२,९; ९४, ८; –ज्रे ऋ ८, २७,१८. [°ज्र- उरु°, घासे°]

अज्र्य[k]– -ज्र्या ऋ १०, ६९, ६.

अ(ष्ट्र→)ष्ट्रा[l]– -ष्ट्रा ऋ ६, ५३, ९; –ष्ट्राम् ऋ ४, ५७, ४;

---

[a]) कर्मण्युपपदे सम् √धा+मूलविभुजादित्वात् कः प्र. (पावा ३, २,५)। अन्तोदात्तः (पा ६,२,१४४)।

[b]) किरच् प्रत्ययः (तु. पाउ १,५७; भोउ २,३,४७)। यश्च (काउ १, २४) इत्यत्र निरनुबन्धः प्रत्ययः शिष्टो भवति स स्वरानुरोधरहितलोकमात्रगोचरः द्र.। वेदे त्वन्तस्वरतश् चिदनुबन्धः सुवच एवेति किमु वक्तव्यं भवति। चित्स्वरः (पा ६, १, १६३)।

[c]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[d]) यसु. यनि. च द्वैस्वरी दुरुपपादा द्र.। प्राति. चेत् साधु स्यात्तर्हि तस. तत्स्वरश्चान्त्य एव द्र.। मूको. तु भूयस्त्वेन जरिष्णु- इत्येव उप. समर्थयन्ति (तु. MW.)। अजिराजरिष्णुः, अजराजरिष्णुः, अजराजरिष्णु, इत्येतेषां मध्ये मध्यमो वोत्तमो वा पा. स्याद् आदिस्वरश्चेति विमृशन्तु विमृशः।

[e]) द्वस. सामान्यः समासस्वरः (पा ६, १,२२३)।

[f]) नाधा. आचारार्थे क्यङ् दीर्घश्च (पा ३, १,११)।

[g]) मन् प्र. नित्-स्वरश्च (तु. पाउ १,१४०; पा६,१,१६७)।

[h]) मनिन् प्रत्ययः (तु. पाउ ४,१४५)। शेषं नापू. द्र.।

[i]) शानचो निघाते यक्-स्वरः (पा ६, १, १८६)।

[j]) रन् प्रत्यय औणादिक उसं. नित्स्वरश्च (पाउ २, २८; पा ६, १, १९७)। एतच्च एपू. इति च प्रत्ययमात्रभिन्ने सती अप्यर्थतः समाने भवत इत्येतदर्थं तु. 'अजिर्-' इति पाभे. तै २,४,७,२; काठ ११,९। यत्तु सा. (ऋ ४, १,१७) ६अ-जर -(<√जॄ)- इत्येवं व्युत्पत्तिं व्यकल्पयत तद् निर्दिष्टशाखान्तरीयव्यवहारविरोधाद् अप्रामाणिकम्। यदसौ तत्रैव गमनशीलतया व्याचक्षाणः √अज् इत्यस्माद् व्युदपादयत् तत् साधु। वाच्यविमर्शस्तु वैश. द्र.।

[k]) यदत्र यतोऽनावीयः स्वरो न भवति भवति च तित्-प्रयोजितः स्वरितः (पा ६,१,१८५)। तदेतद् अज्र- अजिर्- इत्यत्रैव भूयो ज्ञापकं स्यात्। कथमित्युच्यते। मूलतस् त्र्यच्केऽस्मिन् शब्देऽभ्युपेयमाने (अजिर्- >अज्र-) ततश्चाऽद्व्यच्कात् सतः प्रत्ययोत्पत्तौ सत्याम् (अजिर्य- >अज्र्य-) यतोऽनावीयस्वरनिमित्ताभावात् (पा ६,१,२०५) नैमित्तिकाऽभाव इत्यर्थात्। यद्वा 'अनावः' (पा ६,१,२१३) इति यदुक्तं तदल्पमिति द्र.। अन्येषां द्व्यच्कत्वे सत्यप्यनाद्युदात्तानां सतां तत्रोपसंख्येयत्वात् (यतु. उक्थ्य-, कन्या-, धान्य-)।

[l]) ष्ट्रन् प्र. (पाउ ४,१६७)। भाषान्तर-सजन्म-परिचयार्थं केषांचिदभिमतस्य √१अश् इत्यतो निर्वचनस्य संकेतार्थं च तु. WW. १,३६। नित्स्वरः (पा ६,१,१९७)।

६,५८,२; मै २,७,१२; ४,१४; १६†; काठ ३७,१¶; शौ ३, १७, ६†; पै १२, ६, ३.

आ(ष्टू->)ष्ट्री[a]- -†ष्ट्री[b]शौ ६, २७, ३; -ष्ट्र्याम् ऋ १०, १६५,३.

अष्ट्रा-दं(ष्ट्रा>)ष्ट्रं[c]-

¶आष्ट्रा-दंष्ट्र[d]- -ष्ट्रम् मै १, ११, ९; काठ १४, १०.

अष्ट्रा-विन्[e]- -वी ऋ १०, १०२,८.

आजि[f]- -†जयः ऋ १,८१,३; ७, ३२, १७; कौ १, ४१४; २, ३५४; जै १, ४०, ६; ३, २९, ११; शौ २०, ५६, ३; -जा ऋ १, ६३, ६; १०२, ३; १०; ११६,२; १५; ७, ८३, २; ९, ६६, ८; पै ३,३६, २†; -जिम् ऋ १, १७९, ३; ४, २०, ३; २४, ८; ४१,८; ४२, ५; [५८, १०; (९, ६२, ३)]; ५,४१, ४; ६, २४, ६; ७५, २; ७, ९८, ४; ८,४५,७; ५३,८; ९, ३२, ५; १०, १०२, १२; खि ३, ५, ८; †मा १७, ९८; २९, ३९; †का १९,१,११; ३१, २, ३; तै ४, ६, ६, १†; ५, ३,२, ३¶; ७, ५, ९, २¶; ¶मै १, ११,५;७[3]; ३, १६,३†; ४, ३, २; ¶काठ १०,५; १२,७; १४, ५; ७; ८; २१, १२; २३, ३; ४०,७†;४६,१†; कौ १, ६८†; जै १, ७, ६†; शौ ६, ९२, २; ७, ८७, १†; १३, २ ४; ५; २०, ८७, ४†; †पै८, १३, १०; १५, १०, २; -†जिषु ऋ १, ८१, १; १३०, ८[2]; २, ३४, ३; ४, १७, ९; [५, ३५, ७; ८, ८४, ८]; ७, ८३, ६; १०,१५६,१; तै ३, ५,११, ५; मै ४, १०, ३; १२, ४; काठ १५,१२; कौ १, ४११; २, ३५२; ८७७; जै १, ४०, ३; ३, २९, ९; ४, ११, २; शौ २०, ५६, १; -जीन् ऋ ६, ३५,२; शौ २,१४,६; पै २, ४,३; १०,१,६; -(जि->)जीम् ¶मै २, १, ११; ३, ४, ३; -जेः ऋ ४, ४१, ११; १०, १०२, ५; -जौ ऋ १, ५१, ३; ५२, १५, ११२, १०; १७६, ५; ३, ३२, ६; ५३, २४; ४, १६, १९; ६, १९, ३; २०,१३; ८, ९६, १४; ९, ९१, १; ९७, १३; २०; १०, ६१,१; ८;६८, २; ७५, ९; १०२, १; काठ ७, १२; ३८, १२; †कौ १, ५४३; २, १५६; †जै १, ५५, १२; ३, १५, ४; †शौ २०, १६, २; १३७, ८$.

आजि-कृत्[g]- -कृत् ऋ ८, ४५,७.

आजि-तुर्[h]- -तुरम् ऋ ८,५३, ६; खि ३, ५, ६.

आजि[*]-पति[i]- -०ते ऋ ८,५४, ६; खि ३, ६, ६.

अँजक- अजकाव- √अज् द्र.

अ-जग्धपाप्मन्[j]- -प्मा शौ ९, ७, ९; पै १६, ११३, ३.

¶अ-जघ्निवस्[k]- -वांऽसम् तै २, १, १०, २[3]; काठ १०,६[2]; १२,५[2]; १३, ६[2].

अ-जघ्नुषी- -षी ऋ ८, ६७, १५.

अजत्- अजन-,नी- √अज् द्र.

?अजना[l]- -नाम् पै २, ४०, ३.

अ-जय[m]- -यः पै १५, ६, ५.

१अ-जर,रा[n]- -०†र ऋ १,[५८,४; (४,७,९)];१२७,९[2];६,२,९;५, ७; ८, ५; १६, ४५; ८, २३, ११; १०, ११५, ४; मा १८, ७४; का २०,५, ७; तै १, ३, १४, ३; ३, १, ११, ६; कौ २,७३५; -†रः ऋ १, ५८, २; १४४,४; १४६, २; ३, [२, २; ५, ४, २]; २३,१; ४, ४५,७; ५, ७, ४; ४४, ३; ६, ४, ३;

---

a) स्वार्थे अण् (पा ५,४,३८)। प्रत्ययस्वरः। स्त्रियां ङीप उदात्तनिवृत्तिस्वरेणोदात्तत्वम् (पा ६, १, १६१)।

b) स१ प्रगृह्यम्। प्र. पूर्वसवर्णता द्र. (शौप्रा १,७४) नाउ. रू. शाखान्तरीयः पाभे. द्र.।

c) नाउ.-व्युत्पत्तावौपयिकं द्र.। सासस्व. द्र.।

d) मत्वर्थे अण् प्र.(तु.पा ५,२,६१) तत्स्वरश्च। आष्टा० इति मुपा. भवति (वैतु. मूको. च नाउ. काठ. च)।

e) मत्वर्थीयो विनिः(पावा ५,२,१२२)। प्रत्यय-स्वरः।

f) अधिकरणे इण् प्र. (पावा ३, ३, १०८ यद्वा पाउ ४, १३१)। प्रत्ययस्वरः।

g) सोपपदात् √कृ+क्विप्। कृद्-उपप्रस्व. (पा ६, २, १३९)।

h) उप. <√तुर्<√त्वर्' अन्यद् नापू. द्र.।

i) तस. 'पत्यौ' (पा ६,२,१८) इति पूपप्रस्व.।

j) तस. अव्यय-पूपप्रस्व. (पा ६, २,२) उप. बस. द्र.।

k) तस. नापूदि. स्वरः। उप. यद्र.।

l) 'गाम्' इत्यनेन सामानाधिकरण्यमिति कृत्वा प्राति.-संकेतोऽकारि। वस्तुस्थितिः संदेहकवलितैव द्र.।

m) बस. परकर्तृकस्वजयरहित इत्यर्थे द्र.। तु. शौ १९, २४, ८ यत्र 'अ-जुर-' इति श्रूयते।

n) बस.। 'नञो जर-' (पा ६, २, ११६) इत्युत्तर-पदाद्युदात्तत्वम्। उप. <√जॄ।

अति√तुर्, अति···तुतुर्याम ऋ ५, ४५, ११.
अति···तारिषत् ऋ ८, १९, १४; अति···अतारीत् शौ १३, २, ३४; २०, १०७, १३; अति···अतारिम ऋ ८, १३, २१.
अति√तारि, अति···तारयति खि ४, २, ८.
अति-तर[a]- -रः पै २, ८९, १;३;५.
अति-ता(र्य->)र्या[b]- -र्याः शौ ८, २, २७.
ϕअति-तितिर्वस्[c]- -र्वांसः ऋ १, ३६, ७.
अतिथि- °ग्व-, °पति-, अतिथिन्- √अत् द्र.
अति√दघ्[d], अतिधक्[e] ऋ [२,११, २१; १५, १०; १६, ९; १७, ९; १८, ९; १९, ९; २०, ९]; अतिधक्तम् ऋ १, १८३, ४.
अति√दभ्, म्भ्
अति-दम्भ- अन्°
आतिदम्भ[f]- -म्भः पै १६, ७२,५.
अति√दस्>दासि, अतिदासय पै १६, १४६, २[g].
¶अति√दह्, अत्यदहत् तै ५, २, ५, २; १०, ३.
अतिधक्ष्यति तै ५, ५, २, ४; अतिधक्ष्यति मै ३, २, ४; ६; ८; काठ ८, २; क ६, ७; अति···धक्ष्यति तै ५, ५, २, ३; मै १, ६, ३; अतिधाक् तै १, १, ८, १.
अति-दह्यमा(न->)ना[h]- -ना तै ५, ५, २, ३.
अति-दाह[i]- -हात् तै ५, २, ५, २; १०, २; काठ २०, ३; ९; क ३१, ५; ११. [°दाह- अन्°]
अति√दा, अतिदद्यात्[j] मै ४,६,८¶.
?अति√दाश्[k]
अति√दिव्
अति-दीव्वन्[l]- -व्वा ‡शौ ७, ५२, ६; २०, ८९, ९.
अति-दीव्य>व्या[m] ऋ १०,४२,९
अति-दिश्- -दिशः पै १६, ९९,७.
अति-दीर्घ[n]- -र्घम् मा ३०, २२; का ३४, ४, ४.
अति-दूर- -रम् पै २, २४, १-५; -¶रे काठ ८, १०; क ७, ६.
अति√दृश्
अति-दृशन- अन्°
अतिद्भुत- अन्°
अति√द्रु, अतिद्रव ऋ १०,१४,१०;

[a]) गस. कर्तर्य् अच् प्र. (पा ३,१,१३४)।

[b]) गस. ण्यदन्त-कृद्-उपप्रस्व. (पा ६, २, १३६)।

[c]) सस्व. नापू. द्र.। उप. लिटः क्वसुः। तरणेऽतिक्रमणार्थस्य स्वरूपत एव विद्यमानत्वात् तदर्थातिशय इह गत्यर्थ इति कृत्वा सा. तमर्थमाह।

[d]) अत्र प्रकरणे √दघ् (निघ २, १४; या १, ९) इति निर्देशोऽर्वाक्तनाभियुक्तानुसारेण द्र.। √दंह् इतीमं दानार्थं या. कल्पयाञ्चकार। यत्तु तं निरनुस्वारतया सा. पठन्निव मुद्रापितस्तत्र भाष्यकर्तुरनपराधः स्यात्। एवं यद् या १, ७ इत्यत्र स्क. अपि तादृशमेव पाठमभिरोचयमान इव भवति तत्रापि तन्मुद्रणसंस्कर्तुरेवापराधः स्यात्।

[e]) मपु१ इति प्राञ्चो या.प्रभृ., प्रपु१ इत्यर्वाञ्च इति विवेकः। प्रथमे कल्पे वाक्यचतुष्टयं मन्त्रस्योत्तरार्धे भवति। उत्तरे कल्पे तु त्रिवाक्यीत्यपरोऽपि विवेकः सुलभः द्र.।

[f]) प्रज्ञादित्वात् स्वार्थे अण् प्र. (पा ५,४,३८)।

[g]) तु. शौ १२,५,५२ यत्र उपेतिगत्यन्तरपूर्वाऽऽख्यातश्रुतिर् भवति।

[h]) कर्मणि शानजन्त-कृद्-उपप्रस्व. (पा ६, १, १८६; २, १३९)।

[i]) गस. घञन्ते कृति थाथादि-स्वरः (पा ६, २,१४४)।

[j]) अत्राऽतिक्रमणात्मकस्याऽत्यर्थस्य सामान्येन विवक्षितत्वाद् अतिक्रमणीयविशेषस्य गम्यमानत्वाद् आख्यातार्थेन च पिण्डीभावेन प्रदर्शितत्वाद् अतेर् गतित्वं सुस्थमिव भवति। यत्रान्यथा तत्र नैवमित्य् अति इत्यस्य √दा>दासत् इत्यस्य च कृते ऋ ८, १,३२ इटि द्र.।

[k]) पराभिप्रायानुवादः द्र.। अति इति कप्र. यथा भवति तथा ऋ ६, १६, २०; ८, २४, २; शौ १८, १, ३८† इत्यत्र टि. द्र.। एवं √दाश्>दाशसि इत्यस्य कृते ऋ ८, २४, २; शौ १८, १, ३८† इटि द्र.। दाशत् इत्येदर्थं च ऋ ६,१६, २० इटि द्र.।

[l]) प्रास. अव्ययपूपप्रस्व. (पा ६, २, २)। यत्त्विह सा. गस. इति कृत्वा अति√दिव् इत्यतः कृत्-प्रत्ययमुत्पादयेत्, तन्मन्दमिव भवेत्। तथात्वे हि गत्युत्तरकृत्-प्रस्व. भाव्यम् (पा ६, २, १३९)। यत्र खलु गत्यर्थधात्वर्थयोः संपिण्डितयोरिव सतोर् नामीभावः कृतोत्पिपादयिषितो भवति तत्रैव गस. गत्युत्तरकृत्-प्रस्व. च भवति। यत्र तावद् धात्वर्थमात्रस्य नामीभूतस्य सतः प्राद्यर्थविशेषैर् अनुरञ्जनमिष्यते तत्र प्रास. पूपप्रस्व. च द्र. इत्येवंप्रकारकः प्रतिपदं स्वरानुरोधात् सुलभानुमानो विवेकः सर्वत्र सुधीभिर् यथायथमनुसंधेयः। बाहृचश्च पाभे. नाउदि. द्र.।

[m]) गस. ल्यबन्त-कृद्-उपप्रस्व. (पा ६,१,१९३; २,१३९)।

[n]) प्रास. अव्यय-पूपप्रस्व. (पा ६,२,२)। उप. यद्र.।

शौ १०, ९, ८; ९; १८, २, ११†; पै १६, १३६,८;९.

अति-द्रवं[a]- -वात् काठ २७, ७. [°द्रव- अन्°]

अति-द्रुत[b]- -तः मा १९, ३[c]; का २१, १, ३[c]; तै १, ८, २१,१[c]; मै ३, ११, ७; काठ १२, ९[c]; शौ ६,५१,१[c]; -तस्य काठ १०, ५. [°द्रुत- अन्°]

**अति√धा**

अति-हित[b]- -तम् ऋ १०, १८१, २; शौ ७,५५,३; १८,२,२६.

**अति√धाव्**, †अति···धावति ऋ ९, ३, २; कौ २, ६११; जै ३,४९,५; अतिधावत शौ ५, ८,४; पै ७, १८, ४.

**अति√ध्वस्**, अतिध्वसुन्[d] ऋ ८, ५५, ५; खि ३, ७, ५.

**अति√निद्>नेद्**, अतिनेदन्ति, अति[e]···नेदन्ति तै १, ६, ८, १; मै १, ४, १०; काठ ३२, ७; अत्यनेदत् मै ३, १०, ४.

अति-नेद- अन्°

**अति√नी**, ¶अतिनयति काठ २६, २[e]; क ४०,५[e]; अति···नयति कौ १,४२६‡; †अति···नयन्ति ऋ १०, १२६,१; जै १,४१,८; पै ५, ३९, १; अति···नयसि ऋ ६, ४५, ६; अति···नयथ ऋ १०,६३,१३; अति···नयाति शौ ३, ११, ३; २०, ९६, ८‡; पै १,६२,३; अति···नय ऋ १, ४२,७; १०,१३३,६; अत्यनयन् पै १४, १,९; अति···अनयन्[f] मा १०,१; का ११,२,१; तै १, ८,११,१; काठ १५,६; अति··· अनयन् मै २,६,८; ¶अतिनयेत् काठ ३५, १६; क ४८, १४. अति···नेषत् तै ५,७,२,३; शौ ६, ११०,२; पै ५,६,६; †अति ···नेथ ऋ १०,१२६,२; पै ५, ३९, २; अत्यनैत्, अत्यनैषम् मै १, ८, ७[e]¶.

¶अति-नीय[g] मै ३, ६, ६[e].

¢अति-नेतृ[h]- -तारः ऋ १०,

[a]) गस.उप.भावे अप्। थाथादि-स्वरः(पा६,२,१४४)।

[b]) कर्मणि निष्ठायामनन्तरगतिस्वरः (पा ६,२,४६)।

[c]) 'अति द्रुतः' इति सुपा. पपा. च चिन्त्यौ। सा. तु समस्तमेवाह । सस्थ. अति-स्रुत- इति पाभे. यद्र. ।

[d]) अत्रैकस्य चकारस्य लोपः।उत्तरत्र चन इत्यत्र च इति न इति च पदद्वयं द्र.। तथा च सति अतिध्वसुन् इत्यस्याः क्रियाया निघाताभावः (पा ८, १, ६३) । ननु तत्र प्रथमायाः क्रियाया विषयः (पा ८, १, ५९) प्रकृते चैकैवाद्वितीया क्रियोपलभ्यत इति चेत्। सत्यम्। एका क्रियोपलभ्यतेऽपरा च गम्यते । चक्षुषा च संनुशे न (भवन्ति) इत्याक्षेपस्य सुलभत्वादित्यर्थः। तां गन्यमानां किल क्रियामपेक्ष्येयं प्रथमा क्रिया निष्प्रत्यूहं निघाताभाववती स्यादिति किमु वक्तव्यम्। ननु (पा ८,१,५७) इत्यत्रोत्तरवर्त्ति-चन-योगे तिङो निघाताभावस्य शिष्टत्वात् कथमसौ सरलः पन्था नाभिरुचित इति चेच् चोदनायाः पुनःप्रसूतिस्तदुच्यते। प्रथमं तावच् चन इत्यस्येह तिङा नास्त्येव योगः। चक्षुषा इति पदेन तत्संबन्धस्वारस्यात्। अन्यच। गतिपूर्वश्चात्र तिङ् वर्त्तते तत्र चागतित्वविशेषणं प्रादायि। अतो नायं तच्छासनविषय इति संक्षेपः। अयं च धातुः श-विकरणो विकरणस्वरः पाणिनीयाच् शब्विकरणाद् धातुस्वराद् भिन्नः द्र.। कथं च नुम्मध्यो √ध्वंस् इति वेद-संहिताभ्यो बाह्यो ब्राह्मणादि-वाङ्मयगोचर इत्यादिविषयो √ध्वस् इतिद्र. ।

[e]) पृथिव्या उपरि नेतव्यमिति कृत्वा पूर्वस्मिन् वाक्ये अति√नी इति श्रूयते। यत उत्तरे च वाक्येऽन्तरिक्षस्य मध्यतो नेयमिति कृत्वा अधि√नी इति श्रूयत इत्येवं यथाश्रुति विवेकः सुगमः द्र. (वैतु. उभयत्रोपरिभाव-वैशिष्ट्योन्नयनक्रियायास्तन्मात्रिकः पाभे. क ४०, ५; संटि. च)।

[f]) अद्भिर्निमित्तभूताभिर् देवा इन्द्रं तथा समर्थयन्ति यथासौ शत्रून् अतिगच्छतीत्यर्थस्य श्रुतिस्वारस्यसंगतेर् उ. अन्यथावादित्वशङ्कया हेयः म. चाऽतेर् गतित्वं विस्पष्टमनुवदन् ग्राह्य इति विवेकस्तद्दत्तदृष्टीनां सुलभः स्यात्।

[g]) गस. ल्यबन्त-कृद्-उपप्रस्व. (पा ६,२,१३९)।

[h]) गस.उप.कर्तरि तृन्। कृद्-उपप्रस्व. (पा६,१,१९७; २,१३९)। देवा अस्मान् दुरितानि द्विषश्चातिक्रमय्य नयन्त्व् इत्याकारकस्यान्वयस्य श्रुतिस्वारस्यसंवादित्वात् सुलभत्वं द्र.। यत्त्विह सा. 'दुरिता···अस्मान् अतिनयन्तु' इत्याह। तत्र दुरितान्य् अतिनयनस्य प्रधानं कर्मोतास्मान् इत्येतदाकारकः सन्देहोपि जायेत । तत्र विपरीता प्रतीतिर्माभूद् दुरितान्येव प्रधानकर्मतयाऽतिनीयेरन्नित्यत्र तस्यैवोत्तरपाठस्य द्विड्-विषयस्य विनिगमकत्वात्। यत्तु मन्त्रस्य पूर्वार्धे सा. नः इत् अस्मदः शसि रू. ष३ इत्येवं कल्पयाञ्चकार तद् असमर्थत्वाद् हेयम्। न ह्येकं शब्दरूपं पूर्वार्धे षष्ठीरूपतयोत्तरार्धे च द्वितीयारूपतयाऽनुगमयितुमुपलभ्येत । ननु भाष्यकर्त्तुस् तादृग्बलात्कारमनुमन्यमानस्यावश्यं केनापि हेतुविशेषेण भाव्यमिति चेत्। सत्यम्। अवश्यं तेन भाव्यम्। परं बुभूषतापि तेन सद्धेतुनैव भाव्यमित्यपि त्वावश्यकं द्र.। यथा च नासौ सद्धेतुरित्यत्र ति(रस्>)रो√नी इत्यस्यैतदेव स्थलं यद्र.।

१२६, ६.

अति-नेनीयमान[a]- -नः ऋ ६, ४७, १६.

अति √नु, नू >नावि, अतिनावयेत् तै ६, ३, ४, ४¶.

अति √नुद्

अति-नुत्त[b]- -त्तः शौ ८, ७, १५.

अति √१पत्, †अति···पप्तिम[c] ऋ ९, १०७, २०; कौ २, २७३; जै ३, २३, ५.

अति √पाति, अति···पातयस्व खि ४, ५, २९.

¶अति √पद्, अतिपद्यते मै २,१,१०; काठ १०, ५; अतिपद्येत काठ ६, ८[२]; १०, ५; क ४, ७[२].

अति √पादि, अतिपादयति तै २, २, २, १; ५, ४; अतिपादयति मै २, १, १०; अतिपादयेत् तै २, २, २, १.

अति-पत्तोस्(>:)[d] मै २, ४, ५.

अति-पन्न[e]- -न्ने तै ६, ३, ४,८. [°न्न- अन्°]

अति-पाद- -दात् काठ ३३, ६. [°पाद- अन्°]

अति-पाद्य[f] तै २, २, ५, ४.

अति √पश्[g], अतिपश्यति शौ ४,५, २; १३, १, ४५; पै ४, ६, २; अतिपश्यन्ति शौ ४, १६, ४; पै ५, ३२,२; †अति···पश्यसि ऋ १, ९४, ७; पै १२, १, ७; अतिपश्यामि शौ १८, २, ३२; अतिपश्य[h] पै ८, ११, ७.

अति-पश्य[i]- -श्यः पै १०, ६, ११; -श्यम् शौ ११,२,१७; पै १६, १०५, ७.

अति-पश्यत्- -श्यन् पै ८,१९, १.

अति √पू, ¶अतिपवते तै ६,५,११, ४; ¶अतिपुवते मै २,४,१; काठ १२,१०; †अति···पवते ऋ ९, १०६, १३; कौ १, ५७६; जै १, ५८, ११; ३, ५, ५; १२, ७; अति···पवाते ऋ ९, ९७, ४; [j]अति···पवताम् कौ १, ५३५; जै १, ५५, ३; †अति···पवस्व ऋ ९,२, [१; ३६, २]; कौ २, ३८७; जै ३,३१,७; अतिपवेत काठ १२, १०¶. अत्यपविष्ट मै २, ३, ९¶; अति···अपाविषुः ऋ ९, ६०, २.

ф अति-पूँवमान[k]- -नः ऋ ९, ३०, ४.

अति-पवित- -तस्य काठ १२,९¶.

¶अति-पुपुवान्[l]- -नम् मै २, ४, १.

अति-पू(←पु)रुष[m]- -षः पै १३, ३, १४.

अति √पृ, †अतिपिप्रति ऋ ७, ६६, ५; कौ २, ७०२; जै ३, ४६, ८; अति···पिपृथ ऋ १०,३५, १४; अति···पिपर्तु ऋ २, २७, ७; अति···पिपर्तन ऋ ८, १८, १७.

अति···पर्षत् ऋ ३, २०, ४; ५, २५, ९; ७, ९७, ४; १०, ६३, ६; खि ४,२, ७; जै ४, २८, ४†; अति···पर्षत् ऋ ८, ६७, २; १०, १८७, [१–५]; खि ४, १४, १; ५,४, ६[n]; ७[२]; तै ४, २, ५, २; मै २, ७,१२; ३,२, ४¶; ४, १०,६; काठ १६, १२; १७,१६; १८†; २१, १३†; क २५, ३; जै २, ७, ३; ३[२]; †३, ३२,१–३; शौ †६, ३४, १–५; ७, ६५, १; पै ५, २७, ८†; अति[२]···पर्षत्

---

a) यङि शानजन्त-कृद्-उपप्रस्व.(पा६,१,१८६;२,१३६)

b) कर्मणि क्तेऽनन्तरगति-प्रस्व. (पा ६, २, ४९)। 'रदाभ्याम्' (पा ८, २, ४२) इति धात्वन्तदकारस्य निष्ठा-तकारस्य च नत्वप्राप्तौ 'नुदविदोन्द-' (पा ८, २, ५६) इति विकल्पः द्र.।

c) अतिक्रमण-विषयोऽपि सन् सूर्यस्तदतिक्रमणाऽनन्तरं प्राप्तव्यात् सोमादभिन्न इतीव यत् सा. अभिप्रैति, तन्न। अन्याऽतिक्रमणेनाऽन्यस्य प्राप्तेर्दर्शनात्। ननु नैव सा. अतिं गतिमतिक्रमणे जग्राहेति चेत्, तर्हि तथाऽकुर्वाणो नैव शोभनं चकारेति वच्मः। अतिक्रमणाऽर्थादन्यत्राऽतेर्गतित्वे प्रमाणाऽभावात्। न चैतदेव प्रमाणं भवेदिति वाच्यम्। सूर्यमतिक्रम्य ततोऽपि परस्तात् पतनस्य संगततरत्वात् तेन चाऽर्थान्तरस्याऽनपेक्षितत्वाद् अप्रामाणिकाऽर्थकल्पनाया वैयर्थ्यात्। एवं नाऽत्र परः इत्येतत् सूर्यस्य विशेषणपदं भवितुमर्हेत्। यथा च क्विवि. एवैतद् भवेत्तथा यद्र.।

d) गस. तोसुन्नन्ते कृति 'तादौ' (पा ६,२,५०) इति पूपप्रस्व.। मूको. धातु-स्वरः पाभे. भवति। तच्चिन्त्यम्।

e) सस्व. १अति-क्रान्त- इत्यत्राऽन्वेष्यौ।

f) गस. ल्यबन्त-कृद्-उपप्रस्व.(पा६,१,१९३;२,१३९)।

g) √पशेः √स्पश् इत्यनेन √दृश् इत्यनेन च यादृशः संबन्धस्तदर्थं √पश् यद्र.।

h) सांशयिकं रू.द्र.। यनि.'उ' इति पृथक् छेद्यो भवति।

i) गस. उप. श-प्रत्ययः उसं.। कृद्-उपप्रस्व. (यक्र. पा ३, १, १३७; ६, २, १३९)।

j) नापू. रू. बाहृचः पाभे. द्र.।

k) गस. शानजन्त-कृत्स्वरः प्रकृत्या (पा ६,२,१३९)।

l) गत्युत्तर-कानजन्त-कृत्स्वरः प्रकृत्या (पा ६, १, १६३; २, १३९)।

m) 'अत्यादयः' (पावा २,२,१८) इति प्रास. द्र.।

n) 'अति···स्वर्षत्' इति कौ (४,६;७[२]) पाभे. द्र.।

ऋ १, ९९, १; अ॒ति॑…पा॒रिषत् ऋ १०, ९६, ८[a]; शौ २०, ३१, ३†; अ॒तिपर्षन् ऋ ७, ४०, ४[b]; अ॒ति॑…पर्षन् ऋ ४, ३९, १; अतिपर्षः पै ४, २९, ८; †अ॒ति॒-पर्ष ऋ १, ९७, ८; शौ ४, ३३, ८; †अ॒तिपर्षि ऋ ५, ३, ११; ४, ९[c]; ७, २३, २; ८, ९७, १५[d]; ९, ७०, १०[e]; शौ २०, १२, २; अ॒ति॑…पर्षि ऋ १, १७४, ९; ३, १५, ३; अ(?अ॒)तिपर्षथः ऋ ५, ७३, ८[f]; अ॒ति॑…पर्षथः ऋ ८, २६, ५; अ॒ति॑…पर्षथ ऋ ८, ८३, ३; †अ॒ति॑…प॒र्षिष्ठाः ऋ १०, १२६, ३; पै ५, ३९, ३.

अति√पारि, †अ॒ति॑…पारयाति ऋ ८, १६, [११; (६९, १४)]; जै ४, ५, ४; शौ २०, ४६, २; अ॒तिपारय ऋ ९, ७०, ९; शौ १७, १, २५; २६; †अ॒ति॑…पा॒रय ऋ १, ९७, ७; [१८९, २; १०, ५६, ७;] तै १, १, १४, ४; मै ४, १०, १; शौ ४, ३३, ७; १९, ५०, २; पै ४, २९, ७; १४, ४, १२; अ॒ति॑…पा॒रयथ ऋ २, ३४, १५; अ॒त्यपीपरः शौ १७, १, २५; २६.

अति-पारय[g]- -यः ऋ ६, ४७, ७.

अति-प्र√कित्[h], प्र॒…अ॒ति॑…चेकिते ऋ १, ५५, ३.

अति-प्र√क्षर्, अ॒ति॑…प्र॒…अक्षाः ऋ ९, ६६, २८.

¶अति-प्र√च्यु, अतिप्रच्यवेत काठ ८, ८; क ७, २.

?अति-प्र√त्वक्ष्

ϕअति-प्रत्वक्षाण॑[i]- -णः ऋ १०, ४४, १.

अति-प्र√दा, अ॒ति॑…प्रा॒दात् मै १, १०, १८¶.

अति-प्र√पॄ, अ॒ति॑…प्र॒…प॒र्षि ऋ [१ १७४, ९[j]; ६, २०, १२].

अति-प्र√यम् >यच्छ्[k], अतिप्र॒ाय-च्छत् मै २, ४, ३[?].

अति-प्र√युज्, ¶अतिप्रयुङ्क्ते काठ १०, १; ३०, ३; क ४६, ६; अ॒ति॑…प्र॒युङ्क्ते मै २, १, ७¶; ¶अ॒ति॑…प्र॒युक्त तै ४, ३, ११, ४[?]; मै २, १३, १०; काठ ३९, १०[?]; अ॒ति॑…प्रा॒युक्त मै २, १, ७.

---

a) यद्योगे तिङो निघाताभावः। सा. वें. च यद् अनुपसृष्टमाख्यातसम्बन्धं व्याचक्षाते तत्र संस्कार-च्युतिरेव बीजं स्यात्। तेन चोभयोर्भाष्यकृतोः पारस्परिकः कीदृश आश्रयाऽऽश्रयिभाव इत्यपि कियत्याचिन्मात्रया विमर्श-क्षमः स्यात्।

b) व्याख्याने शाब्दिक-सामान्यात् परस्पराऽनुबद्धौ सा. वें. चेति प्रतीयेत (तु. ऋ १०, ९६, ८ इत्यत्रापि तद्भाष्ये)।

c) अस्मद्वाच्यानां दुरिताऽतिक्रमण-प्रयोज्यकर्तृतया विवक्षा-स्वारस्याद् यत् सा. दुरितानामेवाऽतिक्रमण-प्रयोज्यकर्तृत्वमाह, तत्राऽवश्यं तदीयः प्रमादः। दुरिताऽतिक्रम्य-पदार्थोऽन्तराऽश्रुतेरिति दिक्।

d) यत्तु सा. 'अतीत्य पारय' इत्येवं व्याचष्टे, तत्र णिच-मन्तर्भाव्याऽतियाप्याऽतिगमय्य पारयेत्याद्याकारकोऽर्थः द्र.। अत्येतुः पारं गन्तुश्चैकव्यक्तित्वाद् अत्ययनपारगमनोभयभावैकाश्रयस्य प्रयोज्यकर्तृत्वाभिप्रायादिति दिक्।

e) यथा सा. 'दुरितान्यतीत्य पारय' इति व्याचष्टे, तथा विपरीतार्थप्रतीतिर् जायेत। येषां पारणं विवक्षितं, तेषामेव दुरिताऽतिगमनस्य विवक्षितत्वात् कश्चिद् दुरिताऽतिक्रमणं कृतवान् अन्यान् कांश्चित् पारयेदित्यस्याऽयुक्तत्वाद् दुरिताऽतिगमनं चिकीर्षतां तत्-प्रयोजकतया देवतायाः शिश्रावयिषितत्वं द्र.।

f) 'समुद्रातिपर्षि' इत्यत्र 'समुद्रा'। अ॒ति॑' इत्येवं यत् पपा. भवति, तत्र तत्-साधुत्वं प्रति संदेहो भवति। उदात्तवति तिङि परतो गतेर्निघातस्य संभाव्यमानत्वात् तथात्वाऽनुवादिनि पदविभागे बाधकाऽभावाच्च (पा ८, १, ७१; २, ५)।

g) आख्यातमिति सा.। तन्न। तथात्वे तिङो निघातस्य प्राप्तत्वात् तदभावे प्रमाणाऽभावाच्च। पपा.द. GW. च यद् नामीभावमातस्थिरे तत् तथ्यं द्र.। अतोऽत्र गस. उप. सोपसर्गादपि शः प्र. उसं. (पा ३, १, १३८)। गत्युत्तरकृत्-प्रकृतिस्वरः (पा ६, २, १३९)।

h) कोऽत्र धातुः कतमं च तदीयं रूपमित्यत्र बहवो वादा भवन्ति। √कितेर् यङि कर्मणीति सा.। √२चेद् वा √चितेर् वेत्यर्वाञ्चः प्रत्यञ्चः। यतु. √२चि च √चित् च।

i) अ॒ति इत्यत्रत्यं सस्थ. टि. गद्र.।

j) यदत्र सा. समुद्रस्याऽतिक्रमणं च पूरणं च युगपद् आह, तच् चित्रम्। तस्मिन् व्यतिक्रान्ते सति तस्य पूरणत्वस्याऽवसराऽभावात्। वें. अतिनयति इति यदाह, तत् सुन्दरम्। एवमुभयोर् भाष्यकृतोः संवाद-स्थलवद् विसंवादस्थलान्यपि विश्लिष्य तयोः पारस्परिक-संबन्धः परिच्छेयः स्यात्।

k) तै २, ४, १२, ४; ५; ७[?] इत्यत्र समानप्रकरणे 'अ॒ति' इति पृथक् पदमिव सस्वरं श्रावितं भवति। तथा चाप्य् 'आदरेण' इति सा. व्याचष्टे। अव्य. क्रिवि. अन्वय इत्यर्थः। एवं तु. 'अ॒ति' इत्यत्र प्र√यम्→च्छ् इत्यत्र च संकेतितस्थलं टि.।

अति-प्र/रिच्, †अति…प्र…रिरिचाथे[a] ऋ १, १०९, ६; मै ४, १०, ४; काठ ४, १५.

अति-प्र/शृध्>शर्धि, अतिप्रशर्धयत् ऋ ८, १२, ६.

अति-प्र/श्रु→श्रृ, †अति…प्रश्रृण्वे ऋ १०, ११, ७; शौ १८, १, २४.

अति-प्र/सृ, †अति…प्रसर्स्रते ऋ २, २५, १; मै ४, १४, १०.

अति-प्र/स्था>तिष्ठ, अति…प्र…तिष्ठ ऋ ८, ६०, १६[b]. अति…प्र…तस्थौ ऋ १, ६४, १३[c].

अति-प्र/स्यन्द्, प्र…अति…असिष्यदत् ऋ ९, ३०, ४.

¶अति/प्रु, अत्यप्रवत तै ७, १, १, २; अति…अप्रवत तै ७, १, १, ३.

अति-प्रे(प्र/इ), प्र…अत्येषि ऋ ५, १, ९[d].

¶अति-यद्गु[e]– -दु मै २, ४, ५.

अति/भा, अतिभाति शौ १०, ३, १७; पै १६, ६४, ६; अतिभाहि पै १६, ६४, ७.

¶अति/भू, अतिभवति मै १, ५, ११; अति…भूयासम् काठ ३५, १५.

अति/मन्, अतिमन्यते ऋ १०, ९१, २; †अति…मन्यते ऋ ६, ५२, २; शौ २, १२, ६; पै २, ५, ६; अति…मन्यते[f] मै १, ८, २; अतिमन्यसे ऋ १, १७०, ३; अतिमन्ये ऋ १, १३८, ४; ¶अतिमन्यातै मै १, ६, १२; ¶अत्यमन्यत ४, २, ७; ३, १; ६, ८[c]; काठ २८, ३; क ४४, ३; ¶अत्यमन्यन्त तै ६, ३, ४, ८; मै २, ५, ६; ३, ३, १; अत्यमन्यन्त ¶मै ३, ७, ९; ९, ४; शौ १०, ८, ३५; ¶अतिमन्येत तै ६, ३, ९, ५; ४, २, ३. अति…मनामहे ऋ ९, ४१, २.

अति-मति[g]– -तिम् ऋ १, १२९, ५.

¶अति-मन्यमान[h]– -नाः मै २, ५, ६.

अति-मात्र[i]– -त्रम् शौ ५, १९, १; ८, ६, १३; पै १६, ८०, ५; -त्राः पै ९, १८, ७.

¶अति/मुच्, अतिमुच्यते मै १, ४, ६; काठ ३२, ५; अति…मुच्यते तै ६, ६, ९, २; अत्यमुच्यत तै ६, ४, २, ३; काठ १३, ८; अत्यमुच्यन्त मै ४, ५, १; काठ ३७, १४.

अति-मुक्ति[g]– -क्त्यै तै ६, ६, ९, २¶.

अति-मुच्यमा(न→)ना– -नाः काठ ३२, ५¶.

[a]) प्रोपसर्गवशाद्धातोर्विरेचनाद् अभिधेयाद् भिन्नेऽधिकभावात्मकेऽर्थे प्रयोगं यत् सा. आह, तन्न। तस्मिन्नेवाऽर्थेऽतिपूर्वस्य /रिच् इत्यस्य कर्मणि प्रयोगस्वाभाव्यात्। अति/रिच् इत्यस्य चाऽत्र प्रयोगे द्वितीयायाश्च पञ्चम्याश्च समानः संबन्धः। भाष्यीयाऽन्वयतो द्वितीयान्तकर्मपदानां त्रयाणाम् अतिना कप्र. योगाद् अवाप्तचारितार्थ्ये सति कस्यचिद् अन्यस्य पञ्चम्यन्तस्य पदस्याऽऽकाङ्क्षा भवति यदपेक्षया भाष्यकाराशयेन प्ररिक्तीभावस्याऽऽवसानिकी श्रुतिरर्थवती स्यात्। तादृशस्य पदस्याऽदर्शनात् पूर्वोक्तेन प्रकारेणाऽतेर्गतित्वयोगतः पञ्चम्यन्तद्वितीयान्तपदानां समानम् अनायासेनाऽन्वयः साध्यः। अत इह GW. प्रभृ. अप्य् अतिं गतिमकुर्वाणाः समानमुपेक्ष्या इति किमु वक्तव्यमिव भवति।

[b]) ऋ १, ६४, १३ इत्यत्र स्वकीयं वचोऽपलापयन्निव (तु. नाउटि.) सा. इह प्र/स्था इत्यस्य गत्यर्थतामेव समर्थयति। यत्तु तथा कुर्वाणोऽप्यसाव् अतिं गतित्वेन तेनाऽऽख्यातेन न योजयति, तद् नाउटिदि. मन्दम्।

[c]) सा. भाष्ये तस्थौ इत्यत्र प्रः खण्डितः द्र.। तन्मतेऽतिद् अत्र कप्र. भवति। वस्तुतस्तु य एव पूर्वं जनानामतिक्रमणं करोति तस्यैव तदनु प्रस्थातृत्वेन श्रूयमाणत्वात् प्रस्थानक्रियायाश्च कर्मान्तराऽनपेक्षयाऽकर्मकत्वेन समर्प्यमाणत्वाद् अतेश्च प्रस्य च समानं गतिभावः। प्र/स्था इत्यस्य च ऋ २, २५, १ इत्यत्र प्र/सृ इत्येतेन गमनार्थवाचकत्वेन साम्यं द्र.। एस्थि. यदत्र सा. प्र/स्था=प्रति/स्था इत्येवमाह, तन्नेति दिक्।

[d]) सा. प्रं प्रत्युपेक्षावान् भवति। तथाकुर्वाणोऽप्यावुपेक्ष्यः। श्रुतिक्रमेण प्रं पृथक्कारं पठन् वें. अपि चिन्त्यः। अत्यर्थाऽपेक्षया प्राऽर्थस्याऽयनक्रियया सन्निधानाऽऽधिक्यात् तस्य प्रथमं संबन्धः कल्पनीयो भवति। ततः पिण्डीभूतेन प्रायणार्थेन काममत्यर्थो युज्यतामिति यनि. प्रदर्शने बीजम्।

[e]) प्रास. अव्यय-पूपप्रस्व. (पा ६, २, २)। क्रिवि. योगः द्र.।

[f]) सुपा. अति इत्यस्योत्तरत्राऽन्वयः। तथात्वं चिन्त्यम्। प्रकृतेऽतिमननस्य भ्रान्त्यर्थेऽपेक्षितत्वादुत्तरवाक्ये चाऽतेः संबन्धविशेषाऽचारितार्थ्यादिति दिक्।

[g]) गस. 'तादौ' (पा ६, २, ५०) इति पूपप्रस्व.।

[h]) गस. कर्तरि शानजन्त-कृद्-उपप्रस्व. (पा ६, १, १८६; २, १३९)।

[i]) बस. (पावा २, २, २४)। 'अतेर्धातुलोपे' (पावा ६, २, १९१) इत्यन्तोदात्तः। उप. मात्रा- </१मा यद्र.।

अति-मुमुचा(न→)ना[a]- -नाः मै ४, ५, १¶.

अति-मोक्ष-

अति-मोक्षि(न्→)णी[b]- -णी तै ६, ६, ९, २; मै ४, ७, ७; काठ ३०, ७.

अति√मृज्

¶अति-मृजान[c]- -नाः मै ४, १, ९; काठ ३१, ७; क ४७, ७.

अति√यज्, ¶अतियुजते तै २, ५, ४, ४.

अति-याज[d]- -जस्य ऋ ६, ५२, १.

अति√यत्, अत्ययतन् मै ३, ८, ३¶.

अति√या, अतियाथः ऋ ५, ७७, ३; अतियाथः ऋ ६, ६२, २; अतियाहि शौ १३, २, ५; अति···याहि ऋ १, १३५, ७. अतियेषम् ऋ २, २७, १६.

अति√यापि, अतियापयन्ति पै १६, ७५, ७.

ϕअति-ययिवँस्[e]- -वान् ऋ ९, १५, ६; कौ २, ६२२; जै ३, ५०, ६.

अति√राज्, अति···राट् ऋ ६, १२, ५.

अति-रात्र[f]- -त्रः तै १, ६, ९, १; ५, ४, १२, ३; ६, ४, ३, ४; ७, १, ४, २; ५, ४; १०, ४; २, २, २; ३, २; ५, ६; ६, २; ६, १; २; ३, ३, १; १३, १; ४, २, २; ३, २; ६, १; १०, १; ५, १, ३[2]; काठ २५, १०; ३३, २; ३४, ८[3]; ४३, ३; क ४०, ३; पै ८, १९, ७$; -त्रम् ¶तै १, ६, ९, १; २, ४, ७, १$; ३, १, ७, ३; ७, ३, ३, २; ४, १०, १; मै २, ४, ७; काठ ११, ९; ३३, २[2]; ३४, ७; शौ १०, ९, ९; पै १४, ३, २६; १६, ७१, ९; १३६, ९; -त्रात् मै १, १०, ५; काठ ३३, २; ३५, २०; क ४८, १८; -त्रे ऋ ७, १०३, ७; तै ६, ६, ११, ४¶; ¶मै ३, ८, ९; ९, ५; ४, ५, २; ७, ६; -त्रेण ¶तै १, ६, ९, २; ७, १, ५, ३; ४, ५, ४[2]; मै १, ८, ६¶; काठ १४, ९[2]¶; शौ ९, ९, ४; पै १६, ११४, ३; -त्रौ तै ७, २, ६, ३; ९, १; ३; ३, ४, २; ५, ३; ६, २; ७, ४; ८, २; ९, ३; १०, ५; ४, १, ३; २, ५; ३, ६; ४, ३; ५, ४; ६, ३; ७, ३; ५, १, ३; काठ ३४, ८[1]. [°रात्र-त्रि°]

¶अतिरात्र-चर(म>)मा[g]- -माम् काठ २९, १०; क ४६, ३.

अति√रिच्, ¶अतिरिच्यते[h] तै ३, ४, १, १; ४; ७, १, ५, ६; ५, ५, २; अति···रिच्याते तै २, ३, ६, १.

अतिरिच्यते ऋ [८, ९२, १४; २२]; तै १, ४, ४६, १†; ७, ५, ५, २¶; मै २, २, १३¶; †कौ १, १९७; २, १०१०; †जै १, २१, ४; शौ ८, ९, २६; पै १६, २०, ४; ¶अतिरिच्युते मै १, ११, ९; २, २, ८; ४, १, २; ६, ४; ७, ४; ९; ८, ५; काठ १४, १०; २६, ४[2]; २८, ९[2]; २९, ३[2]; ३१, १[2]; ३४, ४:

---

[a]) गस. कानजन्त-कृद्-उपप्रस्व. (पा ६, २, १३९)।

[b]) मत्वर्थीय इनिः (पा ५, २, ११५)। प्रत्ययस्वरः।

[c]) गस. शानजन्त-कृत्-उपप्रस्व. (पा ६, १, १६३; २, १३९)।

[d]) गस. उप. कर्तरि णः प्र. उसं. (पावा ३, १, १४०) कृद्-उपप्रस्व. (पा ६, २, १३९)।

[e]) गस. उप. लिटः क्वसुः प्रत्ययः। कृद्-उपप्रस्व. (पा ६, २, १३९)।

[f]) प्रास. रात्रि-शब्दात्समासान्तः अच् प्रत्ययः। ततश् चित्स्वरः (पा ५, ४, ८७; ६, १, १६३)।

[g]) क. -मम् इत्येवं मूको.। ततो लब्धसङ्केतः काठ. सं. -मम् इत्याकारकं मूको. -माम् इत्याकारतया शोधयेत्। उभयथापि साधु भवति। कथमिति। काठ. तावद् एकादशिनी विशिष्यते (तु. अनुपदं श्रूयमाणं सत्रिया इति पदम्)। सैवं यथा स्यात् तथेति कृत्वा क. च क्रिवि. श्रूयत इत्येष विवेकः द्र.। यत्तु क. सं. -रमे इत्येवं श्रावयितुमिच्छति, तत्र मूको. प्रामाण्यमनुपलभमानोऽसाव् आपश्रौ. १४, ७, २० इत्यत्र प्रयुक्तस्य तादृशस्य शब्दस्य साद्यमुदाहरति। निष्प्रयोजनस्त्वयमुपक्रमो भवति। अन्या हि काठकी कापिष्ठली च शाब्दी प्रवृत्तिरन्या च श्रौतसूत्रीया शाब्दी प्रवृत्तिः। प्रथमा तावद् एकादशिनी-विशेषण-द्वारिकेत्यवोचाम। उत्तरस्यां च अतिरात्राणां चरमः इति कृत्वाऽऽवसानिकोऽतिरात्र एकादशिन्युपलक्षितकर्मविशेषस्य कृत औपयिककाल-लक्षणतयोपस्थाप्यते। तद् एवमुभयोः प्रयोगयोः साधुत्वाऽव्यभिचारसामान्येऽपि शब्दप्रवृत्तिभेदानुरोधेन सौत्रात् पा. सांहितिकः पा. विवेक्तव्य इति दिक्।

[h]) दिवा. कर्तरि प्रयोगः। मै. १, ११, ९ इत्यत्र श्रूयमाणम् एतत्-समानमपि रू. स्वरभेदात् कर्मणि यगन्तं यक्-स्वरं चेत्येवमतो विवेक्तव्यं भवति (द्विउ. रू.)। कर्त्रर्थकर्मार्थयोर् भिन्नयोरपि सतोरिह तात्पर्यतोऽभेदः द्र.।

क ४१, २; ४४, ९[३]; ४५, ४[२]; ४७, १[२]; ¶अतिरिच्येते तै ७, ४, १०, २; ११, २; मै ४, ७, ५; काठ ३३, २; ४; अति (रिच्येते) मै ४, ७, ५; ¶अतिरिच्यन्ते मै ४, ३, ३; ६, ४; ७, ५; ९[२]; अतिरिच्यसे पै ८, १८, १०; अत्यरिच्यत ऋ १०, ९०, ५; मा ३१, ५†; का ३५, १, ५; तै २, ३, ६, १¶; ¶मै १, ११,५; २,२,८; ¶काठ १०,१०; ¶क ३६,१; कौ ३,४, ७†; जै २,३,१०†; शौ १९,६, ९; पै ९, ५, ७; अत्यरिच्यत मै २, ४, ३; ३, ६, ८¶; ¶काठ १४, ५; २३, ४; ३०,७; अति ···अरिच्यत काठ १०, १०¶; अतिरिच्येरन् काठ ३४, १. अति···रिरिचे ऋ ६, २१, २; अति···अरेचि मै ४, ७, ४¶.

¶अति√रेचि, अतिरेचयति तै ७, ३, १, २; मै ४, १, २; ८, ९; काठ ३१, १; क ४७, १; अति··· रेचयतः मै ४, ६, ७; अति··· रेचयन्ति तै ६, ६,११, ५; अतिरेचयेत् मै ३, ६, ८; ४, ८, ९; काठ १३, १०; २६, ४[३]; २७, ५; २८, १[२]; २९, ८[२]; क ३६,२; ४१, २[३]; ४२, ५; ४४, १; अति··· रेचयेत् तै २, ५, ११, ४; ३, ४, १, ३.

अति-रिक्त,क्ता[a]– -¶क्तः तै ७, १, ५,६; १०, ३; ४,१०, २; ११, २; मै २, २, ११; ४, ७, ४[२]; काठ २४, १; २८, ९[३]; ३३, २; ३; क ३७, २; ४४, ९[३]; शौ ८, ९, १७$; पै १६, १९, ७$; –क्तम् ऋ ८, ५८, ३[b]; खि १, ४, १; ¶तै १, ८, ६, २; २. ३, १२, २; ३, ४,१,२–४; ६, २, ४, ७;८[३]; ७,५, ५, २[२]; ¶मै १, ४, ११[३]; २, २, ११[२]; ३, ७, ९[२]; ४, ८, ५[२]; ¶काठ १३, १०[२]; १४, १०[३]; २३, ४; २४, १; २६, ६; २८,९[३]; ३०, ७[२]; ३४, ४[२]; ४०, ५; ¶क ३६, १; ३७,२[२]; ४१,४; ४४,९[२]; –¶क्तस्य तै ३, ४,१, ४; –¶क्ता तै ७, १, ५, ६; –¶क्ताः तै ७, ४, ७,३; मै ४, ७, ३; काठ २९, ८; ३०, ७; –¶क्तात् तै ७, ४, ७,३; मै २, २, ११; –¶क्ते तै ३, ४, १,४; ७, ५, ५, २; काठ १३, १०; ३४, ४; –¶क्तेन तै ७, ५, ५, २; काठ १३, १०; १४, १०; २४, १; २८, ९; ३०,७; ३४, ४; क ३७, २; ४४, ९. [°क्त- ऊन°]

अति-रेक- अन्°

अति√रुच्, †अतिरोचते ऋ १०, १८७, २; जै ३, ३२, २; शौ ६, ३४, ३; †अतिरोचसे ऋ १, ९४, ७; शौ १३, १, ३६; पै १२, १, ७.

अति<>ती-रुच्[c]– -रुभ्याम् मा २५, ३; का २७, ३, २; मै ३, १५, ३.

¶अति<>ती-रोक[d]– -काः काठ २३,१; क ३५,७; –कान् मै ३, ६, १; काठ २२, १३.

अति-रोचमान[e]– -नम् ऋ १०, ५१, ३.

अति√रुह्, †अतिरोहति ऋ १०, ९०, २; मा ३१, २; का ३५, १, २; कौ ३, ४, ६; जै २, ३, ९; पै २, ८१, २; अति··· अरुहत्[f] शौ १९, ४९, २.

ɸअति-रोहत्[g]– -हन् ऋ ९, १७, ५.

अति√रेज्[h], अति··· रेजन्ते ऋ १, १४३, ३.

अति-लोमश[i]– -शम् मा ३०, २२; का ३४, ४, ४.

¶अति√वद्, अतिवदति तै ५, ४, ७, ७; ६, १, ८, १; मै ३, ७, ६; काठ २१, १०.

---

[a]) कर्मणि निष्ठायामनन्तरगतिस्वरः (पा ६,२,४६)।

[b]) 'अति। रिक्तम्' इति पपा. अपेक्षितमध्याऽवग्रह-विहीनोऽनपेक्षितविराममध्यो मुद्रापकप्रमाददुष्टः द्र.।

[c]) मै. उपसर्गस्य क्विपि दीर्घः (पा ६, ३, ११६)। गत्युत्तर-कृत्-प्रकृतिस्वरः (पा ६,२,१३९)।

[d]) उस. घञन्ते कृति थाथादि-स्वरः (पा ६,२,१४४) उपसर्गस्य च दीर्घः (पा ६,३,१२२)। मै. नायं दीर्घः।

[e]) गस. शानजन्त-कृद्-उपप्रस्व. (पा ६,२,१३९)।

[f]) 'अधि···अरुहत्' इत्यभिमतः पाठः संटि. द्र.।

[g]) गस. शत्रन्ते कृति उपप्रस्व. (पा ६, २, १३९)।

[h]) यदत्र अक्तुः > -क्तुम् इति विभक्तिं विपरिणमय्य सा. तत्सम्बन्धेन कप्र. अपश्यत्, तद् भ्रान्तम्। अक्तु- इत्यस्येहोपमानभावेन श्रूयमाणत्वप्रतीते रात्रिपर्यायत्वा-ऽभावात्। अस्य च योऽर्थः ऋ २, ३०, १ इत्यत्राऽपां गतिमतीनामभिसंबन्धेनाभिप्रेतो भवति स एवेह सिन्धु-त्वेन विशिष्टः सन्नग्नेः सिन्धूनां सतां त्वेषाणां स्यन्दन-शीलत्वमुखेनौपम्यौपयिकतामापद्यमानः द्र.। एवं चाग्ने-स्त्वेषा अतिशयेन रेजन्ते गतिमन्तो भवन्तीति सा. अनभिप्रेतोऽपि सन् प्रकरणेन संगततर इति सदर्थः द्र.। 'न' इत्यस्याऽनिषेधार्थीयत्वादिति दिक्।

[i]) प्रास. पूपप्रस्व. (पा ६,२,२)। धातुलोप-विषयाऽभा-वादिह 'अतेः' (पा ६,२,१९१) इत्यन्तोदात्तो न भवति।

अति···वदति मै ४, २, १;
अति···वदत्[a] खि ५, १५, ६;
अतिवदेत् शौ ११, ३, २५; पै १६, ५४, ११.
¶अति-वाद[b]– -दे[c] तै ६, ४, ५, २. [°द- अन्°]
अति-वादन-
अति-वादुक- } अन्°
अति √वन्, ‡[d]अति···वनामहे कौ २, २४३; जै ३, २१, ८.
अति √वह्, †अति···ववक्षिथ ऋ[१ ८१, ५; १०२, ८]; ३, ९, ३; कौ १, ३१२; जै १, ३२, १०; ४, ६, १; †अति···वक्षत् ऋ ६, २२, ७; शौ २०, ३६, ७.
अति √वा, अतिवाति शौ ४, ५, २.
अति √वी, अति···वेति ऋ ५, ४४, ७. अति···वेष्यत्[e] पै २, ६१, १.
अति √१वृ
¶अति-वरेण्य[f]– -ण्यः काठ २४, १; क ३७, २.
?अति-वृद्धि[g] पै १६, ६०, २.
अति √व्यथ्
अति-व्यथ- दुर्°
अति √व्यध्→विध्, अति···विध्यति ऋ ४, ८, ८; अतिविध्यन्ति काठ ३८, १४; शौ ८, ५, १९; पै १६, २८, ८.
अतिव्यात्सीः तै ७, ५, १०, १.
†अति-वि(द्ध→)द्धा[h]– -द्धा ऋ ८, ९६, २; मै ३, ८, ३; ४, १२, ५; काठ ९, १९.
अतिविद्ध-भेष(ज→)जी[i]– -जी शौ ६, १०९, १.
†अति-विधे[j] ऋ ५, ६२, ९; मै ४, १४, १०.
अति-व्याध- अन्°
अति-व्याधिन्[k]– -धी मा २२, २२; का २४, ८, १.
अति-व्याध्य- अन्°
अति √व्रज्
अति-व्रजत्[l]– -जद्भिः ऋ १, ११६, ४.
अति √शद्>शीय्, अतिशीयन्ते मै २, ६, १[२]; ४, ३, १; काठ १५, १.
अति-शार्वर[m]– -रे शौ ४, ४; ५, -रेषु शौ ७, ८५, ४.
अति √शास्
अति-शस्[n]– -शसा खि ५, ५, ७.
¶अति √शिष्, अत्यशिष्यत तै २, ४, १२, १; ५, २, १; ६, १, ३, ३; ४, २, १; ६, ८, १.
अति-शिष्ट[b]– -ष्टाय तै ७, ३, २०, १; काठ ४३, १०.
अति-शुक्ल[o]– -क्लम् मा ३०, २२; का ३४, ४, ४.
अति √१शुच्
अ(ति>)ती-शोक[p]– -कः पै १, ३२, ३.

---

[a]) तु. अभि···विदत्, न् इति शौ २०, १३०, १४ पाभे.।

[b]) गस. उप. घञन्ते कृति थाथादि-स्वरे (पा ६, २, १४४) प्राप्ते परादि-स्वरः उसं.। न च गस. मा भूत् प्रस. भवत्विति वाच्यम्। तथात्वेऽप्य् अव्यय-पूपप्रस्व. प्राप्ते (पा ६, २, २) परादिस्वरस्य उसं. ऋते निर्वाहासम्भवादिति यावत्।

[c]) 'गायत्री···नातिवादे (भवति)' इत्येवम् एकं वाक्यं पपा. द्र (तु. भा.)। KT. त्वत्र वाक्यद्वयं वष्टि। 'गायत्री (भवति)' इत्येकं 'नातिवादो (भवति)' इत्यपरम् इत्येवं तन्मते प्र१ इति विवेको विमृश्यः।

[d]) 'अति···मनामहे' इति ऋ (९, ४१, २) पाभे.।

[e]) तु. ऋ १, १८९, २। किमत्राऽपि 'विश्वा' इत्यस्य स्थाने 'वेष्यत्' इत्यपपाठो भवत्य् उताहो √वी इत्यस्याऽन्युपसृष्टस्याऽन्तर्भावित-ण्यर्थे तिङ्-वृत्तमित्यत्र विमृड्भिः प्रततप्रयत्नैर् भाव्यम्।

[f]) प्रास.। उप. यद्र.।

[g]) यमु. पा. चिन्त्यः। अ-व्यृद्धि- यद्र.।

[h]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९)।

[i]) षतस. सासस्व. (पा ६, १, २२३)। उप. स्त्रियां ङीप् (पा ४, १, ३०)। यत्तु सा. प्रथमवर्णके बस. इत्याह। तन्न। तथात्वे हि पूपप्रस्व. स्यात्। यदप्युत्तरवर्णके अतिविद्ध- इति कर्तरि क्तान्तमित्याह। तदपि न। अप्रसिद्धेरसामर्थ्याच्च साहसमात्रताऽव्यभिचारादिति। न चेहाभीष्टः षतस. तदविदित इति चेपः। तद्विद्वानपि क्षिप्तभेषजी- इत्यत्र तत्रैव द्वितीये वर्णके तथा व्याचक्षाणोऽपि यदनायासेनोक्षणं व्याकरणविहारमभिरोचयते न च तत्र दोषलवमपि शङ्कते तेनैव चित्रीयते चेतः।

[j]) केनन्त-कृद्-उपप्रस्व. (पा ६, १, १९७; २, १३९)।

[k]) ताच्छील्ये णिनिः। कृद्-उपप्रस्व. (पा ६, २, १३९)।

[l]) गस. शत्रन्त-कृत्स्वरः प्रकृत्या (पा ६, २, १३९)।

[m]) प्रास. 'अहःसर्व-' (पा ५, ४, ८७ उउ.) इत्यत्र समासान्ताऽच्प्रकरणे शुर्वरी- इति उसं.। तेनाऽकारान्ततापत्तिश्च चित्स्वरश्च द्र. (पा ६, १, १६३)।

[n]) 'अतिशषा' इति मुपा. चिन्त्यः। असंगतेः। तु. तत्रैव संटि. यतः साद्याऽन्तरबलेन दन्त्यसकारान्तं प्राति. मूलतोऽभिप्रेतमिति सुलभं भवति।

[o]) प्रास. अव्ययपूपप्रस्व. (पा ६, २, २)।

[p]) उस. उप. भावे घञ्। पूप. दीर्घः (पा ६, ३, १२२)। 'अभिशोकुः' इति शौ (१, २५, ३) पाभे.।

अति√शो(→शा), अति···शिशीते ऋ १, ३६, १६.

अति√श्रा>श्रृ

अति-श्रृत[a]- -तम् मै १, ८, २.

अति√ष(<स)ञ्ज्[b]

अति-ष(क्त>)क्ता[a]- -क्ता शौ १२,३,२३;-¶क्ताः,-¶क्ताभिः काठ २५, १; क ३८, ४.

अति√षि(<सि)[c]

†अति-षित[a]--तम् ऋ १०, ७३, ९; कौ १, ३३१; जै १,३४,९.

अति√ष्क<>स्कन्द्[d], अतिस्कन्दति काठ ६, ३; क ४, २; अतिष्कन्दन्ति ऋ ५, ५२, ३.

अति-ष्कदस्(>:)[e]ऋ १०,१०८,२.

अति-ष्कदे[f] ऋ ८, ६७,१९.

अति-ष्कु(द्वन्>)द्वरी[g]- -रीम् मा २०, १५; का ३४, ३, २.

अति√ष्ठि(<स्ति)घ्[h]

अति√तिष्टिघिष

अति-तिष्टिघिषत्[i]- -षन् मै १, ६, ३.

अति-ष्टिघम्[j] मै १, ६, ३.

अ-तिष्ठत्[k]- -ष्ठन्तम् ऋ १०,८९,२.

†अतिष्ठन्ती[l]- -न्तीनाम् ऋ १, ३२, १०; पै १३, ६, १०.

¶अ-तिष्ठमान,ना[k]- -ना तै ६, १, ४, १; ४, ११,२; -नाः तै २, २, ११, ४; ५; ६, २, २, १; -ने तै ६, १, ३, १.

अति√ष्ठा(<स्था)[m]→तिष्ठ,अतितिष्ठति काठ १३, ४; †अत्यतिष्ठत् ऋ १०,९०,१; मा ३१, १; का ३५, १, १; कौ ३, ४, ३; जै २, ३, ६; शौ १९, ६, १; पै ९, ५, १.

अतितस्थौ ऋ १०, ६०,३.

अति-ष्ठा[n]-

अतिष्ठा-वत्[o]- -वान् शौ ३, २२, ६.

अति-ष्ठावन्[p]- -वा पै २, ६९,५.

अति-ष्ठाय[q] शौ १९, ३३, ५; पै १२, ५, ५.

अति-ष्ठाय[r]- -यः;-यम्[r]काठ १३,४.

अति-सर्ग- अति√सृज् यद्र.

अति√सह्, अति[s] (सहस्व);(अति) ···सहस्व तै ४, १, ७, ३; अति[s](सहस्व); (अति)···सहस्व मा २७,६; का २९, १, ६.

अति√सृ, अतिसरः पै ५, ३१,७.

अति-सर्[t]- -राः शौ ५, ८, २;

---

[a]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २,४९)।

[b]) 'उपसर्गात्' (पा ८,३,६५) इति षत्वम्।

[c]) 'परिनिविभ्यः' (पा ८, ३, ७०) इत्यत्र अतीत्यस्य उसं. षत्वम् द्र.।

[d]) 'परेश्च' (पा ८, ३, ७४) इत्यत्राऽतेर् उसं. द्र.। तेन शाखाभेदेनाऽतिपरस्य √स्कन्द् इत्यस्य षत्वविकल्पः सुसाधः स्यात् (तु. रू.)।

[e]) गस. कसुन्नन्त-कृद्-उपप्रस्व. (पा ६, १, १९७;२, १३९)।

[f]) उप. तुमर्थे केन् प्रत्ययः। सस्व. नापूद्र.।

[g]) गस. क्वनिबन्त-कृद्-उपप्रस्व. (पा ६, २, १३६)। स्त्रियां ङीब् रेफान्तादेशश्च (पा ४,१,४)।

[h]) पा ८,३,६५ इत्यत्रोपसंख्यानाद् षत्वम्।

[i]) सन्नन्ताच् शत्रन्तं प्राति. द्र.। गत्युपपद-कृद्-उपप्रस्व.। सनो नित्त्वादाद्युदात्तत्वे प्राप्ते (पा ६,१,१९७) अभ्यासात् परस्य स्वरः उसं. (पा ६, १, १९२)।

[j]) गस. उप. कमुल् प्रत्ययः। कृद्-उपप्रस्व. (पा ६, १, १९३; २, १३९)।

[k]) तस. नञ्-स्वरः (पा ६,२,२)। उप. यद्र.।

[l]) स्त्रियां ङीपः (पा ४,१,६) पित्त्वान्निघाते स्वरेऽभेदः।

[m]) षत्वम् (पा ८,३,६५) कृद्रूपेष्व् औपयिकं द्र.।

[n]) नाउ. मतुबन्तस्य सिद्ध्यौपयिकं सदेतत् प्राति. तत्तादवस्थ्याधीनसत्ताकं द्र.। यस्थि. उप. भावे अङ् (पा ३,३,१०६)। ततः स्त्रियां टाप्। गत्युत्तर-कृत्-प्रस्व. (पा ६, २, १३९)।

[o]) मतुपः पित्त्वान्निघाते नापू. स्वरेऽविशेषः। यदिह सा. एतद्=नाउ. इत्येवमभिसंधायैतद् वनिबन्ततया विकल्पेन व्याचिख्यासति, तदरुचिरमिव भवति। पपा. 'वान्' इत्यवयवस्याऽवगृहीतत्वाद् मतुपस्तदास्था-विषयत्वस्य स्पष्टत्वाद् वनो नलोपाऽभावस्य च छान्दसत्वेन व्याख्येयस्य व्यर्थप्रयासाऽनर्थान्तरत्वात्।

[p]) गस. उप. वनिप् प्रत्ययः (पा ३, २, ७४)। प्र१ रूपे नलोपः (पा ८,२,७) द्र.।

[q]) गस. ल्यबन्त-कृद्-उपप्रस्व. (पा ६, १,१९३; २, १३६) इह सा. 'अधिष्ठाय' इति पाठमाह।

[r]) गस. 'आतश्चोपसर्गे' (पा ३,१,१३६) इति सगतिकेभ्य आदन्तेभ्यो धातुभ्यः क-प्रत्ययेऽनुशिष्टे सत्यपि 'श्याद्' (पा ३,१,१४१) इत्यत्र सोपसर्गादपि √स्था इत्यस्मात् तदपवादात्मकः कर्त्तरि णः प्र. उसं.। युगागमः (पा ७,३,३३)।

[s]) 'अति···तर' इति पाठं तै. मा. काठ. शौ. पठन् BC. उपेक्ष्यः भिन्नपाठदर्शनादिति (तु. अति√चर्> ···चर, इत्यत्र च अति√तॄ>···तर, ···तर इत्यत्र च टि.।

[t]) पचाद्यचि थाथादि-स्वरः (पा ३, १, १३४; ६, २, १४४)।

पै ७, १८, २; -०राः शौ ५, ८, ४; पै ७, १८, ४;५;-रान् शौ ५, ८, ७.

अति-सृत्य पै ७, १८, ५.

अति √सृज्, अतिसृजति काठ २४, ७; अतिसृजामि शौ १०, ५, १५-२१; १६, १, ४; पै १०, ९, १; १६, १२९, १-१०; अति···सृजामि शौ १६, १, ७; पै ५, ३२, १; अतिसृजामः शौ १०, ५, १५-२१; अति···सृजन्तु शौ ४, १६, ६; अतिसृजस्व पै ५, २४, ८; अतिसृज शौ १५, १२, २; अतिसृजेत् शौ १५, १२, ३.

अतिसृज्यन्ते मै १, ४, ६.

†अति···असृक्षत ऋ ९, १०७, २५[a]; कौ १, ५२२; जै १, ५३, १०.

अति-सर्ग[b]- -र्गम् मै २, १३, २२; काठ ४०, १२.

अति-सृष्ट[c]- -ष्टः मै १, १, २; शौ १५, १२, ४; ७; १६, १, १; -ष्टाः शौ १६, १, १. [°सृष्ट-अन्°]

अति √सृप्, †अतिसर्पति ऋ ८, १०२, २१; मा ११, ७४; का १२, ७, ९; तै ४, १, १०, १; मै २, ७, ७; काठ १६, ७; शौ ४, २०, ९; †अतिसर्पति ऋ ९, ८६, ४४; कौ २, ९६५; जै ४, २०, १०; अतिसर्पात् शौ ४, १६, ४; अतिसर्पेत् तै ६, ३, १, ५[2]; काठ २६, १; क ४०, ४.

अति-सृप[d] मै ३, ८, १०.

अति √स्कन्द् अति √ष्कन्द् द्र.

अति-स्थूल[e]- -लः मै ३, ९, ४¶; -लम् मा ३०, २२; का ३४, ४, ४.

अति √स्रस्[f], अतिस्रसेम ऋ ६, ११, ६.

अति √स्रु, अत्यस्रवत् मै ४, २, १२.

अति-स्रुत- -तः[g] मा १०, ३१; का ११, १०, १; मै २, ३, ८; ३, ११, ७.

अति √स्वृ, अति···स्वर्षत्[h] कौ ४, ६; ७[2].

अति √हन्, अतिहन्यात् मै २, २, १¶.

अति-घातम्[i] मै २, ४, ५.

अति-घ्न[j]-, >घ्नी-

अतिघ्न्य[k]- -घ्न्यः शौ ११, ७, १६; पै १६, ८३, ६.

अति-ह(त→)ता- -ताः पै १३, ५, २.

अति √२हा

अति-हाय[l] ऋ १, १६२, २०; मा २५, ४३†; ¶तै २, ६, ६, ६; ४, ६, ९, ४†; ६, ३, १, ३; ¶मै १, ८, ५; ३, ८, १०; काठ ६, ५; ४६, ५†; क ४, ४.

?अतिहायति[m] पै ५, २१, २.

अति-हित- अति √धा द्र.

अति √हु, अतिजुहोति मै ३, ४, १.

¶अति √हृ, अतिहरेत् तै ६, ३, ९, ५; अतिहरेत् तै २, ६, ८, ४; ६, ३, ९, ५; मै ३, १०, १[2]; काठ २८, १.

†अतिजभ्रिषे[n] ऋ [९, ८६, २९; १००; ९]; कौ २, ३६८; जै ३, ३०, ११.

अति-ह्रस्व[e]- -स्वम् मा ३०, २२ का ३४, ४, ४.

अति √ह्वे, अतिह्वये पै ५, ४, ९.

अती(√ति √इ), अत्येति ऋ ६, ४, ५; ९, ७२, ३; [८५, ९; ८६, ७];

---

[a]) √सृज् इत्यस्य ण्यन्तेन √गम् इत्यनेन समानतात्पर्यपर्यवसानकत्वात् कर्मीभूतानां सोमानां पवित्राऽतिक्रमणेन तत्पूर्वकं धारया सृज्यमानत्वेन च समानमन्वितत्वाद् गतित्वमभ्युपेयमन्यथाऽऽस्थश्च सा. उक्तादेव हेतोरुपेक्ष्यश्च द्र.।

[b]) उप. घञन्ते कृति थाथादि-स्वरः (पा ६,२,१४४)।

[c]) कर्मणि क्तेऽनन्तरस्य गतेः प्रस्व. (पा ६,२,४९)।

[d]) केनन्त-कृत्-स्वरः प्रकृत्या (पा ६,१,१९७;२,१३९)।

[e]) प्रास. अव्यय-पूपप्रस्व. (पा ६,२,२)। उप यद्र.।

[f]) अति √ध्वस् इत्यत्रत्यं टि. द्र.।

[g]) शाखान्तरीयः पाभे. 'अतिद्रुतः' इति अति √द्रु इत्यत्र टि. द्र.।

[h]) शाखान्तरीयः अति···पर्षत् इति पाभे. अति √पृ इत्यत्र गद्र.।

[i]) आभीक्ष्ण्ये णमुलि कृद्-उपप्रस्व. (पा ३,४,२२; ६,१,१९३; २,१३९)।

[j]) घञर्थे टक् प्र. उसं. (पा ३,२,५३)। उपधालोपः कुत्वञ्च (पा ६,४,९८; ७,३,५४)।

[k]) तस्येदमित्यर्थे यति तित्स्वरितं द्र. (पा ४,३,१२१; ६,१,१८५)।

[l]) अतिक्रमणेऽतिलङ्घन इत्यर्थः। त्यागार्थस्याऽसंगतेर् अति √१हा स्यादित्येवं भ्रमो न स्यात्। ल्यबन्त-कृद्-उपप्रस्व. (पा ६, १, १९३; २, १३९)।

[m]) विकृतः पा. संस्करणान्तरसापेक्षः। अत्यू अंहतिम् अति नो हिनुष्व इद् इति त्रैष्टुभः पादो मूलतः संभाव्येत।

[n]) केवलं मौलिकस्य धात्वादेर् हकारस्य भकारतया दर्शनं भवति। अभ्यासांऽशस्य जकारतया श्रुतेर् बकारतया श्रूयमाणाभ्यासाद् √भृ इत्यस्माद् विवेकः सुकरः द्र.।

[९६, ६; १७]; १०, ३१, ९; मा ४०, ४; का ४०, १,४; तै ३, ४, ११, २†; ६, १, ४, ९¶; मै ४, १, ९¶; १२, ६†; काठ २३,१२†; †कौ २,२९४; ५२५; †जै ३, २४, १०; ४१, १; शौ १०, ८, १६; पै १६, १०२, ५; ¶अत्येति तै ६, ६, २, १²; मै ४, १, ३; काठ १२, ११; ३१, २; ७; ३७, १२; क ४७, २; ७; अति॰॰॰एति मा ३१, १८; का ३५, २, २; तै ६, ३,३,१¶; काठ २६, ३²; शौ १२, २, ११; अती(←ति) ॰॰॰एति मै ३, ९, २¶; अति-यन्ति ऋ १, ३२, ८; ९, ६९, ९; तै ३, २, २, १; २; मै ४, ५, २¶; शौ १८, ३, १७; पै १३, ६, ८; †अत्येपि ऋ ९, ९७, ३१; कौ १, ५३४; जै १, ५५, २; शौ १३, १, ५७$; अत्येपि ‡[a]कौ १, ५६२; २, ६६६; ‡[a]जै १, ५७, ७; ३, ५५, ७; शौ १८, १,३९‡[a]; १९, ३३, ३; पै १२, ५, ३; अति॰॰॰एतु शौ ६, ७५, ३²‡[b];

†अतीताम् ऋ १०, ८५, ३२; शौ १४, २, ११; अतीहि ऋ ८, ३२, २१; मा ३, ६१²; का ३, ८, ६²; तै १, ८, ६,२; मै १, १०, ४; २०; काठ ९, ७; ३६, १४; क ८, १०; कौ १, २२३†; जै १, २४, ११†; †अति॰॰॰इहि ऋ ३, ४५, १; ९, १०७, १९; मा २०, ५३; का २२, ५, ७; कौ १, २४६; ५१६; २, २७२; १०६८; जै १, २६, ४; ५३, ६; ३, २३, ४; शौ ७, १२२,१; १०, १, १६$; पै १६, ३६, ६$; अति॰॰॰इहि ऋ ८, ३२, २२; अति॰॰॰अयाम शौ १२,३,१८; अत्यायन् काठ १२, ३¶; ¶अतीयात् तै ६, ३, १, ६; ४, २, ३; मै ३, ८, ९; १०; ¶अतीयात् तै ६, ४, २, ३; मै ३, ८, १०²; ४, १, ४; काठ २६, १³; ३१, ३; क ४०, ४⁴; ४७, ३; अतीयाम ऋ ५, ५३, १४. अति॰॰॰एषः[c] शौ ९, ५, ९; पै १६, ९७, १०.

अती(ति-इ)त- -ताः पै १३, ५, १५.

अती(ति-इ)त्य काठ ३२, ६³¶.

अती(ति-इ)त्व(त्वन्>)री[d]- -रीम् मा ३०, १५; का ३४, ३, २.

ϕअती(ति-ई)यिवंस्[e]- -वांसम्, अति(ईयिवांसम्) ऋ ३, ९, ४.

अत्या(ति-आ)य[f]- -यम् शौ १०, ८, ३; पै १६, १०१, ६.

अत्या(ति-आ)यम्[f] ऋ ८, १०१, १४.

अत्ये(ति-ए)तवै[g] ऋ ५, ८३, १०.

अत्येतु- द्र॰.

अती-काश- अति√काश् द्र.

अती(ति√ई) क्ष्,अतीक्षेत काठ ३४, १८.

अ-ती(क्ष्ण>)क्ष्णा[h]- -क्ष्णाम् काठ २५, १; क ३८, ४.

अती-रुच्-, अती-रोक- अति √रुच् द्र.

अ-तीर्ण[i]- -र्णम् ऋ ८, ७९, ६.

¶अ-तीर्त्ति[j]- -र्त्यै काठ १९, २; क २९, ८.

¶अ-तीर्थ- -र्थम् काठ २६, ८;

---

[a]) 'पर्येति' इति बाह्वृचः (९,८२,१) पामे. ।

[b]) एकतरत्र 'अति' 'इहि'इति ऋ(८,३२,२२)पामे.द्र.।

[c]) लेटि सिपि अटि मपुर द्र. । यत्तु GW. प्रभृ. √एष् इत्यत एतद् रू. इत्याहुस्तन्न । लेडर्थस्येह विवक्षितत्वाद् अस्य रू. च ततो लेटि ग्रहीतुमशक्यत्वात् । एपतु (शौ ६,६७,३) इत्यत्र उपेपन्तम् (शौ ८,६,१७) इत्यत्र च कामम् ?√एष् वा स्यात् तन्मूलभूतः √१इष् इति वा स्यान्न त्विहाऽन्यथान्वये प्रकरणे । ननु तत्राऽप्युभयत्र√इ इत्यत एव रूपकल्पनां कुरु किं वृथाऽनया धात्वन्तरकल्पनयेति चेत् । तर्हि मैवं जल्पि । तथाऽभ्युपगमे√इ इत्यस्य लेडङ्गाद् इव सतो लोट्-सद्-अन्यतर-प्रत्ययोत्पत्तिप्रलङ्गात्तस्य च नितान्तं दुष्कल्पत्वादिति दिक् ।

[d]) गस. उप. क्वनिपः पित्त्वान्निघाते धातु-स्वरः प्रकृत्या (पा६,२,१३९)। स्त्रियां ङीब् रेफान्तादेशश्च (पा ४,१,७)।

[e]) स्वरसंस्कारार्थम् अति√या>अतियियिवंस्-इतिद्र.।

[f]) समानायां श्रुतौ शाखाभेदेन भिन्नस्वरपर्यवसायिनी भिन्ना शब्दप्रवृत्तिर् द्र. । तथाहि, उभयत्र क्रिवि. एतदिस्येवं सत्यपि बाह्वृचे उप. णमुलन्तम् अव्य. लिति प्रत्यये तत्पूर्वधातुस्वरविशिष्टम् (पा ६,१,१९३) भवति। शौ. च ण-प्रत्ययान्तस्य (पा ३,१,१४१) प्रत्ययस्वरेणाऽन्तोदात्तस्य प्राति. द्वि१ भवतीति विवेकः सुलभः । उभयत्र तावद् गत्युत्तरकृत्-प्रकृतिस्वरः (पा ६,२,१३९) भवतीति स्पष्टम्। अत्रोक्तप्रकारेण भिन्नां शाब्दीं प्रवृत्तिमविविञ्चानाः PW. GW. MW. प्रभृ. अर्वाञ्चोऽप्रमाणं स्युः ।

[g]) तवै-प्रत्ययान्तस्य द्वैस्वर्यं भवति (पा ६,२,५१)।

[h]) तस. उप. तीक्ष्ण- यद्र. ।

[i]) तस. नञ्-स्वरः (पा ६,२,२)। उप. <√तॄ यद्र. ।

[j]) तस. उप. √तॄ+भावे क्तिन् द्र. ।

क ४१, ६; –र्थेन काठ २६, ७[a]; क ४१, ५.

**अती-शोक्-** अति√१शुच् द्र.

¶**अती**(ति√१इ) ष्, अत्यैषन् मै १, १०, १४; काठ ३६, ८.

**अ-तुर**[b]– -रः पै ५, १३,७; -राणाम् शौ ७, ५२, २. ?आतुर- यद्र.

**?अ-तुर्मुह्य**[c]– -ह्यम् मै २, १, ९[२]¶.

**अ-तू तुजि**[d]– -जिम् ऋ ७, २८,३.

**१अ-तूर्त**[b]– -†र्तम् ऋ ८, ९९, ७; काठ २, १५[e]; कौ १, २८३; जै १, ३०, १; शौ २०,१०५, ३.

**२अ-तूर्त**[f]– -र्तः ऋ १, १२६,१. खि ५, ५, १; तै २, ५, ९, २; –†र्तम् ऋ ५, २५, ५; मै ४, ११, १; –र्ते ऋ १०, १४९, १.

**अ-तूर्तदक्ष**[g]– -०क्षा ऋ ८, २६,१.

**अ-तूर्तपथिन्**[h]– -न्थाः ऋ ५, ४२, १; १०, ६४, ५.

**अ-तृदिल**[i]– -लासः ऋ १०, ९४, ११.

---

[a]) **'तीर्थेन'** इति मुपा. मुद्रणप्रमादजः ।

[b]) तस. नञ्-स्वरः (पा ६,२,२)। उप.<√तुर् यद्र.।

[c]) गुणप्रतिषेधेऽत्र नञ्-तस. **'ययतोः'** (पा ६, २, १५६) इत्युक्तोऽन्तोदात्तः । उप. **तुर्मुह्-**>**तुर्मुह्य-** यद्र. । यत्त्व् (अन्तर्मुह्->) **अन्तर्मुह्य-** इतीव R. पा. चिक्लृप्सते (तु. SBW.), तदपि विमृश्यम् । तथा सति ***अन्तर्मुह्-** इत्यतो भावे यः प्रत्ययः उसं. (पा ५, १, १२६) तत्स्वरश्च द्र. ।

[d]) तस.नञ्-स्वरः (पा ६,२,२)। उप.<√तुज् यद्र.।

[e]) बाह्वृच्यां समानायां श्रुतौ (तु. ऋ ५, २५, ५) उत्तरादिस्वरः । केवलं शाखाभेदेनायं विसंवाद उत वा किमप्यन्यद् भेदकं निमित्तं भवतीत्यादिविमर्शः वैश. विस्तरणीयः ।

[f]) बस.उप.भावे क्तः प्र. । **'नञो जर-'**(पा ६,२,११६) इत्युपलक्षणं न त्वत्र परिगणनमिति वक्तव्यम् । किमर्थमेतदुच्यत इति । यथा **तूर्त-** प्रमृ. लक्ष्याण्यपि समाविश्येरन्निति । यदा **१अ-तूर्त-** इति तस. भवति तदा क्तः कर्मणि भवति । यदा च **२अ-तूर्त-** इति बस. भवति तदा क्तो भावे भवतीत्युक्तपूर्वया दिशोभयोः प्रयोगयोरर्थसामान्यामेदेऽपि सूक्ष्मः कोऽपि शाब्दिको विवेकः द्र. ।

[g]) तस. नञ्-स्वरः (पा ६,२,२) । उप. बस. यद्र. । **'अतूर्त-दक्षा'** इति पपा. भवति । ततो न मन्येत यथाऽत्र नञ्-पूर्वं शब्दरूपं बस. भवतीति च **अतूर्त-** इति तत्र बस. पूप. भवतीति च । प्रवृत्तिर्ह्येषा पपा. भवति यथा निषेधार्थीयो नञ् नाऽवगृह्यत इति । ततः किमिति । ततोऽत्र **तूर्त-** इत्येतद् मूलतो नञा पुरश्चिकीर्षितं भवति **तूर्त-दक्ष-** इति वेति विनिश्चयो दुष्कर इति । कथमिति । उभयथापि स्वराऽविशेषे सामान्यार्थाविशेषे च सति विशेषणतायोगसामान्यादिति । तथाहि । यदा **तूर्त-** इत्यनेन नञ् मूलतः समस्यते तदा प्रथमं नञ्-स्वरस् तस. जायते । पश्चाचासौ **दक्ष-** इत्यनेन समस्यमानः बस. पूपप्रस्व. उपजनयति । कल्पान्तरे तस. उक्तः स्वरः । एवमर्थेऽपि तात्पर्यतः सामान्यं भवति । तद् यथा । यदा तस. तदा भावविशेषविशिष्टेन पदार्थविशेषेण विशिष्टो नञा विशिष्येत । यदा च बस. तदाऽसौ नञ्विशिष्टभावविशेषेण विशिष्टेन पदार्थविशेषेण विशिष्येत । अत एवंविधेषु निगमेषु तैस्तैर् व्याख्यातृभिः क्वचिद् बस. इति क्वचित् तस. इति क्वचिच्च बस. वा तस. वेति ताटस्थ्येन विकल्पभूयस्त्वमिव यदभाजि तेन नैव कापि चित्रीया सावसरा स्यात् । एस्थि. अपि यथा श्रौती शाब्दी प्रवृत्तिस् तस. विशेषेण पुष्णती दृष्टिपथमवतरति तथा नाउटि. द्र. ।

[h]) नापूटिदि. सस्व. द्र. । अत्र **तूर्त-पथिन्-** इति उप. समासान्तः अः प्र.(पा ५,४,७४) सामान्येनाऽनिवार्यप्रवृत्तिरपि सन् यल्लब्धावसरो न भवति तेनैतज् ज्ञापितं भवति यथा नञ्-संनियोगेन समासान्ताभावीयं यदनुशासनं (पा ५, ४, ७१) भवति तस्याऽयं विषय इति । स च समासान्ताऽभावो नञ्पूर्वशब्दान्तात् तस. एवाऽनुमतो भवति । अत्र **पथिन्-** इति स्वस्य च तदन्तस्य च समस्तशब्दरूपस्य समानं ग्राहको भवतीति तन्त्रसमयः विदुषां सुविदितः । यच्च **'पथो विभाषा'** (पा. नाउ.) इति **पथिन्-** इत्यस्याऽस्मिन् नञ्-संनियोगेन समासान्ताऽभावप्रकरणे विकल्पविषयत्वमन्वशासि तस्य तावद् **अ-पथ-** इत्यत्र यस्था. निदर्शनं भवति । तद् विनिगमनाऽन्तरस्य नितान्ताऽभावेऽत्रत्यः समासान्ताऽभाव एव विनिगमको भवति यथैतत्प्रकारकेषु नञ्-पूर्वपदेषु समस्त-शब्दरूपेषु सर्वत्राऽसति बाधकाऽन्तरे तस.भवतीत्येवमेवाऽभ्युपेयमिति। अतो यत् सा. **'अतूर्तस्वरारहितः पन्था यस्य'** (ऋ १०, ६४, ५) इत्येवं व्याचक्षाणोऽत्र बस. इत्यातस्थे तन्मन्दमिव भवति । तथात्वे नञ्पूर्वत्वाऽभावे तत्पुरुषाऽभावे च समासान्ताऽभावस्य दुरुपपादत्वात् । अपरं चाप्यत्र दूषणं भवति । तद् यथा । त्वरा-रहितत्वेन व्याख्यायमानं पूप. बस. भवेत् । तेन च तद् **२अतूर्त-** इत्याकारकं स्यान्न तु **१अतूर्त-** इत्याकारकम् । एवं चाऽभ्युपगते सति प्रकृते बस.पूपप्रस्व.नञ्-स्वरो नैवोपपद्येत ।

[i]) तस. नञ्-स्वरः (पा ६,२,२)। उप. <तृद् यद्र. ।

अ-तृप्[a]- -पासः ऋ ४, ५, १४.
अ-तृप्णुवत्[b]- -वन्तम् ऋ ४, १९, ३.
अ-तृषित[c]- -ताः ऋ १०, ९४, ११.
अ-तृष्णज्[d]- -ष्णजः ऋ १०, ९४, ११.
अ-तृष्य[e]- -ष्याः शौ ७, ६२, ४; ६. -ष्यासः पै ३, २६, ३.
अ-तृष्य(त्→)न्ती[f]- -न्ती ऋ १, ७१, ३.
अ-तेजस्[f]- -जसम् शौ २, १९, ५; २०, ५; २१, ५; २२, ५; २३, ५; -¶जाः काठ ३५, १७; क ४८, १५.
?अतैपैता[g] पै ५, ३१, २.
अतोऽधि- एतद्→५अ यद्र.
अत्क- √अत् यद्र.
अत्तवे, अत्तुम्, अत्तृ-, अत्त्वा-, अत्त्वाय √अद् यद्र.
?अत्मन्- अत्य- √अत् द्र.
अत्यं(ति-अं)हस्[h]- -हाः मा १७,८०; का १८, ७, १; तै १, ८, १३, ३; ४,६, ५,५; मै २, ६, ६¶; ११,१; काठ १८, ६; क २८,६.
¶अत्य(ति-अ)ग्र[i]- -ग्रम् तै २, ६, ५, ४[2]; काठ २५,५[2]; क ३९, २[2].
अत्य(ति-अ)णु[h]- -णुः मै ३, ९, ४.
अत्य(ति-अ)न्त- -न्तः पै १५,२३,१३.
*अत्य(ति-अ)न्न-
¶अत्यन्ना(न्न-अ)द्[j]- -दः मै ३,२,६.
¶अत्य(ति-अ)प √हन्, अति···अप-हन्ति मै २, १,५; काठ ११,५.
अत्य(ति √अ)र्ह्, †अति···अर्हात् ऋ २, २३, १५; मा २६, ३; का २८, २, १; तै १, ८, २२, २; मै ४,१४, ४; काठ ४, १६; ४०, ११[k].
†अत्य(ति-अ)वि[l]- -विः ऋ ९, १३, १; कौ २, ५३७; जै ३, ४२, ३; -विम् ऋ [९, ६, ५; ४५, ५; १०६, ११]; कौ २,

[a]) तस.नञ्-स्वरे (पा ६,२,२) प्राप्तेऽन्तोदात्तः (पा ६,२, १५७)। उप.हि क-प्रत्ययान्तम् (पा ३,१,१३५) भवति। गुणप्रतिषेधे चाऽशक्त्यर्थपर्यवसानके समासः। तृप्- यद्र.।

[b]) तस. नञ्-स्वरः (पा ६, २, २)। उप. √तृप् (स्वा.) इत्यस्य शतरि रूपम्।

[c]) समासस्वरौ नापूटिदि. द्र.। उप. <√तृष्।

[d]) तस.नञ्-स्वरः (पा६,२,२)। उप.पाप्र.√तृष् इत्यतो नजिङ प्र. (पा३,२,१७२) साध्यमानं किमिति पपा.तृष्ण-ज्- इत्येवं प्रत्ययाऽन्तःखण्डनेन विभज्यत इत्यत्र विमृशां भूयसी विमृष्टिः शरणायताम्। यथा च *तृष्ण+*अज्- (<√अज्)> *तृष्णाऽज्- > तृष्णज्-इत्येवं शकन्ध्वादि-त्व-प्रकारिका (तु. पावा ६,१,९४) मौलिकी वस्तुस्थितिः संभाव्येतेत्यस्य भूयानपि विस्तरो भवति तथा अ-स्व-प्नज्- इत्यत्र च यथायोगम् उप. च यद्र.।

[e]) तस. नञ्स्वरे (पा ६,२,२) प्राप्ते 'ययतोः' (पा ६, २, १५६) इत्यन्तोदात्तः। उप. तृष्- शब्दाद् अर्हत्यर्थे यत् प्र. (पा ५,१,६७)।

[f]) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र.।

[g]) दुष्पठं संदिग्धं संस्करणान्तरसापेक्षं च प्राति. द्र.।

[h]) प्रास. अव्यय-पूपप्रस्व. (पा ६, २,२) उप. यद्र.।

[i]) अतिक्रान्तमग्रं यथा स्यात्तथेत्यर्थात् क्रिवि. भवति। समासस्वरौ नापूटि. द्र.।

[j]) सोपपदाद् √अद्+टः प्र. उसं. (पा ३, २, २०)। कृत्स्वरः प्रकृत्या (पा ६,२,१३९)। तु. अन्नाद्- इटि.।

[k]) रेफरहितो मुपा. शोधार्हः।

[l]) इह च अत्यंहस्- इत्यत्र च प्रास. अव्यय-पूपप्रस्व. अपवादरूपोऽन्तोदात्तः (पा ६, २, १९१) किमिति न प्रवृत्तिं लभत इत्युपपादनाऽर्हो विषयः। ननु तत्र कृद्भिन्नविषयत्वमुपात्तं भवतीह च कृदन्तभूतोणादिप्रत्यय-साधितविषयस्य कृद्विषयत्वाऽव्यभिचारात् तदविषयत्वमिति चेत्। तर्हि नैवं वाच्यम्। अत्यन्नाद्- इत्यत्राऽकृद्भिन्ने विषयेऽन्तोदात्तप्रवृत्त्यभावाऽतिप्रसङ्गात्। न चाव्या-प्यतिव्याप्तिपरिहाराय 'अतेर् धातुलोप इति वक्तव्यम्' (पावा ६, २, १९१) इत्युक्तं भवतीति वा चोद्यपरिहाराय स्यादलमिति मन्तव्यम्। लक्ष्ये धातुलोपाऽनुगमदर्शन-सामान्यात्। कस्तावत् समाधिरिति। यत्र मौलिकः क्रियांशः प्रधानो भवत्यप्रधानश्च नामीभावस्तत्र तावद् धातुलोपनिरपेक्षमन्तोदात्तः प्रवर्त्तमानः द्र.। तदेवं-विधेषु निगमेषु प्रास. अपेक्षया गस. आस्थेयतरः। तद् यथा अति-जीव-, अति-दाहु-, अति-याज-, अति-मान-, अति-सन्ध- प्रभृ. गस. सुलभो भवति। एवम् अत्यन्नाद्- इत्यत्र √अद् इत्यनेन नेदीय इव संबद्धः सन् गतीयमानो-ऽतिर् भिन्नक्रमः। गस. चोत्तरकृत्-प्रकृतिस्वरः। यद्वा, एपूटिदि. अत्यन्नमिति प्रशस्ताऽन्नार्थे प्रास. पूपप्रस्व. स्यात् तत उस. च तथाप्युत्तरकृत्प्रकृतिस्वरत्वादिति यावत्। अथ यत्र वैयुत्पत्तिकः क्रियांशो गुणतामुपैति प्रवृत्ति-विशेषानुरञ्जितो नामीभावश्च प्राधान्यं भजति तत्र खलु सत्यसत्यपि धातुलोपे प्रास. अव्यय-पूपप्रस्व. च। यथाऽसति धातुलोपे तावद् अति-कृश-, अति-कृष्ण-, अति-मेमिव-, अति-ह्रस्व-, अति-शुक्ल-, अत्यणु-, अत्यन्तिक-, प्रभृ.। यथा च सति धातुलोपे अति-पूरुष-, अत्यंहस्-, अत्यवि- प्रभृ.। अत्यग्र-, अति-च्छन्दस्- प्रभृ. धातुलोपे सत्यसति चोभयथापि सुवच इत्यपरो विवरणविषयो विशेषश्च द्र.। अन्ततश्च यत्राऽतेर्

२९१; जै ३, २४, ७.

**अत्य(ति√२अ)श्**→आशि

अ॒त्या(ति-आ)शित[a]– -तस्य, –तेन मै ३, ६, २.

**अत्य (ति√१अ)स्**, अ॒त्यस्तु ऋ ७, १,१४; अति…स्यात्[b] मै ३,३, २[२]¶; अ॒ति…स्या॒त् मै ३, २, ६; ३, २; ४, ५, ८; अ॒ति… स्याम शौ ११, १, १२; २१; पै १६, ९०, ९; ९१, २.

अत्यास- वि°

**अत्या(ति-आ)√क्रम्**

¶अत्या-क्र॒म्य[c] तै ६, २, ३, ३.

**अत्या (ति√आ)प्**

अ॒त्या(ति-आ)प्ति[d]– -प्तिः शौ ११, ९,२२; पै १६, ८४, २.

**अत्याय्-**, अ॒त्यायम् अती(ति√इ) द्र.

**अत्या(ति-आ)√या**, अ॒ति…आ॒यातु ऋ १०, ४४, १[e]; अत्या॒याहि ऋ ३, ३५, ५; अ॒ति…आ॒याहि ऋ ३, ४३, २; †अत्या॒यातम्[f] ऋ ५, ७५, २; कौ २,१०९४.

**अत्या(ति-आ)√सृ**, अत्यासरत् पै ५, ३१, १.

¶अत्या-सारि(न्→)णी[g]– -णी तै २, ६,५,४; –णीः क ३९,२.

**अत्या(ति-आ)√सृज्**, अत्यासृजामि पै १६, १२९, १–१०.

¶**अत्या(ति-आ)√ह्वे**, अत्या॒ह्वयति मै ४, २, ७[४]; अत्या॒ह्वयन्ति मै १, १०, १६; अत्याह्व॒यत् मै ४, २, ६; अत्याह्वयन् काठ ३६, ९; अत्या॒ह्वयेत् मै ४, २, ७. अत्याह्वयिष्या॒मि मै ४, २, ६[२]. अत्याह्व॒यन्ते मै ४, २, ६.

**अत्यु(ति-उ)द्→त्√पत्**→पाति, अति…उत्पातय पै ६,२२,२४.

¶**अत्यु(ति-उ) द्√ग्रह्**, अत्युद्गृह्णी॒यात् मै १, ६, ६; काठ ८, १२; क ७, ७.

अत्युद्-गृ॒ह्य[h]– -ह्यः मै १, ६, ६.

**अत्यु(ति-उ)प√धा**, अत्यु॒पदधाति मै ३, २,४¶.

**अत्यु(ति√उ) ह्**[i], †अ॒ति…ओहते ऋ ८, ६९,१४; शौ २०,९२,११.

¶अ॒त्यौहीत् मै ४, ३, ८;७, ८.

**अ॒त्यू(ति-ऊ)र्मि**[j]– -र्मिः ऋ ९,१७,३.

**अत्यृ(ति√ऋ)पृ**, †अ॒ति…अर्पति ऋ ९, ८६, ४४; १०७, १७; कौ १, ५२०; २, ९६५; जै १,५३, १२; ४, २०, १०.

**अत्ये(ति-आ√इ)**, अत्या॒यन्ति शौ ११, १२, १४; अत्या॒यन्तु शौ ११, १२,१५; अत्ये॒हि पै ४,१४,२;४.

---

उत्तरवर्त्तिनो नामीभावपूर्त्तावपि मौलिकभावात्मकता नैव विहन्येत तत्र धातुलोपविषयत्वे सति गस. असम्भवत्यप्य् अन्तोदात्त एव प्रवर्त्तमानः द्र.। यथा अति-नाष्ट्र-(शब्रा.) इत्यत्र। तस्मादस्याऽन्तोदात्तानुशासनस्य कृद्विषयत्वे सति धातुलोपस्याऽन्यथासिद्धायमानत्वात् साक्षाद्-धात्वर्थ-प्राधान्येन विशेषणीयत्वं द्र.। अथाऽकृद्विषयत्वे तस्य श्रौतनिदर्शनाभावे प्राक्तनाचार्यवचनप्रामाण्याद् धातु-लोपे सतीति विशेषणमुपादेयम्। तेन हि अत्यङ्कुश-प्रभृ. उक्तः स्वरः प्रवर्त्तेत। शोभनो गार्ग्यः अ॒ति-गार्ग्यः इत्येवमादिषु च न प्रवर्त्तेत। एवं तावत् सूत्रे यथान्या-सम् 'अकृत्पदे' इति ध्रियमाणं सदेव 'धातुलोपे सति' इत्येवं पुनर्विशेषणमुपाददीत। दिशा चानयाऽकृन्मात्र-विषयत्वमस्यानुशासनस्य मूलत आचार्यस्याभिप्रेत-मित्यादिनिष्कर्षः सम्यग् अवधेयः।

[a]) गस. (तु. अ॒त्यवि-) अण्यन्तकर्तृभूत-कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।

[b]) इवाऽर्थाऽनुरञ्जितोपसर्गार्थविशिष्टत्वं क्रियार्थस्याऽभि-प्रयती श्रुतिर् इवस्य गतेश्च क्रियायाश्च मध्ये श्रावणमनु-रुन्धाना द्र.। व्यवहितगतिप्रयोगमननुमन्वाने लोके नैवंविधाऽतिसूक्ष्मा शाब्दी प्रवृत्तिरनायासेनाभिव्यञ्जयि-तुमलमिति दिक्।

[c]) गस.ल्यबन्त-कृद्-उपप्रस्व.(पा६,१,१९३;२,१३९)।

[d]) गस. अनन्तरगतिस्वरः (पा ६,२,५०)।

[e]) अ॒ति इत्यत्रत्यं सस्थ. टि. द्र.।

[f]) मन्त्रादावपि सतः क्रियापदस्योपसृष्टत्वाद् अति-ङ उत्तरत्वे तिङ्ङंशस्य निघातो गतिद्वये च प्रथमस्य गतेर्निघातः (पा ८, १, २८; ७०)।

[g]) णिनि-प्रत्ययान्तात् स्त्रियां ङीप्। तस्य पित्त्वा-न्निघाते स्वरस्तदवस्थः।

[h]) गस. कृद्-उपप्रस्व. (पा ६,२,१३९)। उप. क्यबन्ते (पा ३, २, ११९) प्रत्ययस्य पित्त्वनिघाताद् धातुस्वर-शेषः।

[i]) √२ऊह् इत्यत्रोपसृज्येतेत्यर्थाञ्चः PW. प्रभृ. अभिप्रयन्ति। तथात्वे लघूपधत्वाभावाद् गुणबाधः प्रस-ज्येत (पा ७, ३, ८६)। यत्त्विह √२ऊह् इत्येवं यस्था. संकेत्यमानो वितर्कार्थे पाधा. भवति, सोऽप्यत्राऽनुपयुक्तो भवति। गुणबाधप्रसङ्गसामान्ये सति वाच्यार्थाऽसंबन्धा-दिति यावत्। न च √ओह्<आ+√२ऊह् इत्येवमु-पसर्गान्तरकल्पनया 'आ॒+ऊहते' इत्येवं व्याख्येयमिति निर्बाधम्। तथात्व आङः सस्वरत्वे सति 'ओहते…ओहसे' इत्यनुदात्तयो रू. असंभाव्यमानत्वादिति दिक्। अपि च उपसर्गस्येह द्विः पाठोऽनर्थक इव द्र.।

[j]) प्रास. पूपप्रस्व. (पा ६, २, २)। विस्तरः 'अ॒त्यवि-' इत्यत्र टि. द्र.।

आद- स्कन्न°
आ॒द(क->)का[a]- -काम् तै ५, ७, ११, १; काठ ५३, १.
आ॒दन[b]- -ने ऋ ६, ५९, ३.
आदयित्नु[c]- -त्नु खि १, ९, १.
आदिन्- केवल°, शिला°
१¶आद्य,द्या[d]- -द्यः मै ३,१०,३[e]; -द्यम् तै २,२,५,१;६; मै १,६, ५; शौ ८, २, १९$; पै १६, ४, ९$; -द्या तै ६,४,१०,५; -द्याः तै ३, ४, ३, ७; ६,४,१०,४;५; ७, १,१,५; मै १, ५, १०; ११; १०,१३[2]; २,३,२; ३,७,१; ४, ५, १[2]; ६, ३[2]; काठ २७, ८[2]; २८, १०[2]; ३६, ७[2]; क ४५, १[2]; -द्यान् मै १, ५, ११; -द्यासु काठ २७,८. [°द्य- अन्]
१अँद्- √अद् द्र.
२अँद्-३अँत्>द्,यक्र.अ॒द्रि-अ॒द्भुत-टिद्र
१अदँ- √अद् द्र.
?२अद[f] पै २, ८१, २.
अ-द॒क्षिण[g]- -¶णः मै २, ४, ५[2]; काठ १२, ३; -णम् काठ ३७, १२¶; -णाः काठ ३७, १२¶; पै ५, ६, ६; -णासः ऋ १०, ६१,१०; -णेन मै १,४,१३[2]¶.
अ-द॒क्षिणीय[h]- -यः मै ४, ८, २¶.
¶अ-द॒क्षिण्य[i]- -ण्यम् तै १,५,१,२.
१अ॒दत्- √अद् द्र.
२अ-दु॒त्[j]- -दते ऋ १, १८९,५; -दन् ऋ १०, ७९, ६.
अ॒-दत्त,त्ता[k]- -त्तः शौ ५, ११, ९; १०; -त्तम् पै ८,१,९;१०;१०, ६,४;९; -त्ता शौ १२,४,१३.
अ॒-दत्त्वा[k] शौ १२, ४, १९; २३;४५.
अ-दत्रया[l]- -त्रया ऋ ५, ४९,३.
अ॒-ददत्[k]- -दत् शौ १२,४,२०;२१; २६; ३४; -दते मै १, १०, २.
अ॒-ददिवस्[k]- -ददुषः शौ १२, ४, ४८; -ददुषे शौ १२, ४, ३९.
अदन- √अद् द्र.
अ-द(न्त->)न्ता[m]- -न्ताम् पै १६,

'तास्यनु-' (पा ६. १, १८६) इत्यदुपदेशाल्लसार्वधातुकस्य शतुरनुदात्तत्वे सत्यप्य् 'अतो गुणे' (पा ६,१,९७) इत्येकादेशे शत्रन्तस्य प्राति. अन्तोदात्तत्वेन विद्यमानत्वादित्यभिसन्धेः (तु. अघायु॒त्->-य॒तः, -य॒ते प्रभृ.)। अतो नित् प्र. उसं. एवेति दिक् (तु. ORN., WG १०६७A च)।

[a]) ण्वुल् ->अकः प्र. लित्स्वरश्च (पा ६,१,१९३)। पावकादित्वोपसंख्यानेन प्रत्ययस्थकात् पूर्वस्याऽकारस्येत्त्वाभावः द्र (पावा ७, ३, ४५)।

[b]) ण्यन्ताल् ल्युट् प्र. लित्-स्वरः (पा ६, १, १९३)। करणे वाऽधिकरणे वा प्र. द्र.। कर्मणीति तु सा. आह। अत्र प्रयोज्यकर्तृत्वसमर्पणस्य प्राधान्येन विवक्षितत्वाद् णयन्तात् प्रत्ययोत्पत्तिर् द्र. (तु. पपा., वैतु. च ORN. प्रभृ.)। आद्येते यस्मिन्निति कृत्वाऽश्वकर्तृकाऽदनक्रियाधिकरणात्मके पात्रविशेषे वृत्तिर् द्र.। यथा तस्मिन् पात्रेऽश्वौ सहप्रवेशितमुखौ भवत एवमिन्द्राग्नी देवौ सुते सोमपात्रे भवत इत्याद्यर्थविस्तरः पुनः वैश. विशेषेण उपदेयः (तु. स्वा॒दन- ऋ ५, ७, ६ यत्र सा. अपलक्षणमेव कर्तरि प्रत्ययं पश्यति चमत्कारविशेषकरं करणार्थं च न पश्यति)। कर्त्रर्थे युं (>अन)-प्रत्ययान्ताः प्रायेणाऽन्तोदात्ता भवन्तीत्यपि सुस्मरं द्र.।

[c]) ण्यन्ताद् इत्नुच् प्रत्ययश्चित्स्वरश्च (तु. पाउ ३, २९; पा ६, १, १६३; ४,५५)।

[d]) ण्यत्-प्रत्यये तित्स्वरः (पा ३, १, १२४; ६, १, १८५)।

[e]) नाद्यः इति मूको. ना॒द्यः इति च मुपा. भवति। उभयथाऽपि स्वरो दुरुपपदः द्र.।

[f]) ?अर्द-गणँ- -णम् इति क्विवि. अत्र श्रुत्यभिप्रेतमिति संभाव्येत (यटि. द्र.)।

[g]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[h]) तस. 'नञो गुणप्रतिषेधे' (पा ६, २, १५५) इत्यन्तोदात्तः। उप. यद्र.।

[i]) तादर्थ्यै सत्यपि 'ययतोः' (पा ६, २, १५६) इत्यत्रान्तोदात्तः उसं.। उप. यद्र.।

[j]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. पाप्र. दन्त- इत्यस्य 'दतृ->त्' आदेशः (पा ५,४,१४२)। प्र१ 'उगिदचाम्' (पा ७, १,७०) इति नुमागमः द्र.।

[k]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[l]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. <(√दत्रय नाधा.>) दत्रया- यद्र.। अत्र सा. √अद्+अत्रः प्र. इति कृत्वा 'वार्याणि' इत्यनेन सामानाधिकरण्याऽऽपादकं याच् (पा७,१,३९) इति सुप् प्र.आह(=अदत्राणीत्यर्थः)। असावेव जिह्वार्थे तत एव धातोर् अदत्रा- इत्येतत् प्राति. अपि पक्षे निष्पाद्य निरङ्कुशं व्याचष्टे। अर्वाञ्चस्तु नञ्-पूर्वम् √१दा> दत्र- इति प्राति. इत्यातिष्ठमाना या इति तृतीयार्थकः प्र. स्यात् प्रयोगतश्च क्रिवि. द्र. इत्येवमाहुः (तु. GW. प्रभृ.)। देवतायाः स्वयं दत्रवत्त्वात् (ऋ ६, ५०, ८) परकर्तृक-दत्राप्रेप्सुतया वार्यदातृत्वेनोपवर्णने मन्त्रस्वारस्यप्रतीतेस्त्विहोक्तप्रकारेण दत्र-या- इति प्राति. सुकल्पं द्र.।

[m]) समासार्थम् 'अ-दु॒त्-' इत्यत्र टि. द्र.।

१५२, ३.

अदन्तक[a]- -न्तकः तै २,६,८,५¶; -काय तै ७, ५, १२, १; काठ ४५, ३.

¶अ-दन्दशूक[b]- -काः तै ६,१,१०,४.

अ-दब्ध, ब्धा[b]- -ब्धः ऋ १, २४, १३; ७६, २; ८९, ५; १२८, १; २, ६, ६; २७, १३; ४, ४, ३; ५, १९, ४; ६, ७, ७; ७, ३६, २; ८, ५९, ३; ७८, ६; ९, ७७, ५; ८५, ३; ९७, १९; १०७, २; १०, १२८, ६; खि १, ६, ३; ४, ९, ५; मा ४, १५; १३, ११†; २५, १८†; का ४, ५, ७; १४, १, ११†; २७, ११, ५†; †तै १, २, १४, १; $६, २, ४; ११, ६; २, १, ११, ४; ४, ३, १३, २; ६, १, ५; ७, १४, ३; मै १, २, ३; २, ७, १५†; ३, १६, ४; ४, १०, ५†; ११, ४; काठ ५, १; १६, १५†; २१, १३†; २२, १४; ३२, १; ४०, १०†; क २५, ६†; †कौ २, ६६४; ९७४; जै ३, ५५, ५†; शौ ६, ५३, २; १७, १, १२; †-ब्धम् ऋ ४, ५०, २; ६, ५१, १; १०, ८७, २४; खि ६, ३, २; शौ २०, ८८, २; पै १६, ८, ८; -†ब्धस्य ऋ ७, ६६, ६; ८, ४४, २०; १०, ७५, ९; काठ ४०, १४; कौ २, ७०३; जै ३, ४६, ९; -ब्धा ऋ ३, ५४, १६; १०, ७५, ७; -†ब्धाः ऋ १, १७३, १; २, २७, ९; ३, १, ६; ४, २, १२; [(२, २८, ३) ७, ६०, ५]; ८, १८, २; १०१, ६; ९, ९७, ५७; मै ४, १२, १; १४, १४; काठ ३१, १२¶; -०ब्धाः ऋ [२, २८, ३; (७, ६०, ५)]; -ब्धान् ऋ ६, ५१, ४; ९; -ब्धानि ऋ [१, २४, १०; ३, ५४, १८]; -ब्धासः ऋ १, ८९, १; २, २७, ३; ६, ६७, ५; ८, ६७, १३; मा ३, १८; २५, १४†; का ३, ३, ९; २७, ११, १†; तै १, १, १०, २; ३, ५, ६, १; काठ २६, ११†; -ब्धे ऋ ४, ५५, ३; -ब्धेन मा १, ३०; का १, १०, २; तै १, १, १०, ३; मै १, १, ११; काठ १, ६; १०; ३१, ५; क १, ६; १०; ४७, ५; शौ १७, १, १२; -†ब्धेभिः ऋ १, ६५, ९; [१४३, ८; ६, ८, ७]; ६, ७१, ३; मा ३३, ६९; ८४; का ३२, ५, १५; ६, १५; तै १, ४, २४, १; मै १, ३, २७; काठ ४, १०; क ३, ८; शौ १७, १, ९$; पै ८, १४, ९; -ब्धैः ऋ ६, ४८, १०.

अदब्ध-क्षत्र- -त्रम् काठ २२,१४.

अदब्ध-चक्षुस्[c]- -क्षुः शौ १३, २, ४४.

अदब्ध-धीति[c]- -तीन् ऋ ६, ५१, ३.

†अदब्धव्रत-प्रमति[d]- -तिः ऋ २, ९, १; मा ११, ३६; का १२, ३, ९; तै ३, ५, ११, २; ४, १, ३, ३; मै. २, ७, ३; काठ १६, ३.

अदब्धा(ब्ध-आ)यु[c]- -०यो मा २, २०; का २, ५, १; तै १, १, १३, ३; काठ १, १२; ३१, १२, क १, १२; ४७, ११.

अदब्धा(ब्ध-अ)सु[c]- -सुः शौ ५, १, १; पै ६, २, १.

अ-दभ[e]- -भा ऋ ५, ८६, ५.

अ-दभायु[f]- -युः पै ५, २, ७.

अ-दभ्र[b]- -भ्रम् ऋ ८, ४७, ६.

†अ-दय[g]- -यः ऋ १०, १०३, ७; मा १७, ३६; का १८, ४, ७; काठ १८, ५; क २८, ५; कौ २, १२०५.

अदस्[h]-

अदस्- -दः ऋ १, १०५, ३; १८७, ७; ६, ५६, ३; ८, १०, १; २६, १७; ९, ६५, २२; १०, ७२, ६; १२०, ३; १५५, ३; १८६, ३; खि २, १४, ९; ५, १४, १; मा २६, १[4]; २; का २८, १, १[4];

---

[a]) बस. समासान्तः कप् प्रत्ययः (पा ५, ४, १५४)। स्वरार्थम् 'अ-चर्मक-' इत्यत्र टि. द्र.।

[b]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[c]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[d]) सस्व. नापूदि. द्र.। समानाधिकरणः बस. इति सा., तथा वा व्यधिकरणो वेति MW.। एतद्विस्तरः वैश. द्र.।

[e]) बस. 'नञः' (पा ६, २, ११६) इत्यत्र उसं. उत्तरादिस्वरः।

[f]) तस.। उप. <√दभायु (तु. शौ ४, १, ७[4])।

[g]) बस. अन्तोदात्तः (पा ६, २, १७२)। अ-दायु- इति तै. आ-दायु- इति मै. च पाभे. यद्र.। अ-दायु- इत्यत्रत्यं टि. च द्र.।

[h]) ६अ+दुस्-(<√दस्+कर्मणि क्विप्) इतीव व्युत्पादयन् शक. चिन्त्यः। एवं हि नाम तस. नञ्-स्वरः स्यात्। अन्तोदात्तस्तु भवति। अतः उप. भावे प्रत्ययमुक्त्वा बस. इत्यवदिष्यच्चेत्तर्हि साधीयोऽभविष्यत्। वस्तुतस्तु सना. सदिदं न यौगिकत्वमर्हेत्। आद्योऽकार उत्तरस्य मौलिकस्य दकारध्वनिविशिष्टस्य सना. गुणविशेषाऽऽधायकम् आगममात्रं भवतीति भाषाविज्ञानचणानां दृष्टिरत्र भवति (तु. WW १,९८)।

३; तै ४, २, ८, ३†; ५, २,३, ३[२]¶; ६, १, २; ¶६, १, ६,४; ११, ५; २, १, ३; ¶मं १, ३, २६$; ४, १[२]$; ६, ३; ५; १०[२]; ८, १; १०, ५; ८; ९; ११, ९[२]; २, १, २; ५, ५;१३, १$; ३, १, २; ३, ४; ६, ७[२]; ७, ७–९; ८, ३; ५[२]; ७[३]; ९, १; ४, २, २; ६; ४, ९; १०; ५, ३; ७, १–४; ८, २; ६; काठ ५, ३; ७, १२; ८, १०; ११, ४; १०; १४, ९; १६, १५; २३, १०; २४, ६; २५, ५; ६; २६, २; ९; ३५, २०; ३९, २; ४०, ८; ¶क ७, ६; २५, ६$; ३७, १; ३९, २;४; ४१, ७; ४८, १८$; †कौ २, ५१३; ८३५; ११९२; †जै ३, ४०, ९; ४, ५, ७; ३०, ४; शौ २, ३, १; ३, ७, ३; १३, १; ४, २, ४; १९, ४; ५, २, ३†; ६, १८, ३; १०, ९, ५; ११, १०, ३३[२]; १३, १, ५५; १९, ५२, ४; २०, १०७, ६†; १२८, १२; पै ३, २, ३; ४,१; ५, २५, ४; †६, १, ३; ८, ७; १६, ७; १२, ३, १५; १३, १,१५; १४, ३,१६; १५, २३, ८; १६, १३६, ६; –दः-दः शौ १६, ७, ९.

अमी– -मी ऋ १, २४, ६; १०; १०५, ५; ९; १०; १२७, ८; १४१, १३; ४, १८, ११; मा ९, ४०; १०, १८; १३, ८; १७, ४७; का १४, १, ८; १८, ४,१५; ¶तै ३, २, ११,३†; ३, ७, १; ६, १, ५, ४; ¶मै १, १०, ८; २, २, १; २, ६$; ७, १५$; ४, ७, ३; १२, ५†; काठ ७, १२; १०, १२; †कौ १, ३६८; †जै १, ३८, ९; शौ ३, ८, ५; २९, १; ५, ८, ५; २१, ८; ६, ९४, १; १०३, ३; ७,८५,४; ८, ८, १०; २४; ९, १५, १८‡; १३, २, १३; पै १, १०२, १; ५, ६, ८;२६, ८; ७, १८, ६; १६, २९, १०; –मीभ्यः शौ ८, ८, २४; –मीषाम् ऋ ६, ७५,१६; १०, १०३, १२; खि ३, २१, १; †मा १७, ४४; ४५; †का १८, ४, १२; १३; मै २, ५, ९¶; †कौ २, १२११; १२१३; शौ †३, २, ५; १९, ८; ८, ८, १९; ११, ११, २०; १२, १९; १२, २, ५५; १९, ५२, ४; पै १, ३०, ४; ५६,४; ३, ५,५†; १६, ३०, ९.

अमु[a]– -मुना मा २६, १; का २८, १, २; तै ६, ४, १०, २¶; ¶मै १, ८, ९; २, १, २; ४, ५, ४; काठ २६, ४¶; पै १३, ६, ८‡; –मुम् ऋ १, ७, ६; ८, १२, ३०; खि ३, १०, १, २; मा ९, ३८; ३१, २२; का ११, १, ४; ३, २; ६, २; ३५, २, ६; ¶तै १, ५, ४, ४; ९, ४[२]; $६, २, ४; ६, १; ११, ६; ७, ६, २$; २, १, ४, १; ८, १; १०, ३; ३, १, ३$; २, ३; ५, ३; १२, २; ५, ७, २; ३, ३, ६, १; ५, १, ३;४; ४, ६, १,१$; ५, २, १, ७; ९, ५$; ४, ४, १; ६, ५, ३;८, ३[२]; ६, १, ५, ५; ४, ५, ६; ५, ११, १; ६, १, १; ७, १, ५, ३; २, १, ४; ४, २; ३, ४, २; १०, ३; ¶मै १, ५, ५; ६, १३[१०]; ८, १; ६; ९[२];$;१०, १९[२]; ११, ७[२]–९[२]; २, १, २; २, १[२]$; ५[२]$; ७[२]; १३; ३, १[५]$; ५, ११; ६, ६; ३, १, ४$; ४, ४; ६; ७; ५, १; ६, १०; ७, ८; ८, ४[२]; ९, १[३]; ३[२]; ४, ३, ४; ४, ८; ६, २$; ३[२]$; ६$; ८; ७, २; ६; ७,९[२];$; ८,१०;९, १[३]$; काठ १, १२; ५, १; ६, १[२]; ३[२];७, ८; १५; ८, ८; ९[३]; १२; ९, ३[२]; ११, ३[२]; ४[२]; ६[२]; १२[२]; १४, २; ७; ८[२]; १०[२]; १९,९; २०, ८; २१, २[२]; ६; ७; २२, ३; ६; १३[४]; २३, १; ८; ९; २६, १; २[२]; ६; २७, ५[२];२८, १०; २९, ७; ८; ३१, ११; ३२, १; ३३, ८; ३४, ६;१८; ३६, १३;१५; ३७, १३[२];४०, ९; ¶क १, १२$; ३, १२; ४, २[२]; ६, ५; ७, ३[२]; ५[३]; ७; ८, ६; ३१, १०$;१७[२]; २१;३४, १; ३६, ५; ६; ४०, ४; ५[२]; ४१, ४; ४२,५[२]$; ४५, १;८; ४७, ११$; †कौ २, ६५१; ९७१; शौ २, १२, ४; ३, ३, १; ५, ८, ७; २२,१२; ६,७५, १; १३५, २; ३; ८, ६, १२; ९, ११,१३; १०, ५, ४४;१६, ८, २[२]; ५[२]–२९[२]; ३१[२]; २०, ७०,१२†; १२८, १; पै १,४३, २; ५०, ४; ५९, ३; ६३, ३; २, ५, ४; ३७,५; ६४, १;७४, १‡; ८५, १; ४, २०, ६; ५,

a) ३अ- वा ५अ- वा >अम् (द्वि१)+उ (अपरं सना.) इतीव समस्तं सना.स्यादित्युत्प्रेक्षतेWW१,१८७। अनयैव दिशा नापूपू. अवान्तरयोः प्राति. अपि कश्चिदतिप्राचीनः सार्वनामिकः समास उतोभयत्र ६अ+म- (=अस्मदर्थं मौलिकं सना.)+(बलविशेषाऽऽधायकमात्रः) उ (इति नि.) इत्यपि विमृश्यम् (तु. WW १,१८८)। भूयश्च वैश.।

१७, ३; २५, ७; २७, २; ७, १८, ५; ९; १६, ३८, ३; ७७, ३$^{२}$; ८०, ३; १३२, १०; –मुष्मात् ऋ ४, २६, ६; तै २, ३, १, ४; ५; ७, ३, ११, १; मै १, १०, १७¶; ३, ३,५; ४, ८,८¶; काठ ७,९; ८,४$^{२}$; २४, १; ६; ८; १०$^{२}$; २६, ६; ३६, १२; ४३, १; ¶क ६, ९; ३७, २; ७; ३८, १; ३$^{२}$; ४१, ४; शौ १२, ८, ११; पै ५, २६, २[a]; १६, १४४, १०; –मुष्मिन् मा १७, २; का २, ३, ८; १८, १, ३; ¶तै १, ५, ४, ४; ६, ३, ३$; ७, ३, ४$^{४}$$; २, ५, ८, १;२; ६, २, ४; ३, ४; ६, ४; ३, ३, ८, ४; ५$^{२}$; ४, ४, ११, ४$; १, २, १, ६; ७, ५; ३, ५, २; ६, ३; ७, २; ४, १, २; २, ४; ४, १; ८, १; ९, ४$^{२}$; ११, १$^{२}$$; ५, १, ५$^{३}$; २,३; ४,३$^{२}$; ४; ८, ३$^{३}$; ६, ६, ३; ९, २; ७, २, २; ३, ४; १०, २; ६, १, १, १; ८, ५; १०, ५$^{३}$; २, ३, ५$^{२}$; ३, १, २; ४, २, ५; ५, ९, २; ६, ८, ३; ७, १, ६, ४; ३, ४, १$^{२}$; ५, १; २$^{२}$; १०, १; ४, ११, १; ¶मै १, ५, ५; ६, १२; ७, ५$; १०, १७$^{२}$; २, ५, ११; ८, १४$; ३, १, ५; १०$^{३}$; २, ६; ७; ३, १$^{२}$; ४$; ४, १; ६, २; ७; ७, १०; ८, ७; ९; ९, ४; ४, १, ८$^{३}$; ११; १३; २, १; ३, १; ४, १०$^{२}$; ८, २$^{२}$; १०; काठ ८, ८; १३$^{२}$; ९, ३$^{२}$; १२; १४, ६; २१, २; ४$^{३}$; ६; ११$^{२}$; १२; २२, १३; २३, ९; २४, ६; २६, १; २७, १; २; २८, ४$^{३}$; २९, २; ३०, ५; ७; ९$^{२}$; ३१, ६$^{२}$; १०; ३३, ५; ३४,८; ३६,११;१२; ¶क ७, ३; ८, १$^{२}$; ६$^{२}$; ३१,१७;१९$^{३}$; ३६, ६; ३७, ७; ४०,४; ४२, १; २; ४४, ४$^{३}$; ४५, ३; ४७, ६; १०; शौ ११,६, १८; १२, १०, ११; पै २, ४, ५; ९, २१, ८; ११, ५, ४; ८; १६, २२, ८; १४६, ७; –मुष्मै ऋ ५, ४४, ४; मा १०, २$^{२}$; ३$^{५}$;४$^{१०}$; का ११, २, २$^{२}$; ३$^{१५}$; तै १, ५, ६, ४; ८, ५; ६, ६, ३; ७, ६, ५; ८, ११, १; ¶६, १, ८, ५; ४, २, ५; ७, ५, १३, १; मै १, १, ५; ६; २, १५–१७; ५, १०¶; २, ३, ४$^{६}$; ५; ६, ७$^{२}$; ३, ३,४¶; ८,१०¶;९,६; १०, १$^{३}$; ¶$^{२}$; ४, ८, ८¶; काठ ३, ५; ६; ७, ७; ११, ७; २१, ४; २४, ३$^{२}$; १०; २५, १०; २६, ५;८; ३१, ३;४;७; ३६, १५$^{४}$; ४५, ९$^{२}$; ¶क $२, १२; १३; ३१, १९; ३७, ४$^{२}$; ३८, ३; ४०, ३; ४१, ३; ६$; $४७, ३; ४; शौ ७, ११८, १; १६, ६, ७; ११; –मुष्य ऋ १, १६४, १०; ८, ३४, १; मा ९, ४०; १०, १८; २०; का ११, १, ४; ३, २; ६,२; तै ३, ४, ८,६; ६, ४,५, ६; मै १, ४, २; ७$^{२}$¶; ¶८,२; ५; ६; २, १, २¶; ९; २, १; ¶५, १०; ११$^{२}$; ६, १$^{२}$; १२$^{२}$; ¶३, २, १; ३; ४;३, ५$; ६, १; ७, ७; १०, १$^{२}$; ४, ३, १$^{२}$; ४, ६$^{२}$; ५, ५$^{२}$; ६, ३; ७, ६$^{२}$¶; ¶८, २; ३;५; १०; काठ ८, २; ११, ६; १५, १$^{२}$; ८$^{२}$; २१, ७; ३०, ५; ३१, १३; ३२, ५; ३४, १८; ३७, १३; १४; †कौ १, ३४८;२,११५७; ११५८; ११५९; †जै १, ३६, ७; शौ ६, १३०, ३; १३५, १–३; ९, ९, १०†; पै ३,२९, ३; ३७, १; ५, ९, ८;३३, ७–९; ७, १८, ४; १०, १०, ४; ५; १६, ६६, १०†; –मुष्याः का ११, ३, २; ६, २; ¶तै ३, २, ९, ६; ५, २, ३,३; ¶मै १, ६, ३$^{२}$; २, ४, ५; ६, ६; ९$; ३, २, ३; $४, ४, ३; ६, २$^{३}$; ३$^{३}$; ७, ९; काठ ११,६; ११$^{२}$; १४, २; ८; १५, ७; २१, ६$^{३}$; २७, ५$^{३}$; २८, १; २९, ८; ३४, १८; ३६, १५$^{४}$; ४०, ९; ¶क ६, ७;३१,२१;४२, ५$^{३}$$; शौ ६, १३८, ४; ५; ८, ८, १६; १०, ५, ३६; ४४; १६, ७, ८; ८, २; ५–२९; ३१; पै १, ६३, ३; ६८,५; २, ३७, ५; १०, १०, ४; ५; १६, ३०, ७; ७७, ३; १३२, १०; –०मुष्याः[b] शौ ४, १६, ९; –मुष्याम् ¶तै ५, २, ३, ३;४, ७, ३; ७, १, ४, ३; मै १, १०, १८$^{२}$¶; २, ६, ६¶;९; ३, ३, ५; ४, ४, ३; ६, २; ३; ६; काठ ११,६¶;१५,७;२१,९$^{२}$¶; २७, ५; क ४२, ५; –मुष्यै मा ९, ४०; १०, १८; तै २,३, १,४; ५; मै ४, १, ११¶; काठ ३१, १३¶.

अमु-तस्(:)[c] ऋ १, १७९, ४;

a) 'अमुष्यात्' इति संस्करणान्तरसापेक्षः सुपा. नितरां भ्रष्टः। अमुष्माल् (लोकाद्) इति शोधः सुलभः द्र.।

b) आमन्त्रिते पराङ्गवन्निघातः (पा २,१,२;८,१,१६)।

c) पञ्चम्यर्थे तसिल् प्रत्ययः। लित्स्वरः(पा ६,१,१९३)।

९,८१,२;१०,८५,२५$^{२}$;१५५, २; खि ४, ३, १; मा ३, ६०; का ३,८,५; तै ३, ३, ६,२$^{३}$¶; ५, ५, ३; ४, ७, १४,४; ¶५, १, १, ४; ४, ७, ३; ७, ५, ७, ४¶; ¶मै १, ५, ५$^{३}$;११; ८,४; ६; १०, १२; २, १, ८; ४, ८; ५, ७; ३, ३, ४$^{२}$; ७, ३; ९; १०, १$^{२}$; ४, ३, ७; ५, ५; ६, ३; ९; ७, ३$^{२}$; १४, १७$; काठ ९, १२; १२, १३; १३, ७; २१, ६; ९; २५, ५; १०$^{३}$; २६, ५; ६; २७, १; २९, ७$^{२}$; ३०, ४; ३३, २$^{२}$; ७; ८; ३४, ५; ३६,१; ४०,१०; ¶क ३१, २१; ३९, २; ४०, ३$^{३}$; ४१, ३; ४; ४२, १; ४६, ७; शौ १, २०, ३; ५, ३, ११; ८, ३; ७, १२०, १; ८, ९, ६; ११, १२, ९; १४; १४, १, १७; १८$^{२}$†; १८,३,३८; पै ७, १८, ३; १६, १८, ६.

¶अमुतः-प्रदान[a]- -नम् तै ३, २,९,७; –नात् मै १, १०, ६; काठ ९, ३[b]; क ८, ६[c].

अमु-त्र[d] मा १७,२; का २, ३, ८; १८, १,३; तै १, ६, ३, ३; ७, ३, ४; ४, ४, ११, ४; ५, ४, २, ४¶; ६, ६, १, ४¶; ¶मै १, ४,७$^{३}$; ८; २, ८,१४$; ३, ३, ४; ४, ३; ७, ८$^{२}$; ९,१; ७; ८; १०, १$^{२}$; २–४; ४, २, ९; ७, २; ८, २$^{३}$; ¶काठ २२, ६$^{२}$; २७,१; ३२, ६; ¶क ३४, १$^{२}$; ४२, १; शौ ८, १, १८; ९, ३, १०; १३, १, ३९; पै १६, २, ७; ३९, १०.

अमुत्र-भूय[e]- -यात् मा २७,९; का २९,१,९; तै ४,१, ७,४; मै २, १२, ५; ३, ४, ६; काठ १८, १६; क २९ ४; शौ ७, ५५, १.

१*अमुया[f]

२अमु-या[g]- -मुया[h] ऋ १, २९, ५; ३२, ८; ४, १८, १;

---

[a]) बस पूपप्रस्व. (पा ६, २, १)। तस. पूप. 'अव्यये नञ्कुनिपातानाम्' (पावा ६, २, २) इत्युक्तदिशा परिगणितान्यतमत्वाभावेऽप्य् अव्यय-पूपप्रस्व. उसं.(यतु.भा.) इति तु न वक्तव्यं बस. इत्येव च वक्तव्यम् । अन्यथा हि पञ्चम्यर्थप्रत्ययान्तस्य पूप. कारकत्वाऽभ्युपगमाद् 'गति-कारक-' (पा ६, २, १३९) इति कृद्-उपप्रस्व. स्यात् । यथा चात्र पूप. कारकतया गृह्येताव्ययतया च न गृह्येतेति तथा अमुत्र-भूय- इत्यत्रत्यं टि. यद्र. । यदपीह भा. सार्वविभक्तिकं तसिं प्र. अ-लितमाह, तदपि नोपादेयम् । तथात्वे ह्य् अमु-तः इत्येवं प्रत्ययस्वर आपद्येत (तु. त. इतः- प्रदानम् इति) । तस्माल् लिदेव प्रत्यय इह सुवच इति दिक् ।

[b]) इह SIM पूप. च उप. च पृथक् पदे इत्यातिष्ठते । तन्न, उभयाभिनिर्वृत्तस्य संपिण्डितार्थस्य हेतुत्वेन श्रावणे श्रुतिस्वारस्यप्रतीतेः । (तु. नापू. मै. स्थ.) ।

[c]) -प्रजानाद् इति मूको. अत्र भवतीति नापू. काठ. स्थ. संटि. संकेतितं भवति (यद्र.) ।

[d]) सप्तम्यर्थे त्रल् प्र. लित्-स्वरः (पा ५, ३, १०; ६, १, १९३) ।

[e]) तस. उप. भावे क्यबन्तम् (पा ३, १, १०७) । प्र. पित्त्वान् निघाते धातुस्वरः । त्रलन्तस्य पूप. सत्यप्य् अव्ययत्वे कारकार्थीयत्वात् कारकवदुपचारः । तेन च कारकोत्तरकृत्-स्वरः प्रकृत्या भवतीति सूपपदं द्र. (पा ६, २, १३९) । अन्यथा हि सासस्व. (पा ६, १, २२३) स्यादित्यभिसन्धिः ।

[f]) एतत्-प्रयोगदुर्भित्त्वे तु. एउटि. ।

[g]) तस. सामान्यः सामासिकः स्वरः (पा ६,१,२२३)। उप. >√या यद्र. ।

[h]) -यु*या > -या इत्येवं प्राकृतायित-सहकृतं च सौवरोत्तर-संक्रम-विशिष्टं च तृ१ द्र. । पपा. अवग्रहाऽभावो भवति । तत एतद् रू. यनि. समस्तस्य प्राति. इति मा शङ्कि । पपा. अवग्रहस्य भावाऽभावयोः सामान्येन समासाऽसमास-विनिगमकत्वे सत्यप्य् एकान्तेन तथात्वाऽभावात् । तथा हि । पाप्र. प्राति. समं समासेतरत्वे सति धृष्णु-या इत्यस्य च अमुया इत्यस्य च रू. सुबादेशान्ततायाम् इष्टायामपि पपा. पूर्वेऽवग्रह उत्तरे च तदभावः । तेन पदकारमतेनैवाऽवग्रहस्य समासमात्रसंकेतात्मकतावादो विहन्येत । यदपीहाऽऽचार्या या इत्यंशस्य सुबादेशमात्रतामाहुः (पा ७, १, ३९; GW. प्रभृ.) । तथाङ्गीकारेऽस्य रू. श्रुतिप्रकारद्वैविध्यं बाधकं भवति । तद् यथा । बाह्वृचे त्रिः पापुया इति रू. समानाधिकरणं वि. भवति (१,२९, ५; १०, ८५, ३०; १३५, २) । अन्यत्र च सर्वत्रैतत् क्रिवि. भवति । पूर्वस्मिन् प्रकारे तावद् एतत् क्रिवि. न भवति ना. च भवतीति सुलभम् । एस्थि. अप्येतत् सना. रू. इति कृत्वा यत् सा. वाचो बुद्धेः कृत्यायाश्चाऽऽक्षेपे सादरो भवति तच् चिन्त्यम् । यच्च सर्वत्रैतद् रू. क्रिवि. भवतीत्यर्वाचामभिमतं भवति तत्र तावत् समानाधिकरणं वि. मृग्य-समाधानं द्र. । अथवैवमत्र द्र. । उक्तया दिशाऽतिप्राक्काले अमु-य->अमुया (तृ१) इत्याकारिकायां निष्पत्तौ व्यवहारे सिद्धायां सत्यामस्य शब्द-

५, ३४, ५; १०, ८५, ३०; ८९, १४; १३५, २; काठ ३१, १४; शौ ५, २२, १; ७, ५८, ६; १०४, १; १४, १, २७†; २०, ७४, ५†; पै १, ४८, २; १३, १, १.

आमुष्यायण[a]- -०ण शौ ४, १६, ९; –णः तै १, ८, १२, २; मै २, ६, ९; ३, ६, ९; ४, ४, ३; काठ १५, ७; २३, ५; क ३६, २; –णम् तै १, ८, १०, २; मै १, ८, ९; २, २, १; ६, ६¶; ३, ३, ५; ४, ६, २[2]; ३[2]; ७, ९; ९, १[2]; काठ ११, ६; ११[2]; १४, २; ८; २१, ७; २७, ५[2], २९, ८; ३४, १८; ३६, १५[4]; ४०, ९; क ४२, ५[2]; शौ १०, ५, ४४; १६, ८, २; ५–२९; ३१; पै १, ६३, ३; २, ३७, ५; १६, ७७, ३; १३२, १०; –णस्य तै ३, ४, ८, ६; मै २, १, ९; ६, १[2]; ४, ३, १[2]; ५, ५[2]; ६, ६; काठ ११, ६; १५, १; ३४, १८; शौ १०, ५, ३६; पै १०, १०, ४; ५; –णाय काठ ३६, १५[4]; –णे शौ १६, ७, ८.

अमू- -मू खि ५, १२, १; काठ २२, ७¶; क ३५, १¶; शौ ३, ७, ४; १३, ६, ७; २०, १२८, १; पै १, ४९, ४; –मूः ऋ १, २३, १७; ६, ४७, ३१; ९, ११३, ८; खि ५, १५, २; †मा ६, २४; २९, ५७; का ६, ६, ३†; ¶तै २, ४, १०, ३[2]; ४, ६, ६, ७†; ५, ३, ९, १; ¶मै २, ४, ८[2]; ३, २, ३; १६, ३†; ¶काठ ७, ८; ११, १०; ४६, १†; शौ १, ४, २†; १७, १; २७, १; ६, ६७, १; ९, ४, ६; ११, ११, १८; १२, २०[2]; २०, १२९, ७; पै १, ४७, ३; १६, २४, ६; –मून् खि ३, ३, ८; शौ ५, ८, ८; ६, २९, १; ८४, २; ८, ८, ३[2]; ४; ८–११; २४; १०, १, ६; ३१; ११, १, २०; पै २, १६, १; ९, २५, १४; १६, २९, ३; ४[2]; ८–१०; ३०, १; ३५, ६; ९१, १; –मूम् ऋ ८, ५१, ८; १०, १२५, ७; ¶तै ३, २, ९, ७; ५, ३, ७, ४; ३, ११, १; ६, ८, ५; ८, ६; मै २, १, ८¶; शौ ४, ३०, ७†; ६, ९, ३; १२६, ३; १३९, ३; ७, ११८, १; ८, ८, २; १४; १५; १७; १८; ११, १२, १३; १९, ५३, ५; पै २, ९०, ४; ३, २५, १; १२, २, ५; १५, १२, १; १६, ३०, ४; ६; ८; १०२, ३; १५३, १.

असौ[b]-सौ ऋ १, १०५, १६; १९१, ९; ५, १७, ३; ८, ९१, २; ६; १०, १३२, ४; १४६, १; १५९, १; खि ३, २१, १; ४, ८, ५; ५, १, ४; मा ७, ३; ९, ३८; १०, २०‡; १६, ६; ७; १७, ४७; ३५, २२; ४०, १७[2]; का ७, १, ३; १७, १, ६; ७; १८, ४, १५; ३५, ४, ५; २१; ४०, १, १६[2]; ¶तै १, ७, ६, ३; ८, १२, २§; २, १, २, ४; ४, १; ८, १[2]; २, ९, ७; १०, १; ३, २, २; ४, १[2]; २; ६, २; ४, १०, २; ५, २, ५[2]; ५, ५; ७, २; ६, ९, ७; ३, १, ७, २; २, ९, ६; ७; ३, ८, ६; ४, ५, §१, २; ३; ५, १, ४, ३; ५, ८; ८, ६; १०, ३; २, ५, ४; ७, ३; ४; ३, ३, ५; ७, ४; १०, ३[3]; ४, ६, ६; ७, ३; १२, २; ५, ४, १[3]; ६, ८, ३; ५[2]; १०, २; ७, १, ३; ४, २; ५, २; ५; ६;

---

रूपस्य तात्पर्यतस् 'तया गत्या' (=तेन प्रकारेण) इति पर्यवसानात्तस्यैव चार्थस्य √या> उप. अभावेऽपि अमु- इति सना. स्त्रीप्रकारकस्य या इत्यस्य तृ. प्र. उत्पत्त्या समर्प्यमाणत्वाद् अदुस्- >अमु- इत्यस्य सना. स्त्रियां तृ१ एतद् रू. भवतीति प्रतीतिः संजाता। पपा. च अवग्रहाभाव एतत्-प्रतीतिजन्मा द्र. (वैतु. या इत्यंशस्य सुब्विशेषमात्रत्वाऽभावं प्रति जागरूकतायां पपा. अदत्र-या, अधृष्णु-या प्रभृ. अवग्रह-सद्भावः)। अस्मिन् दर्शने तावद् यत्रैतद् रू. समानाधिकरणेन वि. युक्तं भवति तत्र वस्तुतः *अमुया(तृ१),पापया=-*यया(>या) इत्येवं प्रयोगस्य मौलिकस्य सतः पापया (अमुया) इति स्मारकं भवतीति सुवचम्। तात्पर्यसादृश्याच्चान्ततः '*अमुया' इति मौलिकस्य सना. तृ१ रू. चान्यतः 'अमुया' इति समस्तस्य प्राति. च तृ१. रू. अन्यतः संभेदे प्राप्तेऽन्तोदात्तं चैतद् रू. अभिभावुकं सद् एकमात्रमवशिष्टं प्रयोगतः क्रिवि. च समजनीति निष्कर्षः।

a) (अदुस्->)अमुष्य+अपत्येऽर्थे फक्>आयनः प्र.,ष. अलुक् कित्-स्वरश्च (पा ४, १, ९९; ६, ३, २१; १, १६५)।

b) पाप्र. एतदवान्तरं प्राति. <*अँदौ<अदुस्-, ततः प्र१ सुलोपश्च (पा ७, २, १०६; १०७)। अर्वाच्या दृष्ट्या तु त्रिवृदिदं प्राति. अदुस्- इत्येतत्-समानतन्त्रम् अ-तत्तन्त्रं च द्र.। तद् यथा। 'अ-स-औ' इत्यते त्रयोऽत्रांऽशा भवन्ति। अ इत्यागममात्रमादौ भवति। 'औ' इति अथो प्रभृ.उपलभ्यमानस्य 'उ' इत्येतस्य वृद्धमिव रू. अन्ते भवति। मध्यस्थं च स इति वास्तविकं सना. भवति त(>तद्-) इत्येतत्-पर्यायभूतमिवेति (तु.ww १, ८८; १८८; २, ५०९)। यद्वा प्रथमोऽवयवोऽप्य् ३अ- इत्येतत् सना. एव स्यादथान्ते च मूलतः समस्तस्य सतः सना. द्वित्वसूचन औ प्र. इति।

६,१, ६, १; ३,११, ३;४,१०, २; ५, ४, १[२]; ११, १; ६, ४, ४; ७, १, १, ६; ४, ३; २, १, २; ४; २, ३; ४, २; ७, २; ३, ५, ३; ६, २; ७, ३[२]; ९, २; ३; १०, १[२]; ५[२]; ४, १, १; २; २, ४; ४, २; ३; ११, १; ५, १, ३; २०, १$; ¶मै १, १, ३[३]$; ५, ५[३]; ७;९; ११[२];६,३; ६; ८; १०[२]; ८, १; ६; १०, १६; ११,७; २, १, २[२]; २,२[४]; ३, ३[२]; ६; ९; ४, ५[२a]; ८[२]; ५, ४; ७; ९[२]; १०[२]; ११; $६, ९; १२[२]; ९, २[२]$; ३,१,१; ३; ६; २, ६[३]; ८; ९; ३, ३; ४[२];५;८[३], $; ६, १; ९$; ७, ७; ८,३; ९, १; ३; १०, ४; ११, ८$; ४, १, ३; ५; ८; ११[२]; १२; १३[२]; २, १;२; ३,२; ४, ३$; ६[२]; ७; ५, ३; ५[२]; ६, ३[२]; ६; ८; ७, ३[२]; ९$; ८, २; ५; ८; १०[२]; काठ ६, ३; ४[२]; ७, २; ४[४]; ६; १४; ८, ४[७]; ८[२]; ९, १५; १०, १; ५; ८[२]; ९; ११, ४[३]; ५; ७[६]; १०; १२, ४; ६; ७; १०; १३, ७; ८; १२[२]; १४, ७; १५, ७; ८[२]; १७, ११[२]; १८, १९; १९, २; ४; ५; २०, ५[३]; ६[२]; १३[२]; २१, ५; ८; ९; २२, ८; १३[२]; २३, ५; ८; २४, ६; ९; २६, १; ४; २७, १; ८; २८, २[२]; १०[२]; २९, ७[३]; ३०, ३; ४; ५[३]; ३१, २; ६[२]; ९; १०; १३[४]; ३२, २[२]; ३३, ३; ८; ३४, ८; ९; ३६, १०; १५[४]; ३७, १०; ११; १३; ४३, १[५]; ४५, १७; ¶क ४, २; ३[२]; ५, २$; ३[४]; ६, ४$; ९[६]; ७, ३[२]; २७,१[२]$; २९, ७; ८; ३०, २; ३; ३१, ७[३]; ८[२];२०; ३४, १; ३५, २; ५; ३६, २$; ३७, ७; ३८, २; ४०, ४; ४१, २; ४२, १$; ४४, २[२]; ४५, १[२]; ८[२]; ४६, ६; ७; ४७, २; ६; ९; १०; †कौ २, १२१०; १२१४; शौ १, २६, १; २; २९, ५†; २, १४, ३; ३, २, ६; ४, २, ३; ४; १६, ३; ५, ८, ३; ७; ६, १३०, १; २[२]; ३[२]; ४; १३१, १; २; ७, ७३, १; २; ११, १२, ११; १२, ३, २०; १३, १, २३; १५, १०, ७; १५, ४; ५; १८, २[२]; १६, ८, २; ५; २९; ३१; १८, ४, ६६; पै १, १०, ३; ११, ४; १०६, १; †२, ३५, १; ४१, १; ३, ५, ६; ४, १९‡[b], १[२]–६[२]; †२६, २; ६; †५, ३, १; २; १२, १; ६, ११, ७–९; ७, २, ७†; १८, ३; ८, २०, १; ९, २५, १६; १४, २, ९; १६, ४३, ९; –०सौ[c] मा ३८, २[३]; का ३८, १, २[३]; तै २, ४, ९, ३¶; मै १, ४, २; ४, ४, ४¶;९,७[२];१९; काठ ११,१०[२]; –०सौ मा ९, ३०; ३५, ६; का ३, ९,६; तै ७, ३, ५,२; मै ४, ९, १०; शौ ४, १६, ९; ५. ६, ५–७; १८,४, ३३.

असक्‌ौ[d] मा २३, २२; २३; का २५, ६,२;३; मै ३, १३, १.

अ-दस्त[e]- -स्तम्‌ तै ४, २, ५, ५‡[f]; मै ४,१,३[२];¶; काठ १,३; ३१, २[२]¶; ३८, १४‡[f]; क १, ३; ४७,२[२];¶; –¶स्ताः काठ २७, ५; क ४२, ५.

अ-दाति[g]- -तिम्‌ पै १६, ४२, ४.

१अदान्‌- √अद्‌ द्र.

a) एकतरत्र मूलकोशेषु w. इत्यतः स्वरो यथायथमनुसंधेयः। एवं पदत्रित्वे काठ १२,४ इत्यस्य साद्ध्यमपि द्र.।

b) विशिष्ट इह बाह्वृचः (१, १९१,११) पाभे.।

c) इह संबोध्यव्यक्तिविशेषनामस्थानीयत्वाद् आमन्त्रितवदुपचारे षाष्ठिक आद्युदात्तः (पा ६,१, १६८)।

d) प्राति. स्वरूप-परिच्छित्तौ तु. असौ इत्यत्र गटि.। अत्र प्रागिवीयः अकच्‌ प्र. भवति चित्‌-स्वरश्च। एतावांस्तावद् विशेषः (पा ५, ३, ७१; ६, १, १६३)।

e) तस. नञ्‌-स्वरः (पा ६,२,२)। उप.<√दस्‌ यद्र.।

f) विशिष्ट इह बाह्वृचः (१०, १०१,५) पाभे.।

g) तस. उप.<√२दा यद्र.। नितरां संस्करणाऽन्तराऽपेक्ष इह मुपा. द्र.। आदौ तावद् हिरण्यश्रृङ्ग- >ङ्गो इति हिरण्यस्रज्‌- > -स्रग्‌ इत्येवं शोध्यः (तु शौ १०, ६, ४)। ननु शाखाभेदादुभयत्र प्रातिस्विकः स्वतन्त्रः पा. यथोपलब्धि समादरणीय इति। ओमिति। तत् कथमिति। यमु. मूको. न समादरणीय इति। मूको. अन्यथालिङ्गत्वादिति। कथमिति। उच्यते। तत्र हि हिरण्यश्रृङ्गयं मणिर् इति पा. °श्रृङ्ग° इत्युत्तरवर्तिन्या ओकारमात्राया अभावो लिङ्गं भवति यथा मूलतः °स्रगयम्‌ इत्येवं सतः °*श्रगयं>°श्रृङ्गयम्‌ इत्येवं वर्णविकारः समजनीति। प्रकरणाच्चैतत् स्पष्टं भवति यथाऽत्र °स्रज्‌- इत्येव मौलिकं प्राति. भवति नापरमिति। तथाहि। खादिरफालकृतस्य मणेर् अनुसूत्रं हिरण्यशकलेनाऽनुगमनं कृत्वा बन्धनं प्रकृतं भवति (तु. पै. त. २, ६; ७; शौ १०, ६, २; ६ प्रमृ.; कौसू ३, २) तद् हिरण्यानुसूत्रण-क्रियामादाय हिरण्यस्रक्त्वयोपचारे स्वाभाविकश्चमत्कारो भवति हिरण्यश्रृङ्गतयोपवर्णने च न काप्युपपत्तिरुपलभ्यते। एवं शब्दसंघटनसाम्याच्च छान्दससंघटनसाम्याच्च पूर्वोक्त

२अ-दान[a]- -नाय शौ १२,४, ५१.
¶अ-दानीय[b]- -याय मै ४, २,८[२].
अ-दान्य[c]- -न्यान् शौ २, ३५, ३.
अ-दाभ्य,भ्या[a]- -०भ्य ऋ १, ३१, १०; ७, १५, १५; काठ ६,८; क ४, ७; -भ्यः ऋ १, २२, १८; ३, ११, ५; ४, ५३, ४; ५, ५, २; ९, ३, २; २८, ६; ३७, ५; ५९, २; ७५, २; ८५, ६; १०३, ४; १०, ११, १; २५, ७; २६, ७; मा १८, १९; ३४, ४३†; का १९, ७, १; ३३, २, ६†; तै ४,४, १२,१; ७, ७, १; ¶६, ६, ९, १; २[२]; मै २, ११, ५; १३, १३; ३, ४,१; ४,७,७¶; काठ १८,११; ३०,७¶; ४०, ३; क २८, ११; †कौ २, ५१; २७०‡[d]; ६११; ६३५‡[d]; ६४१; ६४६; ९०६; १०२०; †जै ३, ५, १०; २३, २‡[d]; ४९, ५; ५१, ६; ५३, ४; ४, ९, १; १५, १; शौ ३, २१, ४; ७, २७,५†; १८,१, १८†; पै ३, १२, ४; -भ्यम् ऋ ३, ६२, ६; ७, १०४, २०; ८,[५, १२; ८५, ५]; ६१, १२;१०१, १२; ९, २६, ४; १०, ११८,६; मा ३, १८; ७, २; ८, ४९; १७, ७८; ३३, ४०†; का ३, ३, ९; ७, १, २; ८, २२, ३; १८, ६, १४; ३२, ३, ११†; तै १, १, १०, २; ४, १, २; ५, ५, ४; ३, ३, ३, २; ४, २[२]; ५, ६, १; ६, ४, ४, ३¶; मै १, ३, ४; ५, २; २, १०, ६; ४, ५, ७; काठ ४, १६; ६, ९; २७, १,३०,६;७†; ३९,३; क ४,८; ४२, १; कौ २, ११३९†; जै ४, ३, ३†; †शौ ८, ४, २०; २०, ५८,४; पै १६,१०,९†; -भ्यस्य ऋ ८, ७, १५; तै ६, ६,९, १¶; मै ४, ७, ७¶; -भ्या ऋ १, १५५, १; तै ५, ७, ४, १¶; मै ३,३,९¶; -०भ्या ऋ ५,७५, ७; ८; ७, ६६, १७; -भ्याः ऋ ३, २६, ४; -०भ्याः ऋ २, ३४, १०; -भ्यानि ऋ १०,५४, ४; -†भ्यासः ऋ [(२,२,४)९, ७०, ३]; कौ २, ७७५; -¶भ्ये तै ६, ६, ९, १; २; -भ्येन ऋ १०, ११८, ७; तै ६, ६,९,१¶
¶अदाभ्य-त्व[e]- -त्वम् तै ६, ६, ९, १; मै ४,७,७; काठ ३०,७[२].
१अ-दामन्[f]- -मानः ऋ ६,४४,१२.
२अ-दामन्[g]- -मानः ऋ ६, २४, ४.
‡अ-दाय[h]- -यः तै ४, ६, ४, २; शौ १९, १३, ७; पै ७, ४, ७.
अ॑-दाया(य-१अ)द[i]-
अदाया(य-अ)दी- -दीः तै ६, ५, ८, २.
¶अ॑-दायिन्[j]- -यी काठ ६,६; क४,५.
अ-दारसृत्[a]- -सृत् मै ४,२,१४¶; शौ १, २०, १.
अ-दाशु[a]- -शून् ऋ १, १७४, ६.
अ-दाशुरि[a]- -रिः ऋ ८, ४५, १५; खि ५,१२,४; शौ २०, १२८,४.
†अ-दाश्वस्[a]- -दाशुषः ऋ ७,१९, १; ९, २३, ३; शौ २०,३७,१; -दाशुषाम् ऋ [(१, ८१, ९; ५, ६, ६; ८, ४५, १५; १०,१३३, २)]; शौ २०, ५६, ६.
अदा(श्वस्+तर>)शूष्टर[k]- -रस्य ऋ ८, ८१, ७.
अ-दास[l]- -सः पै १, ६४, १.
अ-दास्यत्[j]- -स्यन् मै ४, ५, १¶;

एवाशयो लब्धप्रतिष्ठो भवति (तु. त. २, १ इत्यत्र 'वर्मसह्यमयं मणिः' इति)। अतः पा. सर्वप्रकारिकां संगतिम् अनुरुध्यैव शाखासु तत्र तत्र प्रातिस्विकी नवताऽन्वेष्टव्या नाऽन्यथा यथेह मुपा. इति दिक्। अथापि द्वितीयस्य पादस्याऽऽदितः मूको.(?उ)द्वाहम् (यद्र.) इति केवलम् उकारांऽशेऽस्पष्टेऽन्यथा सुस्पष्टे सत्यपि तत्स्थाने तृतीयस्य पादस्य साम्यतो यद् दधद् इति पठित्वा मुपा. छन्दोभङ्ग इव क्रियते श्रुतिस्वारस्यं च विहन्यते तदतीवाऽन्याय्यं द्र.। वसुनोऽदातिं प्रत्युद्वाहो हि यथा सार्थक इव भवति न तथा तद्वानम् असामर्थ्यादिति यावत्।

a) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

b) तस.'नञो गुण-' (पा ६,२,१५५) इत्य् अन्तोदात्तः। उप. अर्हार्थे छ→ईयः प्र.। यत्तु उप.अनीयर्-प्रत्ययान्ते 'कृत्योक-'(पा ६,२,१६०) इत्य् अन्तोदात्त इति केचित्साधयेयुस्तद्विमर्शार्हम्। प्रत्ययस्य मौलिकत्वाऽभावप्रसङ्गात् सर्वत्रैव ल्युडन्तादर्हार्थे छ-प्रत्ययेनेष्टाऽऽपत्तिदर्शनाच्च।

c) तस. 'ययतोः' (६, २, १५६) इत्युक्तः स्वरः।

d) विशिष्ट इह बाह्वृचः (९,२५,३) पामे.।

e) भावे त्वः प्रत्ययस् तत्स्वरेणाऽन्तोदात्तश्च।

f) बस.अन्तोदात्तः(पा६,२,१७२)।उप.<√१दा यद्र.।

g) नापूटिदि. स्वरः। उप.<√२दा<√दो यद्र.।

h) 'अ-दयुः'इति ऋ (१०,१०३,७) पामे. 'आ-दायुः' इति मै.पामे.यद्र.। सस्व. एपूटिदि.द्र.। उप. ?√१दा यद्र.।

i) तस. उप. कृते अन्नाद्- इटि. द्र.।

j) तस. नञ्-स्वरः (पा ६,२,२)। उप.<√१दा यद्र.।

k) अर्थापेक्षया नञ्-समासात् तरप् प्र.। तस्मिंश्च संप्रसारण-दीर्घाऽऽदिकार्यजातं द्र.। पित्त्वाच्च तस्य निघाते स्वरेऽविशेषः द्र.।

l) तस. उप. √दस्+भावे घञ्। एतदादिमन्त्रार्धमात्रमत्र वैकृतभूयिष्ठे सूक्ते सुपठमिव भवति।

शौ ६, ७१, ३; ११९, १; पै २, २८, २; १६, ५०, ६.

¶अ-दाहुक[a]– -कः मै १, ८, ९¶.

?अदित्[b] पै ५, २७ १.

१अ-दिति[c]–

२अ-दिति[d]– -†तयः ऋ ७, ५२, १; काठ ११, १२; –†तये ऋ १, २४, १; २; १५; ४, ३, ८; ५, ८२, ६; १०, ८७, १८; ११०, ४; मा १२, १२; २९, २९; का १३, १,१३; ३१, ४, ५; तै १, ५, ११, ४; ४, २, १, ४; मै १, २, १८; ४, १३, ३; १४, १७; काठ ३, ८; १६, ८; २०; ४०, ११; क २, १५; कौ ३, १, ४; जै २, ५, १; शौ ५, १२, ४; ७, ३५, १$; ८८, ३; ८, ३, १६; १८, ४, ६९; पै १६, ७, ८; –तिः ऋ १, ४३, २; ७२, ९; ८९, १०[६]; [९४, १६; ९५, ११; ९६, ९; ९८, ३; १००, १९; १०१, ११; १०२, ११; १०३, ८; १०५, १९; १०६, ७; १०७,३; १०८, १३;१०९, ८; ११०, ९; १११, ५; ११२, २५; ११३, २०; ११४, ११; ११५,६; ९, ९७,५८]; [१०६, ७; ४, ५५, ७]; [१०७, २; ४,५४,६; १० ६६, ३];१५३, ३; [१६२, २२; ४, ३९, ३]; १९१, ६; २, १, ११; २७, ७; [४०, ६; ७, ४०, ४]; ३, [४, ११; ७, २, ११; (५, ११, २; १०, १५, १०;७०, ११)];५४, १८; २०; ४, १, २०; २५,५; ५, ३१, ५; ४२, २; ४४, ११; ४६, ६; ४९,३; ५१, ११;५९, ८; ६, ५१,११; ६७, ४; [७५, १२; १७; ८, ४७, ९]; ७, ९, ३; ३५, ९; ३८, ४; ४०, २; ५१, २; ६०, ८; [६६, ६; ८, १२, १४]; ९३,७; ८, १८,६[३]; ७; २५, ३; १०; ४७, ९; ४८, २; ९, ८१, ५; १०, ११, २; १२, ८; ३६, ३; ६३, ३; ६४, १३; ६५, १; ६६, ४; ७२, ४; ५; ९; ९२, ११; १३२, ६; मा १, १४; १९; ४, १९; २१; ९, ३४; १०, ९; ११, ५७; ५९[२];६१; १३, १८; १४, २९; १७, ४८†; १८, २२; २५, २३[६]†; ४५; २८, २५; २९,४; ४९†; †३३, १६; ४२; ३४, ३०; का १, ५, १; ७, १; ४, ६, ३; ७, १; १०, ६, ४; ११, ४, ६; १२, ५, ८–१०; ६, १; १४, २, ३; १५, ९, २; १८, ४, १६†; १९, ७, ४; २७, ११, १०[६]†; ३०, ३, २; ३१, १, ४; †३२, १, १६; ३, १३; ३३, १, २४†; तै १, २, ४,२; ५, १; ५, ३, ३; ११, ५[२]†;¶; ६, १२, ६†; ७, ११, २७; ८, १८, २; ¶२, २, ६, १; ३, १, २; ३, १, ४, ४; २, ५, १; ३, ११, ३; ४, ११, २†; ५, ६,२; ४, १, ५, ३; ४[२]; ६, १; २,९, १; ३, १०, १; ४, ९, १; १०, १; १२, ५; †६, ६, ४; ९, ४; ७, ९, १; ¶५, १,७,१[२]$;११, २; ३, ४,४; ५, १, ६; ¶६, १, ५, ३; ७, ५$; ४, ७,२;५, ६, १; ७, ५, ४,२¶; मै १, २, ४[२]; १५; ६, १२[२]¶; ९, २; १०,२०¶; ११, ६¶; १०[२]; २, १, १२¶; ३, ५¶; ५, २¶; ६, ९; ७, ५;६[२]; ८, ६; १४; ११, ५;६; १३,२०; ¶३, १, ७[२];$; ८[२];$; २, ६; ७, १[२];२; ५; ८, ९, १; १६, २$; ३†; ¶४, १, १$; २[२]; ५–७; १३; २, ३;३, ८; ४, ३$;९; ८,१०[२];९, १$; ११, ४†; †१२, १[२];$; २; ४; ६; †१४, १; ४[७]; काठ १, १०; ११[४]; २, ५[२]; ७, २; ९; १५; १६; ८, २;१०; १६;१७; ९,१०; ११,६; ८[२]; १२,१४[२]; १३, १; ३[२]; १४; १४, ४[३];६; १५, ७; १६, ५[३];६; १६;१७[२]; १७,५; १८, ११; १९, ६;७[२];

a) अ-क्षोधुक- इत्यत्र टि. द्र.।

b) 'आद्,इद्'इत्येवं मूलतः पदद्वयाऽऽत्मकस्य पा.सतः मूको. उत्तरस्य पदस्य सकारेण प्रयोजितो भ्रमपाठ इव भवति किमपि √१दा इत्यस्य सन्नन्तं रू. इत्यभिसन्धेरिति यावत्। इतः पूर्वस्य 'म' इत्यस्य पुनरपि 'मे' इति प्रत्यावर्तनं चास्य मिथ्यापाठस्य परिणाम इति दिक् (तु. ?अदित्सदम् इत्यत्र टि.)।

c) उप. <√१दा इति कृत्वा नाउ. पृथग्-भूतं प्राति. इदमिति भवति प्रवादः। यथा त्वेवं माऽऽस्थायीत्येतदत्र परैरुदाह्रियमाणेषु निगम-स्थलेषु टि. संकेत्यमानं यद्र. (तु. नाउ.> -तिम् ऋ १, १५२, ६; ४, २, ११; –तये ऋ १०, ८७,१८)। एस्थि. एकमेव भेदकाऽङ्गनिरपेक्षम् अ-दिति- इति प्राति. इति द्र.।

d) तस. नञ्-स्वरः (पा ६, २, २)। उप. <√२दा <दो यद्र. (वैतु. शब्रा १० ६, ५, ५ यत्र √अद्+इतिन् प्र. इतीव व्युत्पत्तिः संकेत्येत। एवं नापूटि. संकेतित-स्थलेष्विह टि. च यत्र क्वचिद् उप. <√१दा इत्येवमपि भवतीति कृत्वाऽस्माद् भिन्नस्य सरूपस्य प्राति. कल्पना परैः क्रियमाणा प्रदर्शिता भवति। या ४, २२ इत्यत्र उप.<√३दी इत्येवमपि मन्येत)।

२१, १; २२, १४; २३, ८[४]; ९; १२; २४, ३[२]; ४; ६; २६, २; ३०, ४; ५; ८; ३१, १; ४; ५; १४; ३२, १; ३४, १; १४; ३६, १४; ३९, ३; १३; ४०, ९; ४६, १; २; ५; क १, ११[३]; १७; १८; ५, २; ६, ५; ७¶; ७, ६¶; २६, ४; २८, ११; ३०, ४; ५[२]; ३६, ५¶; ३७, ४[२]; ५¶; ७¶; ४०, ५¶; ४६, ७¶; ¶४७, १; ४; ५; †कौ १, १०२; २९९$; २, ७०३; १२१६; ३, १, २; †जै १, ११, ६; ३१, ७$; २, ५, २; ३, ४६, ९; शौ ३, २२, १; ५, २६, ६; ६, ३, १; ४, १; २; ७, १; ६८, २; ८१, ३; १२०, २; ७, ६, १[६]†; १८, ३; ८, ९, २१; ९, १२, १०; ११, १, १; ११; ३, ४; १२, १, ६१; १५, ६, २०; १८, ४; १८, †१, १९; ३६; ३, २७; १९, १०, ९†; पै २, ३६, ४; ६६, ५; ८०, ३; ३, १५, ३; १८, १; २३, ३; ४, २८, ७[२]†; ५, ११, ५; ३७, ७; ४०, २; ६, १०, ३; ८, १४, ११†; ९, २, ६; १२, २; १०, ६, २; १२, १, १६†; १३, ८, ९†; १६, १९, ९; ४७, ५; ५३, ९; ८९, १; ९०, २; १३९, ११;

–तिम् ऋ १, ८९, ३; १०६, १; १३६, ३; १५२, ६; ४, २, ११[a]; २५, ३; ५५, ३; ५, ४२, १; ४६, ३; ६२, ८; ६९, ३; ६, ५०, १; ५१, ३; ४; ७, १०, ४; १८, ८; ३९, ५; ८, १९, १४; १०१, १५; १०, ६३, ५; १०; [६५, ९; (६६, ४)]; ९२, १४; [१००, १–११]; मा ९, ५; १०, १६†; १३. ४३; ४९; १८, ३०; २१, ५; ६†; २५, २; १६†; ३३, ४९†; का १०, २, १; ११, ५, ७†; १४, ४, ६; ५, ३; २०, १, १; २३, १, ५; ६†; २७, ?, २; ११, ३†; ३२, ४, ६†; तै १, ५, ११, ५[२]†; ७, ७, १; ८, १२, ३†; ४, २, १०, २[२]; ५, ५, ४, ४†; ७, १३, १; ६, १, ५, ३[३]¶; मै १, ११, १; २, ६, ९; ७, १७[२]; ३, ७, १[६]¶; १५, २; ४, १०, १†; काठ २, ३; ७, २; १५, ७; २३, ८; ३०, ४; ५; ४०, ५; ५३, ३; क ५, २; २५, ८; ४६, ७; शौ ३, ८, २; ७, ६, २; ७, १; २; १८, ४, ३०; पै २, ३०, २†; ३, ९, ४; ४, २८, १†; ११, ५, २;

---

a) अत्र सा.च अर्वाञ्चश्च (तु.PW.GW.प्रभृ.)नापू.तैरुप-कल्प्यमानं पृथग्-भूतं √१दा> प्राति. पश्यन्ति । अयं तावत् तेषामभिप्रायः । 'हे देव ! अस्माकं राये दितिं रास्व' इत्येवं ह्यत्राऽऽशंसनं भवति । आशंस्यमानस्य धनस्य च देवकर्तृक-दानैकसाध्यत्वाद् √१दा> दिति- इति वैयुत्पत्तिकः क्रमः सुकल्पो भवति । तेन च 'भूयो भूयो दानं देहि' इत्येवं देवः प्रार्थ्येत । यथा च धनप्राप्तिर्देवकर्तृकदानसाध्या सती देवाऽऽराधनतः सिद्ध्येत् तथैव प्राप्तं सत् तद्धनमनुत्सर्गेण दानाऽभावेन नाम संरक्ष्येतेति कृत्वाऽनुपदमेवाऽऽत्मकर्तृक उक्तपूर्व-दित्यभावोऽप्याशंस्येतेति भवत्येव तत् प्राति. अपि लब्धाऽवसरमिति । एतत्त्वत्र द्र. । यत्र तत्र मन्त्रेषु प्रार्थ्यमानं धनं सर्वत्र दानायैवेष्यते (तु. ऋ १०, १४१,६) न तु क्वापि कदर्यवृत्त्या सुगुप्तये । कदर्यवृत्तीनां पणीनां पौनःपुन्येन निन्द्यत्वेन तत्संगृहीत-सुगुप्तस्य धनस्य प्रसह्याऽपहरणस्य च प्रशस्य-कर्मतया श्रावणं भवति (तु. ऋ ६,५३,३; ५–७; ९, १११,२) । अतः श्रुतिस्वारस्यं विहन्यादेवायं परकीयः प्रवादो यथा प्रकृते स्वस्य कृते देवकर्तृकं दानं धनप्राप्त्यनन्तरमात्म-कर्तृकस्य दानस्य निवारणं चेष्येतेति । एस्थि. 'कदर्याणां धनस्याऽपहरणं कृत्वा तद्धनाऽवखण्डनाऽऽत्मिकां दितिं (<√२दा√दो) तत्फलस्वरूपामैश्वर्य्यर्द्धिं वाऽस्मभ्यं देहि दानशीलानामस्माकं त्वत्प्रसादप्राप्तस्य धनस्य च परकृताऽवखण्डनाऽभावं च सुरक्षितं कुरु' इत्याकारकमाशंसनमेव श्रुत्यनुकूलतया मन्त्रसदर्थतया च संभाव्येत । तेन यत्र यत्राऽन्यत्राऽप्यन्यैरुक्तपूर्वा पृथग्-भूतस्य प्राति. कल्पना क्रियते तत्र तत्राऽप्यसौ व्याख्यानस्याऽस्य सविषयत्व-सद्भावात् तद्विघातक-लिङ्गाऽन्तरस्य चाऽनुपगमात् समानमेवान्यथासिद्धायतामिति नैव भूयांसं वचोविस्तरमपेक्षेत (तु. GW. ऋ १, १५२, ६; १०, १८७,१८ यत्र देवतावृत्ति प्राति. भवतीति विरोधाऽभावः द्र. ) । ननु **'दितिश्च दाति वार्यम्'** (ऋ ७, १५, १२) इति मन्त्र-वर्णाद् दानार्थकस्य क्रियापदस्य संनियोगाद् दिति-<√१दा इति द्र. इति चेन्न । बहुदेवसामान्येन दान-क्रियायामुपक्षिप्तायां सत्यां दिति-विषयत्वेन श्रुत्युपलम्भात् (तु. त. एव नापू. मन्त्रे च भग-विषयत्वेन श्रवणं भवति) नैतदैकान्तिकमिव भवति यथा क्रियापदमेतद् दिति-इत्यस्य वैयुत्पत्तिक-संकेततयैव गृह्येतेति । अन्यथा तद्व्युत्पत्तावपि मन्त्रस्वारस्याऽविहतत्वोपगमात् । तथाहि । याऽऽत्मगताऽवखण्डनरहिता सती देवताऽदिति- इत्येवमुच्यते सैवाऽऽत्मकर्तृकपरगताऽवखण्डनमूलहेतुभूता सती दिति-इत्येवमुच्यत इति द्र. । यदपीह सा. अदितिम्>अदितेर् इति विभक्तिपरिणाममभ्यरोचयत् तन्नापेक्ष्यते । √उरूष्य

७, ११; १३, ५, २; ९;
–०ते ऋ २, २७, १४; ८, २७,
५; मा ३, २७; ८. ४३; ३८,
२; का ३, ३, १९; ९, ६, २;
३८, १, २; तै १, ६, ३, १;
२, ३, १, २; ७, १, ६, ८; मै
२, २, १; ४, २, ५; ९, ७; –०ते
ऋ १, ९४, १५; २, २९, ३;
[४, ५५, १; ६२, ४]; ५, ५१,
१४; [६, ५१, ५; १०, ६३,
१७; ६४, १७]; ७, ६०, १;
८, १८, ४; ६७, १०; १४; १८;
१०, ३९, ११; ६४, ५; मा ११,
५६; का १२, ५, ७; तै १, ५,
३, १; २, ३, १०, ३; ४, १,
५, ३; मै १, ६, १; २; २, ३,
४; ७, ५; †४, १२, ४; १४,
११; काठ ७, १३$^{३}$; ८, ६;
११, ७; ८; १६, ५; ३६, १५;
क ६, ४; ७, २; शौ २, २८,
५; १२, ३, ११; पै १२, १,
१५†; १९, ५, ३; –तेः ऋ १,
११३, १९; १६६, १२; १८५,
३; ४, १२, ४; ४२, ४; ७, ४१, २;
६०, ५; [८२, १०; ८३, १०];
८७, ७; ८८, ७; ८, १८, ५;
९, २६, १; ६९, ३; ७१, ५;
७४, ३; ५; ९६, १५; १०, ५,
७; ११, १; ६३, २; ७०, ७;
७२, ४; ८; १८५, ३; खि ५,
७, १, २; †मा ३, ३३; ३४,
३५; का ३, ३, २५†; १९, ८,
४; ३३, २, ३†; तै ४, ७, १५,
७†; मै १, ३, ९; ५, ४†; ३,
१६, ४; ५†; †४, ६, ९; १३,
२; काठ २, १५†; ७, २†;
१५, १३; ३१, १४; क ५, २†;
शौ २, २८, ४; ३, १६, २†;
७, ८, १; ११, १, २४; १३,
२, ९; १९, ६, २१; १८, १,
१८†; पै ४, ३१, २†; ६, २,
९[a]; १५, २, ३; १६, ९१,
४; –०तेः[b] ऋ [२, २८, ३;
७, ६०, ५[c];]–¶त्या तै ५, १,
७, १; ६, १, ५, २; काठ १९,
७; क ३०, ५; –त्याः मा १, ११;
१४$^{२}$; १९$^{२}$; ४, २२; ३०; १४,
५; का १, ३, ८; ५, १; २; ७,
१; २; २, ३, ४; ५, ३; ४, ७,
२; १०, १; १५, १, ५; तै १,
१, ४, २; ५, १; २; ६, १$^{२}$; २, ८,
१$^{२}$; १०, १$^{२}$; ३, ४, २$^{२}$; ६, ५, १;
६, १, ११, २$^{२}$; ३, २, ४$^{२}$; मै १,
१, २$^{२}$; ३; ५; ६$^{४}$; ७$^{५}$; २, ६;
१३; २, ७, ६; ८, १; ५; ३,
१, ७¶; ७, ८¶; ९, १; १५,
४; ७$^{२}$; ४, १, २$^{२}$; ५; ६¶; ७$^{२}$;
१३; २, ३¶; ३, ८¶; ९, ७$^{२}$;
काठ १, २; ५$^{२}$; ६$^{२}$; ९; २, ६$^{२}$;
७$^{२}$; ३, १$^{२}$; ५, १; १६, ५;
१७, १; ४; १९, ६$^{२}$; ¶; २०,
१०; २१, १; २४, ६$^{२}$; २६, २$^{२}$;
३१, १; ४; ५$^{२}$; ३२, १; ४७,
१०; ५३, १२; क १, २; ५$^{२}$;
६$^{२}$; ९; १९$^{२}$; २, १$^{२}$; ८$^{२}$; २५,
१०; २६, ३; ३०, ४$^{२}$; ¶; ३१,
१२; ३७, ७$^{२}$; ४०, ५$^{२}$; ४७,
१; ४; ५$^{२}$; शौ ३, २२, १; ५,
१, ९; १३, १, ३८; २, ३७; पै
३, १८, १; –त्याम् ¶तै ५, १,
७, १; ६, १, ५, १; काठ १९,
७¶; क ३०, ५¶; पै ९, १२, ३[d];
–त्यै मा १. ३०; २, २; ४, ३०;
११, ५९; १४, २५; २२, २०$^{३}$;
२४, ५; ९; २५, ४; ८$^{२}$; २९,
६०; ३८, १; ३; का १, १०, २;
२, १, २; ४, १०, १; १२, ५,
९; २४, ७, २$^{३}$; २६, १, ९; २,
४; २७, ४, १; ८, १$^{२}$; ३१, ५,
१; ३८, १, १; ३; तै १, १, २, २;
४, १, ५, ४; ३, ९, १; ५, ३,
४, ३; ५, २०, १; ६, १८, १;
७, १६, १; २२, १; ७, ३, १५, १$^{३}$;
५, १४, १¶; मै १, ११, १०; २, ५,
२¶; ६, १३; ३, १२, ५$^{३}$; १३, ६;
१०; १५, १०; काठ ८, १०;
११, ८; १२, १३$^{३}$; १३, ३;
१५, ४; ९; ३०, ४$^{४}$; ५$^{२}$; ३६,
१४; ४३, ५$^{३}$; ४५, १०; ४७,
१०; ४९, ८; ५३, ६; क ७,
६¶; ४६, ७$^{४}$.

†आदितेय°– -यम् ऋ १०,
८८, ११; मै ४, १४, १४.

आदित्य,त्या[f]– -०त्य मै १, ७,
१; ५; शौ ५, २१, १०; ११, १२,
४; १७, १, २५; –०त्य ऋ १,
२४, १५; ३, ५९, २; ८, ५२,
७; १०१, ११; खि ३, ४, ७;
†मा ८, ३; ५$; १२, १२;

इत्यस्य वारणाऽर्थस्य सतोऽनीप्सितस्य पञ्चम्यन्तस्य (वैतु. पा १,४,२७) गम्यत्वे सति द्वितीया-योगस्य श्रुति-सुभिन्नत्वात् (तु. ऋ ८,२५,११; ७१,७; १०,७,१)।

a) 'अदित्याः' इति शौ (५, १, ९,) पाभे.।

b) षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे (पावा २, १,२) निघातः (पा ८, १, १९) द्र.।

c) सम्बुद्धिविषयत्वाभावादत्र निघाताभाव इति विशेषः।

d) यतु. '?भादित्या' इत्यत्र टि.।

e) शुभ्रादराकृतिगणत्वाद् अपत्येऽर्थे ढक् (>एयः) प्रत्ययः। आदिवृद्धिर् अन्तोदात्तश्च (यक. पा ४,१,१२३; ७, २, ११८; ६, १, १६५)।

f) प्राग्दीव्यतीया येऽर्थास्तेषु ण्यः प्रत्ययस्तत्स्वरश्च (यक. पा ४, १, ८५; ३, १, ३)।

३३, ३९; †का ८, १, २; ३$; १३, १, १३; ३२, ३, १०; †तै १, ४, २२, १; ५, ११, ३; ३, ४, ११, ५; ४, २, १, ४; ६, ५, ६, ५¶; †मै १, २, १८; ३, २६; ४, ६, ९$; १०, २; १४, १७; काठ ३, ८; ४, १०[२]; ८, १४; ९, ३; १६, ८; २३, १२; २८, ६; ४०, ११; क २, १५†; ३, ८[२]; †; ८, २; ६; ४४, ६; †कौ १, २७६; २, ११३८; ३, १, ४; †जै १, २९, ४; २, ५, १; ४, ३, २; शौ ७, ८८, ३†; ९, १३, २२; १३, २, ३; २८; २९[२]; १८, ४, ६९; २०, ५८, ३†; पै ४, १६, ८; ५, ३९, ५‡[a]; १६, ९०, ९[b]; १५१, ४; १५२, ७; –त्यः ऋ १, २५, १२; ५०, १३; १०५, १६; १६३, ३; १९१, ९; २, २८, ४; ३, ५९, ५; ७, ८४, ४; खि ७, ७, ८; मा २६, १; २९, १४†; ३२, १; ३९, ६; का २८, १, १; ३१, ३, ३†; ३५, ३, १; ३९, ४, १; ¶तै १, ५, ९, ४; ७, ६, ३; २, १, २, ४; ४, १; ८, १; २; २, १०, १; ३, २, २; ४, १[२]; २; ४, १०, २; ५, ८, १; ६, ६, ३; ३, ३, ८, ५; ६; ५, ५, २; ४, ६, ७, १†; ७, ७, २$; ५, १, ८, ६; १०, ३; २, ५, ४; ३, ३, ५; १०, ३[२]; ४, ६, ६; १२, २; ५, १, ६; ७, १, ३; ४, २; ५, २; ५; ७; २६, १[२]$; ६, १, ५, १[२]; ७, ५[२]; २, १, ६; ४, १०, २; ५, ३, ४; ४, १[२]; ६, २; ३; ४[३]; ५; ७, १, १, ६; २, ७, २; ३, १०, १[२]; ५[२]; ५, ४, १;

१६, १$; १९, २$; ¶मै १, ५, ७; ९; ११; ६, ३; ६; ८; १२; ८, १; २; १०, १$; १६; २०; ११, ७, २, १, २[२]; २, २[३]; ३, ३[२]; ६; ५, ७; ९[२]–११[२]; ६, ५; ३, १, १०; ३, ८[२]; $; ६, १; ७, १; २[२]; ५[२]; ७; ८; ८, ४; ९, १[२]; ३; ४, १, ५; ८; ११; १२; १३[२]; २, १; २; ३, ८; ५, ५; ६, ३[२]; ६; ८; ९[८]; ७, ३[३]; ८, ५; ८; १०[३]; $९, २३; २५; १४, १४[३]$; काठ ६, ३; ७, ६; ८, ४[२]; ८[२]; ९, ३; १५; १०, ८[२]; ११, ४[२]; ५; ६; १०; १२, ६; १३, ७; ८; १२[२]; १४, ७; २०, ५; १३[२]; २१, ८; २२, ८; १३; २३, ८; २४, ६; ९; २६, २; ४; २७, ८; २८, २[२]; ६[४]; १०; २९, ७[२]; ३०, ३; ५[२]; ३१, ६[२]; १०; १३; ३२, २; ३३, ८; ३४, ९; ३६, १०; ३७, ९; १०; ११; १३; १४; ४०, ६; ४५, ४[२]; ११; १५; ¶क ४, २; ६, ९[२]; ७, ३[२]; ८, ६; ३१, ७; ३५, २; ५; ३७, ७[२]; ३८, २; ४०, ५; ४१, २; ४४, २[२]; ६[९]; ४५, १; ८[२]; ४६, ६; ४७, ६; १०; जै १, १२, १०; शौ २, ३२, १; ४, ३९, ६; ६, ५२, १†; ९, २, १५; ११, ११, २५; १२, ११; १६; १५, ४, १८; १०, ७; १५, ४; १८, २; १७, १, २४†; १९, ९, १०; पै २, १४, १; ३, १७, ५; ४, १६, १; ७; ८, २०, १; ९, १२, ७; १२, ७, २; १५, १३, ६; १६, ७५, १२; ७७, ५; १५०, १०; १५२, ४; ६;

–त्यम् ऋ १, २४, १३; ४, १, २; १०, ३६, ४; मा १३, ४१; का १०, ५, ५†; १४, ४, ४; ¶तै १, ८, १, १; ९, १; २०, १; २, १, ४, १; ८, १; १०, ३; २, ६, १; ३, १, ३; ५; २, ३; ५, ३; १२, २; ५, ८, २; ३, ३, ८, ६; ५, ५, २; ४, २, १०, १$; ५, ३, ६, १; ६, २, ६, १; ५, ६, ५; ¶मै १, ६, ८; १०, २०; २, २, १[२]; ३, ५; ५, ११; ७, १७$; १३, १५$; ३, ६, १०; ८, ४[२]; ४, ३, ४; ४, ८; ६, ९[२]; ८, १०; $९, २३; २५; काठ ६, १[२]; ३[२]; ८, ९[३]; १०, १२; १४, २; १६, १७; २२, १३; २३, ८[३]; ९[४]; २४, ३[२]; २८, ६; ३०, ५; ३३, ६[३]; ८; ३७, १७; ¶क ३, १२; ४, २[२]; ७, ५[३]; ३६, ५[३]; ६[४]; ३७, ४[२]; ४४, ६; कौ १, ९१‡[c]; जै १, १०, १‡[c]; ५†; शौ ३, २०, ४‡[c]; १०, ८, १७; १५, ४, १७; १०, ११; १७, ९; पै ३, ३४, ६†; ९, १२, १; १२, ७, २; १४, ३, २६; १६, १०३, ८; –त्यस्य ऋ २, २८, १; ३, ५९, ३; ¶तै १, ७, ६, ३; २, १, २, ५; ४, २; ५, १, ८, ६; २, १, ३; ५, ४; ६, ३, ८, ३; ४, ५, ५; ¶मै १, ४, ७; ८, २; ५; ६; २, १, २, ५, १०; ३, २, १; ४; ६, १; ७, ७; १०, १[२]; ४, ६, ९; ८, २; ३; ५; १०, २†; ३४, १४$; काठ १२, १३; २३, १[२]; २६, ७; २७, २; ३२, ५; ३३, ६[३]; ३४, ५; ¶क ३५, ७[२]; ४१, ५; ४२, २; शौ १३, २, १; –त्या

a) अग्निम् इति ऋ (१०,१२६,५) विशिष्टः पाभे.।

b) सुपा. 'आदित्य देवा' इत्यत्र द्वितीये पदे सांहितिको दीर्घः द्र.।

c) 'आदित्यान्' इति ऋ (१०, १४१, ३) पाभे.।

ऋ ५,६७,१;–०त्या ऋ ७,८५,
४; –त्या ऋ [१, १३६, ३; २,
४१, ६]; ५, ६९, ४; मा ४,
२१; का ४, ७, १; तै १, २,५,
१; २, ३, १, ३¶; मै १, २,४;
२, ५,२¶; ६, १३; ¶४, ३,१;
४,९; काठ २, ५; १३, १; ३४,
१; क १, १८; कौ २, २६२†;
जै ३, २२, ९†; –०त्याः ऋ १,
४१, ५; २, २९, १; ८, १८,
[१२; ६७,१८]; १९; २२;४७,
११; ६७, ७; १५; १६; २०;
१०, ६६, १२; मै १,३, १; २,
२, १; शौ ६, १४४, १; २०,
१३५, ६; ९; –०त्याः ऋ १,
[१०६,२; १०,३५,११];१८८,
४; २, ३,४; २७,५;६;८; ११;
१६; ६,[५१,५; १०,६३, १७;
६४, १७]; ६२, ८; ८, २७,
२२; ४७, १; ६; ८३, ५; १०,
३५, १२; ६३, ७; तै. २, १,
११, ५$^{२}$†; मै १, ६,१२¶; †४,
१४, ११; १४$^{२}$; काठ ३,९;११,
६;१२; क २, १६; शौ १, ३०,
१; ५, २८,४; ६, ११४, २; पै
१, १४,१; २, ५९,२; ७०, ५;
४, २८, २†; १६, ४९, १; २;
–त्याः ऋ [३, ८, ८; ७, ३५,
१४;(१०,६६,१२)];७,५१,३;
६०, ४; ८, ४७, ४; ९, ११४,
३; १०, [६५, १; (६६, ४)];
८५, १; २; १२८, ९; खि ५,
७, १, ५; ४, १३; २०, १; ४;
मा २, ५; ९, ३४; ११, ५८;
६०; ६५; १२, ४४; १४, २०;
३०; १५, १२; २१, २५; २३,
८; ३४, ४६†; का २, १, ७;
१०, ६, ४; १२, ५, ९; ११;७,
१९; १३, ३, १५; १५, ५, ६;
९, ४; १६, ३, ७; २३, ३, ३;

२५, ३, ४; ३३, २, ९†; तै १,
१, ९,३; ५, ३,२;३$^{२}$; ४,४$^{२}$¶;
७, ११,२; २, १, ११, ३; ¶३,
१, १$^{२}$; ४; ५; ५, ३; ४, १४,
१; ¶३,३, ३,१$; ४,९,७; ५,
१, २$^{२}$; २, ३; ४, १. ५, ४; ६,
१;३; २,३,४; ३, ७,२;१०,३;
४, २,२;५, २; ७, १४,४†;५,
२, २, ५; ¶३, ४, ३; १०, २$^{२}$;
¶५,२,६; ९,४; ६,७,३¶;१९,
१; ७,२,२; ६, ५,६,१¶; ¶७,
१,५, २; ३, ४, १; ५, १$^{३}$;१३,
१$; ४,६,१; २०,१$; मै १,१,
१०; २,८; ४,३; ६,१२$^{३}$¶; ७,
१$^{४}$; ५$^{६}$; ¶$^{३}$; ९, २; ११, १०$^{३}$;
२, २, १$^{६}$¶; ७,६$^{३}$;१२; ८, ३;
९; ११, ५; ¶३, १, ७; १०$^{३}$;
४, २; ६; ७, १; ११, १२$;
१२, १९$; ¶४, १, १०; ३,
१; ४, ३; ५;५, ४; ६, ८; ९,
२७$; १२, २$; ४†;१३, २†;
१४, १७$; काठ १, ९; ७, ६;
१५$^{३}$; ८, १४$^{४}$; ९, ३$^{५}$; १०;
१६$^{४}$; १०, १२; ११,६$^{१०}$; १४,
४$^{३}$; १५, १ः; १६, ५$^{२}$;६;१७,
३; ८; १९, ९$^{३}$; २१, १; ५;
२२, ६$^{२}$; ७; १०; २४, ४; २५,
५; ६$^{३}$; २६, ९; २८, ३$^{२}$; ६$^{३}$;
३१, ८; ३४, ७; १६; ३५, ७;
३७, १७; ३८, ११; १२; १३;
४०, ५$^{२}$; १०; ४३, ३; ४४, ९;
४९,९; ¶क १,९$;५,५;६ ५$^{३}$;
८, २$^{४}$$;६$^{५}$;$$^{२}$; $२६,२;४;७;
३१, २०; ३४, १$^{२}$; ३५, १;
४$;३७,५; ३९,२$;४$^{३}$; ४१,
७;४४, ३$^{२}$; ६$^{३}$; ४७, ८;४८,
६$;शौ १,९,१; ३, २७,१;५,
†३, ९; १०; ६, ६८, १; ७४,
३;८, १, १६; १०, ७, २२; ९,
८; ११, ८, १३; १२, २, ६;

३, ४३; †१४, १, १; २; १५,
२, २; १८, ३, १२; ४,३; १९,
९, ११; ११, ४†; १६, २;२७,
१५; २०, १३५, ६; ९; पै १,
१९, १; ५०, २; १०१, २;
१०२, ४; २, २५, १; ८०, ३;
३, २४,१; ५, ४, १४†;१४,८;
६, ७, ९; १८, २; ८, ९, २;
१०, ३, ५; ८, ५; ११, २, ३;
१३, ३,१६; ५, १७; ८,१४†;
१४, १, १; १५, १४, ६; १६,
२, ६; ७०, ५; ७२, २; १३६,
८; –¶त्यात् मै १, १०, १७;
४, ८, ८; काठ ३६, १२;
–त्यान् ऋ १, [१४, ३; ६,१६,
२४; (१०, १४१, ४)]; ४५,
१; ९४, ३; ३, २०, ५; ४,
२५, ३; ६, ५१, ४; [७, ४४,
१; १०, ३६, १]; ८, ६७, १;
१०, ६३, ३; ५; [६५,९; ६६,
४]; १४१,३; खि ५,७,४,१३;
मा ९, २६†; १५, ६; २५, १;
३३,४५†; का १६, २,३; २७,
१, २; ३२, ४, २†; तै १, ७,
१०,३†; २,१,२,४¶;११,५†;
३, १, १$^{२}$¶; ५; ५, ३¶; ३, ५,
१, २; ४, ४, १, २; ५, ३, ६,
१¶; ७, १२, १; ६, ५,६, ३¶;
¶७, १,५,१;३; मै १,६,१२¶;
११, ४†; २, २, १$^{२}$;¶; ८,८;
३, १५, १; १, ४, १२, १$^{२}$†;
काठ ९, १६; ११, ६; १७, ७;
२८, ३; ३७, १७; ५३, २; क
२६, ६; ४४,३¶; †कौ १,९६;
२, ४१६; जै ३, ३२, ६†; शौ
३, ८, ३; १०, ९, १०; ११,
८, ५; १३, ३, १७; पै १२,१,
४†; १३, ५,१८; १५, १३,५;
१६, १३६, १०; –त्यानाम् ऋ
२, २७, १३; ३, ५६, ४;

७,५१,१; ८, १८,१; २; ३१,
१२; ४७, ५; ६७, ३; १०१,
१५; १०, ३५, ९; ४८, ११;
१०३, ९, मा १४, २५; १७,
४१†; २२, १९; २४, ६; ३९;
२५, ६; का १५, ८, ३; १८,
४, ९†; २४, ६, १; २६, २,
१; ८, ४; २७, ६, १; तै १,
१, ११,२; †२, १, ११,४; ६;
४, ३, ९, २; ४, ११, ३; ६,
४, ३†; ५, ३, ४, ३; ६, १६,
१; ७, १७, १; ६, १, १, ४¶;
७, १, १२, १; मै १, १, ८;
१२; ३, १; ३६; ९, २; २, ८,
५; १०, ४†; ३, १२, ४; १३,
७; १४, २०; १५, ६; ४,१,८;
१३; ९, १२; १४, १४$^{२}$†; काठ
१, ११; ३,९; ७, १३$^{३}$; ९,
१०; १७, ४; १८,५; १९,९;
२१, १; २२, ५; ३१, १०;
३९, १; ४१, ३; ४९, ६;
५३, ७; क १, ११; २, १६;
२६, ३; २८, ५†; ४७, १०;
कौ २, १२०७†; शौ ९, १, ४;
४, १३; १५, २,४; १८, ४,८;
१९, १३,१०†; पै ७,४,१०†;
१६, २५, ३; ३२, ४‡; १२४,
१$^{२}$; —त्याभिः मै ३, ८, ५¶;
—त्याम् तै १, ८,१९,१¶; काठ
१३, १; ३४, १; —त्याय काठ
२४, ३$^{२}$; ३३, ६; ४१, १; क
३७, ४$^{२}$¶; शौ ४, ३९, ५$^{२}$;
१२, ३,५५; पै २, ३६, ४;
१३, ५, १९; १६, ११८, ७;
—०त्यासः ऋ १, ४१, ४;१०७,
१; ८, १८, १०; ११; १८;
४७, २; ७; ६७, ५; १४; १९;
२१; मा ८, ४†; ३३, ६८;
का ८, १, ३†; ३२, ५, १४;
†तै १, ४, २२,१; २, १, ११,
४$^{२}$; मै १, ३, २६; काठ ४,
१०; क ३, ८; †कौ १, ३९५;
३९७; †जै १, ४४, ५; ७;
शौ १९, ५६, ४; पै ९, १२,
९; —०त्यासः ऋ ८, १९, ३४;
१०, ६३,१३; —†त्यासः ऋ २,
१, १३; २७, २–४; ३, ५४,
१०; ५, ५१, १२; ७, ५१, २;
५२, १; ८, २७, ६; ६७, २;
१०, ७७, २; १२६, ५; ७;
मै ४, १२, १; काठ ११, १२$^{२}$;
पै ३, ८, ४§; ५, ३९, ४; ५;
—त्ये मा ४०, १७; मै ३, ७,
१०¶; काठ ८, ८; २७, १; २;
३४, ५; ¶क ७, ३; ४२, १;
२; शौ १०, ३, १८; पै १६,
६५, २; —त्येन ऋ १०, ७७, ८;
खि १, १,१; ¶मै १, ८, ९; ४,
८, १०; काठ १३, ५; २६, ४;
३०, ५; क ४१, २¶; शौ ४,
३९, ६; —त्येभिः ऋ १,२०,५;
७, १०, ४; ३५, ६; ४४, ४;
८, ९, १२; ९, ६१, ७; तै ७,
१, १८, १; काठ ४१, ९; कौ
२, ४३१†; जै ३,३३, ६†; शौ
२, १२; ४; १९, १०, ६†:
२०, १४१, २†; पै २, ५, ४;
५,३७,६; १३,८,६†; —त्येभ्यः
ऋ २,२७,१; खि ५, ७, ४,१७;
मा २, १६; ८, १;२;३;४;१५,
६; २२, २८; २४, २७; ३४,
५४†; का २, ४, २; ८, १,
१–३; १६, २, ३; २४, १४,
२; २६, ६, २; ३३,२, १७†;
तै १, १, १३, १; ४, २२, १;
२, १,२, ३$^{२}$¶; ३, १, १$^{२}$¶; ४;
३, ५, ६, २; ४, ४, १, २; ६,
२; ५, ५,२,७¶; ६, ५,६,१¶;
७, १,५, २$^{२}$¶; मै १, ३, २६$^{२}$;
३६; ६, १२¶; ७, १; ५; ११,
१०; २, २, १¶; ६, १; ८, ८;
१३; ३, ७,१०¶; १२,७; १४,
९; ४, ३, १¶; काठ ४, १०$^{३}$;
८,१४; ९, ३; ११, ६$^{७}$; १२†;
१२, १३$^{२}$; १५, १; १७, ७;
१९, ९; २२. ५; ७; ३०, ६;
३७, १७; ५१, ३; क ३, ८$^{३}$;
८, २;६; २६,६; ३५,१¶; शौ
१२, ३, ४४; १५, २, ३; १९,
३९, ५; पै १, ९३, १; ७,
१०, ५; १६, १२४, १–११;
—त्येषु ऋ ८, २७, ३; पै २,
१८, ५; —त्यैः ऋ [१, १०७,
२; ४, ५४, ६; १०, ६६, ३];
[२, ३१, १; ८, ३५, १]; ३,
५४, २०; ४, ३४, ८; ५, ५१,
१०; ८, [३५, १३; १४; १५];
१०,९८, १; १२५,१;१५०,१;
१५७, २; ३; खि ५, ७, ३,७;
मा २, २२; ५, ११; १४,७;
२०, ३९; २५, ४६$^{२}$†; २८,
४; २९, ८; का २, ५, ५; ५,
४, १; १५, २, १; २२, ४, ४;
२७, १५, १$^{२}$†; ३०, १, ४;
३१, १, ८; तै १, २, १२, २;
२, १, ११, २;३; २,११, ५¶;
४, ३, ४, ३; ५, १, ११, ३¶;
¶६, २,२,१;७,५; मै १, २,८;
२, २, ६¶; ८,१; ३, ७,१०¶;
११,१; १६,२; ४, ९, ५; १२,
२$^{२}$; १३, ८†; काठ २, ९;
१०, १२$^{२}$; ११, ३; १७, १;
१९,१३; २४,९; ३८,६; ४६,
२; क २,३; २५,१०; ३८,२¶;
†कौ २, ४६१; ४६२; †जै ३,
३४, १९; २०; शौ ४,३०,१†;
८, ८, १२; १०, १०, ९; १८,
३, २७; १९,१७,४;†२०,६३,
१;२; १२४,४;५; पै ७,१६,४;
१५,५,४; १६,३०,२;१०७,९;

–त्यौ शौ ८, २, १५; पै १६, ४, ५. [°त्य- स°, सु°]

आदित्य-ग्रह[a]– -हः, -हम् तै ६, ५, १०, १¶.

आदित्य-जूत[b]– -तः ऋ ८, ४६, ५.

¶आदित्य-धामन्[c]– -मानः मै ३, २, ९; काठ २०, ११[३]; क ३१, १३[३].

¶आदित्य-नामन्[a]– -मानि मै ४, ४, ५.

¶आदित्य-पात्र[a]– -त्रम् मै ४, ८, ८; काठ २८, १०[२]; क ४५, १[२].

आदित्य-रथ[a]-

आदित्यरथ-वेग[d]– -गेन खि २, १, २.

आदित्य-वत्[e]– -वतः खि ५, ७, ४, १७; –वते मा ६, ३२; ३८, ८; का ६, ८, ३; ३८, २, २; तै १, ४, १, १; २, २, ११, ६[२]¶; मै १, ३, ३; २, २, ६¶; ४, ५, ४; काठ ३, १०; ११, ३; क २, १७; –वन्तम् शौ १९, १८, ४; पै ७, १७, ४.

आदित्यवद्-गण[c]– -णस्य तै ३, २, ५, ३.

आदित्य-वनि[f]– -निः मा ५, १२ का ५, ४, २; तै १, २, १२, ३; ६, २, ८, २; मै १, २, ८; ३, ८, ५; काठ २, ९; २५, ६; क २, ३; ३९, ४.

आदित्य-वर्ण[c]– -र्णम् खि ४, ११, ९; मा ३१, १८; का ३५, २, २; –र्णे खि २, ६, ६.

आदित्या(ऽ)ङ्गिरस्– -रसः पै १३, ५, २०.

¶आदित्या(त्य-अ)न्त– -न्तम् काठ २८, ६; क ४४, ६.

¶आदित्ये(त्य-इ)ष्टका[a]– -काः तै ५, ३, १०, २; ३; काठ २२, ६; क ३४, १.

¶अदिति-देवत्य[g]– -त्याः तै ६, ४, ७, ३.

†अदिति-त्व[h]– -त्वे ऋ ७, ५१, १; तै २, १, ११, ६; मै ४, १४, १४.

अ-दित्सत्[i]– -त्सन्तम् ऋ ६, ५३, ३; मा ९, २४; का १०, ५, ३; तै १, ७, १०, १; मै १, ११, ४; काठ १४, २; शौ ३, २०, ८; पै ३, ३४, ९.

?अदित्सदम्[j] पै ५, २७, १.

अ-दिप्सत्[k]– -प्सतः शौ ४, ३६, २; –प्सन्तम् पै १०, १२, ७.

*अ-द्विव्[l]– -*द्वा

¶अ-दीक्षित[i]– -तः तै ६, १, २, १; काठ २३, २; क ३५, ८; –ताः काठ ३४, ६[२].

अ-दीन[m]– -नाः मा ३६, २४‡[n].

?अदीप[o] पै १६, ५०, २.

अ-दीव्यत्– -व्यन् पै १६, ५०, ६.

अ-दु(ग्ध>)ग्धा[i]– -†ग्धाः ऋ ७, ३२, २२; मा २७, ३५; का २९, ५, ४; तै २, ४, १४, २; मै १, ४, ५[२]¶; २, १३, ९; काठ ३२, ३¶; ३९, १२; कौ १, २३३; २, ३०; जै १, २५, १; ३, ४, १; शौ २०, १२१, १.

†अ-दुच्छुन[p]– -नः ऋ ९, ६१, १७; कौ २, २४०; जै ३, २१, ५.

---

a) तस. सामान्यः समासस्वरः (पा ६,१,२२३) उप. यद्र.।

b) कर्मणि क्तान्ते पूपप्रस्व. (पा ६,२,४८) उप. यद्र.।

c) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

d) तस. सासस्व. द्र.। '-वेग-' इति मुपा. भवति। स्वरस्त्वसौ चिन्त्यो भवति (तु. पा ६, १, २२३)।

e) मतुप्-स्वरस्य (पा ६, १, १७६) 'न गोश्वन्-' (पा ६, १, १८२) इति निषेधे स्वरेऽविशेषः।

f) कर्मण्युपपदे √वन्+कर्तर्यु इन् प्रत्ययः। कृद्-उपप्रस्व. (यक्र. पा ३, २, २७; ६, १, १९७; २, १३९)।

g) तादर्थ्ये यत्। तित्स्वरः (पा ५,४,२४; ६,१,१८५)।

h) भावे त्वः प्रत्ययस् तत्स्वरश्च (पा ५, १, ११९)।

i) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

j) अकृतसंस्कारः मुपा. भवति। 'निर्ऋतिर् म आदित् सदम्' इत्येवमनुष्टुप्पादस्य नैर्ऋतप्रकरणाऽनुकूलतया मूलतः पठितत्वेन संभाव्यमानत्वे प्रकृते कूटे 'आत्' इति च 'इद्' इति च सदम् इति च त्रीणि पदानि परस्परमन्वितानि द्र.। तु. '?अदित्' इत्यत्र च ?तरि- इत्यत्र च सद्->-दम् इत्यत्र च सस्थ. टि.।

k) उप. <√दभ् द्र.। शेषम् एपूटि. द्र.।

l) कस. (=३अ- +३*दिव्-)। सासस्व. (पा ६, १, २२३)। तृ१, पक्षेऽन्तोदात्तं सत् (पा ६,१,१६९) *अदिवा>अदिआ>अद्या इत्येवं प्राकृतायितक्रमेण प्रथमम् ५अद्य इत्यात्मतया ततश्च छन्दोऽनुरोधतः ३अद्य इत्यात्मतया पर्यवसन्नं स्यात्। (तु.टि.३–५अद्य,३*दिव्-,२*द्य-)।

m) सस्व. त्रिपूटिदि. द्र.। उप. <√२दा <√दो द्र.।

n) विशिष्ट इह ऋ. (७, ६६, १६) पाभे. द्र.।

o) '(अनृणः) आददीय' (<आ√१दा) इत्येवं शोधः द्र.। एकवच बहुवचेत्युभयथा प्रकृते स्थले स्तोतृनिगमानामुपलम्भादिहैकवद्बुपचारः। (अनृणा आददीय>) 'अनृणादीय' इत्येवं सतश्च मूको. इहापि स्तोतृनिगमे मन्त्रपूर्वार्धदिशा बहुवद्बुपचारः स्यादिति कृत्वा 'अनृणा अदीप' इत्याकारकोऽन्त्याक्षरेऽशुद्धवर्णतर्कश्च मिथ्यासन्धिविश्लेषणे भ्रान्तश्च मुपा. संभाव्येत।

p) बस. अन्तोदात्तः (पा ६, २, १७२) उप. यद्र.।

मै २,६,३; ४,३, ४; काठ १३, ६;१५,२; –हीम् काठ १३,६.

?अन(न्-अ)र्विश्[a]– -र्विशे ऋ १, १२१, ७.

अनस्-वत्[b]– -स्वन्तः ऋ १, १२६, ५; –स्वन्ता ऋ ५, २७, १.

अनस्वती[c]– -ती शौ १०, १, १५.

¶अनस्विन्[d]– -स्वी तै ५, २, २, ३; काठ १९,१२; क ३१, २.

अनस्विनी– -नी पै १६, ३६, ५.

अ(नस्>)नो-वाह्[e]– -हौ तै ५,६, २१, १; काठ ५०, १.

¶अ(नस्>)नो-वाह्य[f]– -ह्यम् तै ६, १, ९, ४; मै ३, ७, ८; काठ २४, ६; क ३७, ७.

?अनसृ(तँ>)ता[g]– -ताम् पै ८,१६,५.

अन(न्-अ)स्थ[h]– -स्थः ऋ ८, १, ३४; –स्थाः शौ ४, ३४, २; पै ६, २२, २.

¶अनस्थक[i]– -कम् मै ३, ३, ५; काठ २१, ५; क ३१, २०; –कात् मै ३, ७,५; काठ २४,५; क ३७,६; –काय काठ ४५,३$

†अन(न्-अ)स्थन्[j]– -स्था ऋ १, १६४, ४; शौ ९, १४,४; पै १६, ६६, ४.

अन(न्-अ)स्थि[k]-

अनस्थिक[l]– -काय तै ७, ५, १२, २; –केन तै ६, १, ७, १?¶.

¶अन(न्-अ)स्थिचित्[m]– -चित् मै ३, ५, १.

अ-नह्यमान– -नस्य पै १६, १२०,१.

अना इदम्- द्र.

अना(न्-आ)कृत[n]– -तः ऋ १,१४१,७.

---

[a]) सांशयिकः पद-विभागः । अनस्-+विश्- इत्येवं कास. इति PW. प्रभृ. केचित् । सा. अपि विकल्पेन व्यु. एतामनुमनुते । तथा सति 'गतिकारक-' (पा ६, २, १३९) इति स्वरेण भवितव्यं पूपप्रस्व. च न भवितव्यमिति चोद्यम् । अतः अन्+अर्विश्- इति यत् सा. पक्षान्तरं भावयति तत् स्वरतः साधीयः (=तस. नञ्-स्वरः) । उप. अपि कास. भवत्यु उपप्रस्व. । तत्र च पूप. √१ऋ+भावकर्मणोर् विच् प्र.इति संकेतितमात्रं द्र. (तु. अनस्- टि.) । अथवा बस.पूपप्रस्व. । तत्र च 'अनो विड् विश्यत इति कृत्वा निवासो यस्य'इति वा (तु.GW.) 'अनोयुक्ता विशो यस्य' इति वा (इह मध्यमपदलोपः) 'अनांसि च विशश्च यस्य' इति वा विग्रहः । अनस्> अनर् इत्यत्र तु. उपर्बुध्- (उपस्>उपर्) ।

[b]) मतुपो वत्वे भत्वम् (पा १, ४, १९) । प्रत्ययस्य च पित्त्वान्निघाते स्वरे विशेषाऽभावः ।

[c]) स्त्रियां ङीपः (पा ४,१,६) पित्त्वान्निघाते स्वरस्तदवस्थः ।

[d]) मत्वर्थे विनिः प्रत्ययस्तत्स्वरश्च (पा ५,२,१२१) ।

[e]) कर्मण्युपपदे √१वह्+अण् प्र. । कृद्-उपप्रस्व. (पा ६, २, १३९) ।

[f]) उस. 'गति-' (पा ६, २,१३९) इत्युक्त उपप्रस्व. । उप. <√१वह्+ण्यत् तित्-स्वरश्च (पा ६,१,१८५) ।

[g]) अनु√सृप्+क्तः प्र. स्त्रियां टाबन्त इह शिश्नावयिषित इति पूर्वोत्तरसापेक्षालोचनवताम् अतिरोहितमिव भवेत् । अत इह अनुसृप्ताम् इति शोधितः पा. द्र. । अनुपदं श्रूयमाणस्यांशस्य शोधार्थं यस्था. तु. टि. ?२अहन-, ?पूक्षन्-, ?पापी(यँ->)या-, ?शमिद्व(तँ>)ती- ।

[h]) बस. 'नञ्दुःसुभ्यः' (पा ५, ४, १२१) इत्यत्र अस्थि- इत्यस्य उसं. द्र. । तेन विकल्पेन समासान्तोऽच् चित्स्वरेणाऽन्तोदात्तः । स्याद्वा पक्षान्तरं (तु. नाउ. टि.) ।

[i]) उक्तसमासान्तादपि कप् उसं॰ (पा ५, ४, १५४) । कपि च परे 'ह्रस्वान्ते' (पा ६, २, १७४) इति स्वरः । ननु समासान्तात् समासान्तो मा भूदित्यु एउ. अनस्थन्- इत्यस्मादनुक्तसमासान्तात् कपि ह्रस्वान्तीय उक्तः स्वरः स्यादिति । नेति । कथमिति । 'नलोपः' (पा ८, २, २) इति स्वरविधौ नलोपस्याऽसिद्धत्ववचनाद् ह्रस्वान्तत्वाऽभावादिति दिक् । (तु. अचर्मक-, अच्छन्दुस्क- प्रभृ.) । इह च नापू. च मूलतः अस्थि- इत्यतो विवेच्यस्य *अस्थ-(यद्र.) प्राति. उपाश्रयेण वा सर्वं चतुरस्रं स्यादिति दिक् ।

[j]) पाप्र. उप. (अस्थि->अस्थन्) इत्यत्र अनङ् समासान्तः उसं. (पा ७,१,७५) तत्स्वरेण चान्तोदात्तः । मूलतः अस्थन्- इति अस्थि- इत्यतः पृथक् प्राति. (यद्र.) इति कल्पे तावद् अन्तोदात्तः (पा ६, २, १७२) इत्युक्त इति विवेकः सुलभः ।

[k]) समासान्तप्रत्ययाऽभावे विकल्पः (तु. द्विपूटि.) । अन्तोदात्तः (पा ६, २, १७२) ।

[l]) समासान्तः कप् (पा ५, ४, १५४) । यत् कपि परे ह्रस्वान्तीयः स्वरः (पा ६, २, १७४) न भवति कपिपूर्वीयः (पा ६, २, १७३) एव च स्वरो भवति, तत्र शाखाविशेषनिघ्नविशेषत्वेन समाधानमनुसंधीयेताऽन्यथा वेति विमृश्यम् ।

[m]) तस. नञ्-स्वरः (पा ६, २, २) । उप. उस. कर्मण्युपपदे √१चि+क्विप् प्र. कृद्-उपप्रस्व. च (पा ६,२, १३९) ।

[n]) सस्व. नापूटिदि. द्र. । उप.आ√कृ+कर्मणि क्तः प्र.।

अना(न्-आ-अ)क्ताक्ष[a]- -क्षः खि ५, १३, १; शौ २०, १२८, ६[b].

¶अना(न्-आ)क्रम[c]- -माय मै ४, १, १४.

†अना(न्-आ)ग,गा[d]- -गाः ऋ ७, ८७, ७; ९७, २; १०, ३६, १२; मा ३३, १७; का ३२, १, १७; तै ४, ७, १५, ७‡[e]; -गान् ऋ ३, ५४, १९; ४, १२, ४; १०, १२, ८; मै ३, १६, ५; काठ २, १५; शौ १८, १, ३६; -गाम् ऋ ८, १०१, १५.

¶अना(न्-आ)गत[f]- -तम् तै २, ५, ५, १; -ताय तै ६, २, १, १.

अना(न्-आ)गमिष्यत्[f]- -ष्यतः शौ १६, ६, १०.

१अना(न्-आ)गस्[g]- -गसः ऋ १, २४, १५; १२३, ३; २, २३, ७; ४, ५४, ३; ५, ८२, ६; ७, ६२, २; ८, [४७, १८; १०, १६४, ५]; ६७, ७; १०, ३५, ३; ३६, ९; ३७, ७; ६३, ४; खि ४, ५, ३; मा ४, १२; १२, १२†; का ४, ५, ४; १३, १, १३†; †तै १, ५, ११, ४; ४, १, ११, २; २, १, ४; मै १, २, ३; १८†; ४, १०, ३†; १४, १७[२]; †; †काठ ३, ८; १६, ८; ४०, ११; क २, १५†; कौ ३, १, ४†; जै २, ५, १२†; शौ ७, ७, १; ३५, १; ८८, ३†; ९, ५, २; १६, ६, १†; १८, ४, ६९; पै २, ३९, २; १४, ४, १७; १६, ३५, ७; -गसम् ऋ [(१, १६२, २२) ४, ३९, ३]; १०, ६३, १०; मा २१, ६†; ७; का २३, १, ६†; ७; तै १, ५, ११, ५†; मै ४, १०, १†; काठ २, ३; ७, १६†; शौ १९, ४४, ३; पै २, ३, १; १५, ३, ३; १६, ३६, ८; -†गाः ऋ ५, ८३, २; ७, ६०, १; ६६, ४; ८६, ७; मा ३३, २०; का ३२, २, ३; मै ४, १२, ४; कौ २, ७०१; जै ३, ४६, ७.

†अनागास्-त्व[h]- -त्वम् ऋ १, ९४, १५; [१६२, २२; (४, ३९, ३)]; १०, ३५, ३; मा २५, ४५; तै ४, ६, ९, ४; काठ ४६, ५; पै १२, १, १५; -त्वे ऋ १, १०४, ६; ६, ५०, २; ७, ५१, १; तै २, १, ११, ६; मै ४, १४, १४; -त्वेन ऋ १०, ३७, ९.

अना(गस्>)गो-हत्या[i]- -त्या शौ १०, १, २९; पै १६, ३७, १०.

२अना(न्-आ)गस्[j]- -गसः शौ १०, १, ७; १९, ५०, ७; -गसम् शौ २, १०, १-८; १०, १, १८; -†गाः ऋ १०, १६५, २; शौ ६, २७, २.

---

a) तस. नञ्-स्वरः (पा ६, २, २)। उप. बस. द्र.। तत्रापि पूप. <आ√अञ्ज्, उप. च २अक्ष- यद्र.।

b) अत्र -क्ता- इति पाएडु. स्वर-संकेतो दुरूहः द्र.।

c) तस. नञ्-स्वरः (पा ६, २, २)। उप. <आ √क्रम् यद्र.।

d) सस्व. एउटिदि. द्र.। उप. *आग- (<आ√हन् [<घन्>] गन्+कर्तरि डः प्र.) इति वा (=[√अङ्घ्+कर्तर्य् अच् प्र.] >अङ्घ- >*आघ-) इति वा प्राकृतिकवर्णपरिणामभाग् द्र.। व्यु. २आगस्- इत्यस्मात् प्रत्ययमात्रे भिन्नम्। यत्त्वेतद् =१आगस्- इति कृत्वाऽपरे (तु. GW. प्रभृ.) बस. इह भवतीति प्रतिपन्नास्तच्चिन्त्यम्। बस. सत्यन्तोदात्त आपद्येतेति दिक्। भूयानपि विस्तर इह नाउउ. वैश. च द्र.।

e) 'अनागान्' इति ऋ (४, १२, ४) पाभे.।

f) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

g) समास-स्वरौ नापू. द्र.। उप. २*आगस्- इत्य् असुचा प्र. निष्पन्नम्। यदपीहाऽन्ये PW प्रभृ. १आगस- इत्येतद् उप. इति कृत्वा बस. इत्याहुस्तद् द्विपूटिदि. चिन्त्यम्।

h) भावे त्वः प्र. (पा ५, १, ११९)। प्रत्यय-स्वरः। प्र१ रू. व्यवहारप्राचुर्यात् प्राति. तत्सरूपतायामिव प्रतिभातायां तत एव भावे प्र. उत्पत्तिर्जातेति सुतर्कं सच् छान्दसमिति वा प्राकृतिकमिति वोपवर्ण्यताम्।

i) षतस. सासस्व. (पा ६, १, २२३)। उप.< √हन् यद्र.।

j) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. १आगस्- इत्यत्र असुन् प्र.। यत्त्विह तस. इति MW. आह, तन्न। तथात्वे नञ्-स्वरापत्तेरिति यावत्। यदपि GW. इह आ√गा>आगा- इति कर्त्रर्थे निष्पन्नं प्राति. उप. भवतीति च नञ्पूर्वत्वे च तस. भवतीति चाह तदुभयमसत्। '-गसः' '-गसम्' इत्येतयो रू. व्याख्यानार्थमस्य यनि. प्राति. अवश्यमभ्युपेयत्वादभ्युपेते चास्मिन् '-गाः' इत्यस्य रू. अप्येतदीयत्वेन सुवचत्वे सिद्धे पराभिप्रेतस्य प्राति. अन्यथासिद्धायितमात्रत्वाच्च, यतरे कतरेऽपि च प्राति. अभ्युपगते सति गपूदि. स्वरतस् तस. अनुपपन्नत्वाच्चेति (तु. NW.)। एवं तावद् अस्य प्राति. अर्थतः गपू. अतिसूक्ष्ममिवाऽन्तरं भवति। (गपू.=आगसोऽकर्तृ- इत्य् एतच्च =आगसा रहित- इति)। अस्य चातिसूक्ष्मस्याऽर्थान्तरत्वस्य स्वरभेद एव लक्षणं भवतीति किमु वक्तव्यम्। एस्थि. अपि गपू. एव निगमसुभिन्नं भवत्यस्य तु प्राति.

¶अना(न्-आ)ग्नेय[a]– -यम् मै १, ७, ३[२]; ४[२]; काठ ९, १[२]; २[३]; १८, १९; क ८, ४[२]; ५[३]; २९, ७.

¶अना(न्-आ)च्छिन्नस्तुक[b]– -कस्य मै ३, ८, ५.

¶अना(न्-आ)च्छृण्ण[c]– -ण्णम् तै ५,१, ७, ४; कठ १९, ७; क ३०,५.

अना(न्-आ)जानत्[d]– -नन् शौ ६, ११९, ३; पै १६, ५०, ७.

¶अना(न्-आ)ज्ञात[d]– -तम् तै २, १, ६, ५[२].

¶अनाज्ञात-यक्ष्म[e]– -क्ष्मः काठ १३, ६.

¶अनाज्ञातयक्ष्म-गृहीत– -तः काठ १३, ६[२].

अना(न्-आ)तत[d]– -तम् खि ५, १५, १७; शौ २०, १३२, ७; -ताय मा १६,१४; का १७,१,१४; तै ४, ५, १, ४; मै २, ९, २; काठ १७, ११; क २७, १; पै १४, २, १२.

१अना(न्-आ)तुर,रा[f]– -†रम् ऋ १, ११४, १; ८, ४७, १०; १०, ९७, २०; मा १२, ९५; १६, ४८; का १३, ६, २२; १७, ८, २; मै २, ९, ९; काठ १७, १६; क २७, ६; पै १५, १५, २; -रस्य पै १, ९७, ३; -राः ऋ १०, ९४, ११; -०रे पै ४, २२, ६; -रेण पै २, ६१, १.

२अना(न्-आ)तुर[g]– -रम् ‡[h]तै ४, २, ६, ५; ५, १०, २; -रान् शौ १२, २, ४९.

१अना(न्-आ)त्मन्[d]– -त्मने तै ७, ५, १२, २.

२अना(न्-आ)त्मन्[i]-

अनात्मक[j]– -काय काठ ४५, ३.

†अ-नाथ[e]– -थम् ऋ १०, १०, ११; शौ १८, १, १२.

अना(न्-आ)दि(ष्ट→)ष्टा[d]– -ष्टाम् शौ १५, ६, १६.

¶अना(न्-आ)दृत्य[d] तै २, ५, ३, ५; ५, ३.

अना(न्-१आ)द्य,द्या[k]– -द्यम् तै ५,७, ९, २¶; शौ ८, २, १९; पै १६, ४, ९; -द्या शौ ५, १८, ३; पै ९, १७, १०; -द्याम् शौ ५. १८, १; पै ९, १७, १.

अना(न्-आ)धृष्[l]– -धृषः शौ ६, २१, ३.

अना(न्-आ)धृष्ट,ष्टा[d]– -०ष्ट मै १, ४, ९; -ष्टः ऋ ७,१५,१४; तै ४,४, ८, १; काठ ३९, ११; -ष्टम् ऋ ८, २२, १८; खि ४, १, १; मा १, ३१; ५, ५; ९[३]; १४, ९; का १, १०, ४; ५, २, २; ३, २[३]; १५, ३, २; तै १, २, १०, २; १२, १[२]; ४, ३, ५, १; ४, १२, २; ६, २, २, ३[२]; मै १, १, ११; २, ७; ८[३]; ४,४; ३, १६,४; ४, १४, १७; काठ १, १०; २, ८; ९[२]; ५, ६; ७, १४; २२, १४; ३२, ६; क १, १०; २, २; ३[३]; ६, ४; पै २, ३०,५; -ष्टा मा ७, १२; १७; ३७, १२; का ७, ६, २; ७, ३; ३७, २, २; मै १, ३, १२; ४,९, ३; काठ ४, ४; २७, ८; क ३, ३; -ष्टाः मा १०,४;७; का ११, २, ४; ४, ३; तै १, ८, १२, १; मै २, ६,८[२]; ४,४,२¶; काठ १५, ६[३]; पै १, ३८, ३; १६, १५१, ५; -ष्टानि ऋ १०, १३८,४; खि ५,५,२; -†ष्टाभिः ऋ ४, ३२, ५; ८, १०२, १५; कौ २, ९२२; जै ४,६,७; -ष्टाय तै १, ५, १०, १; -†ष्टासः ऋ १, १९, ४; पै ६, १७, ५.

अँनाधृष्ट-रथ[e]– -थाः खि ५,५,९.

अना(न्-आ)धृष्य पै १३, १०, १०.

अना(न्-आ)धृष्य,ष्या[k]– -ष्यः मा२७, ७; का २९,१,७; तै ४,१,७,३; मै १,९,१;५¶;२,२,१२¶;१२, ५;४,१४,१३; काठ ९, ९;१२;

ऋ. दशममण्डलमात्रे च शौ. च यस्थ. विरलमेव श्रवणं भवतीति विविचामनुसंधानाय कल्पताम् ।

a) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र. । यत्तु नानाग्नेयम्(=न । अना°)इत्यत्र सुपा.'नानाऽग्नि->नाना-ग्नेयम्' (तु. BW., SBW.) इतीव वा 'नाना । आग्नेयम्' (तु. SIM) इतीव वा पदकृत्यं प्रास्तावि, तदसत् (तु. तैब्रा १, ३, १, २; ६) ।

b) सस्व. नापू. द्र. । उप. बस. द्र. ।

c) सस्व. एपू. द्र. । उप. √छृद् + कर्मणि क्तः प्र. ।

d) तस. नञ्-स्वरः (पा ६, २, २) । उप. यद्र. ।

e) बस. पूपप्रस्व. (पा ६, २, १) । उप. यद्र. ।

f) बस. अन्तोदात्तः (पा ६, २, १७२) । उप. यद्र. ।

g) शाखभिदात् तस. नञ्-स्वरः (पा ६, २, २) । '-रम्' इति वा. क्रिवि. द्र. ।

h) 'अनातुरम्' इति ऋ (१, ११४, १) पाभे. ।

i) सस्व. द्विपूटिदि. द्र. । अयं संकेतः नापू. विवेकार्थो नाउ. स्वरसिद्धावौपयिकश्च द्र. ।

j) समासान्तः कप् प्र. (पा ५, ४,१५४) । स्वरविधौ नलोपाऽसिद्धेः (पा ८, २, २) ह्रस्वान्तीयस्वराप्रवृत्तौ कपिपूर्वीयः स्वरः (पा ६, २,१७३ उ.) तु. अनस्थक-, अनस्थिक- इत्यत्र टि. ।

k) तस.उप.कृत्यान्तत्वाद् नञ्-स्वरं बाधित्वा'कृत्योक-' (पा ६, २, १६०) इत्यन्तोदात्तः ।

l) तस.नञ्-स्वरः(पा६,२,२)। उप.आ√धृष्+क्विप्प्र.।

१८,१६; क८,१२¶;२९,४; शौ ७,८४,१; पै ३, ३३,७; –ष्यम् ऋ ४, १८, १०; मा ५, ५; का ५,२,२; तै १,२,१०,२; ६, २, २, ३[२]; मै १, २, ७; ८[३]; २, ८, २; ४, ४, १¶; काठ २, ८; ९[२]; ७, १४; १७, २; क २, २; ३[२]; ६,४; २६, १; पै १५, १, ५; –†ष्या ऋ १०, ४४, ५; शौ २०, ९४, ५; –†ष्याः ऋ १०, १०३, १३; १५४, २; मा १७, ४६; का १८, ४,१४; तै ४,६,४, ४; मै ४, ४, १; कौ २, १२१२; शौ १८, २, १६; पै १, ५६, १; –ष्याय मा ३८, ७; का ३८, २, १; मै ४, ९, ८; –ष्यौ कौ २, १२१९.

†अना(न्-आ)नत[a]– -०त ऋ ६, ४५, ९; –तः ऋ ८, ६४, ७; ९०, ४; कौ १, १४२; जै १, १५, ८; –तम् ऋ [७, ६, ४; १०, ७४, ५]; –तस्य ऋ ८, ६८, ४; कौ १, ३६४; जै १, ३८, ३; –ताः ऋ १, ८७, १.

¶*अना(न्-आ)नीत[b]– -ताः काठ ८, ११[२]; क ७, ८[२].

अना(न्-आ)नुजा[c]– -जाम् तै ४, ३, ११, ३[d]; काठ ३९, १०.

†अना(न्-*आ)नुद्[e]– -दः ऋ १, ५३, ८; २, २१, ४; २३, ११; शौ २०, २१, ८; –दम् ऋ १०, ३८, ५.

†अनानुदिष्ट(?<ष्ट)[f]– -ष्ट(?<ष्ट): ऋ १०, १६०, ४; शौ २०, ९६, ४.

अना(न्-*आ)नुभूति[g]– -तीः ऋ ६, ४७, १७.

अना(न्-आ)पि[h]– -पिः ऋ [(१, १०२, ८) ८, २१, १३; (१०, १३३,

[a]) तस. नञ्-स्वरः (६. २, २)। उप. आ √नम्+क्तः।

[b]) सस्व. नापू. द्र.। उप. आ√नी+क्तः।

[c]) सस्व. एपू. द्र.। उप. <अनु-जा- (<२अनु √जन्) यद्र.।

[d]) सा. पुं. यजमानपरतयाऽन्वयमिच्छति। तथा सति प्राकरणिकानामनेकेषां पदानामर्थानामपार्थं क्लिष्टकल्पनमिव द्र.) तु.सस्थ.टि.२अनु √जन् >अनु-जा-> -जाम्, √वद् >वदत्-> -न्ती-)।

[e]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. आ √नुद्+(इगुपधलक्षणः) कः प्र. (पा ३,१,१३५)। पपा. तु अनु-दु- इत्याकारको भवति। ततः अनु-दु- (<२अनु √१दा) इत्य् उप. भवतीति कृत्वाऽन्यैरेतत् प्राति. व्याख्यायि (वेतु. सा.ऋ १,५३,८ यत्र तेन उप. <आनु (<अनु) √२दा(<दो) इत्यास्थायि)। यदत्र यनि. उप. भवति तत्र ऋ १०, ३८,५ इत्यत्र स्व-वृज्- इत्यत्रत्यस्य स्वेति विशेषणस्य च रध्र-चोदन- इत्यत्रत्यस्य नोदनपर्यायभूतक्रियार्थवचनस्य च साहचर्यं ज्ञापकं भवेद् यथा स्तूयमान इन्द्र आनुदाऽन्तररहितः स्वत एव दुष्टदमने च दानाभिमुखतया धनवत्-प्रेरणे च प्रवृत्तो भवतीति यावत्। अन्यच्च। यदपि GW. MW. चेह तस. इतीव पश्यन्तौ व्याचक्रतुस्तदपि भ्रान्तमिव भवति। तथा सति नञ्-स्वरः स्यान्नान्तोदात्त इति। एस्थि. यत् पपा. अनुसारिभिः प्राक्तनैरभियुक्तैर् उप. सांहितिको दीर्घ इवाऽऽस्थायि तत् सारतो विमृश्यम्।

[f]) आतिशायनिक इष्ठन् प्र.। नित्स्वरः (पा ६,१,१९७) (तु. चोदिष्ठ- प्रमृ.)। यमु. प्राति. ष्ठ>ष्ट इत्यतिप्राचीनो विकारः संभाव्येत। अत्र 'अनु-दिष्ट-' इति पपा. तदनु २अनु √दिशेः क्तान्तं कृतसांहितिकदीर्घप्रथमाऽच्कम् उप. इत्येवं च (तु. नापूटि.) प्रागभ्यर्हितानां व्याख्यानं द्र.। एस्थि. अपि नापूदि. सर्वेषु वीर्योपलक्षितेषु कर्मसु परप्रेरणां प्रत्यसहिष्णुरिन्द्रो ब्रह्मद्विड्घननेऽतितमामिव तथा भवतीति प्राकरणिकस्वारस्यसंवादनसहचरीवोक्तपूर्वाऽऽतिशायनिकी संभावनाऽनुसंधीयतां विविग्भिः।

[g]) तस. नञ्-स्वरः (पा ६,२,२)। उप. (आ[=आप्त-] *अनु-भूतिम् इति कृत्वा) *आऽनुभूति- इति प्रास.(तु.पावा २, २, १८)। यद्वा (आ[=आप्ता] *अनु-भूतिरासामिति कृत्वा) *आऽनुभूति- इति बस. (तु. पावा २, २,२४)। उभयथाप्य् अननुभूतपूर्वाः शरदः इत्यर्थतोऽभिसंबन्धः समानः। यावता पूर्वीरनुभूतपूर्वाः शरदोऽवधून्वान इन्द्रोऽननुभूतपूर्वा अपि तास्तर्त्तरीति, अतः स पूर्वाणि सख्यानि परिवृज्याऽपराण्यभ्येतीति यत् पूर्वार्धे श्रुत्यभिप्रेतं भवति तत् सत्यमिति निदर्शनालङ्कारः (तु.नाउ. अप्य् अपरस्यै व्यु.)। अत्र अनु-भूति- इति पपा. तदनुवर्त्तिनी चोभयी प्रागर्वाचामभिप्रवृत्तिर् द्र.। तद् यथा। बस. (=अनुभूतिरहिताः [प्रजाः]) इति सा.। उक्तः बस. वा तस. वेति विकल्पिनोऽर्वाञ्चश्च (GW. MW. NW.)। उभयत्र २अनु°>आनु° इति दीर्घापत्तेश्च सांहितिकं निपातनं द्र.। यथा चैवमन्यतरतोऽपि साध्वन्वयाभावो भवतीत्यत्र भूयः वैश. अनुसंधेयम्।

[h]) बस. भवति नञ्-पूर्व इति प्रागर्वागभ्यर्हिता आहुः। तत् कथं नान्तोदात्तः (पा ६, २, १७२) इति चोद्यम्। तत् साध्यं कथमिति। तस. भवतु न बस. इति। तेन तावत् सौवरी चातुरस्री कामं निष्पद्यताम् (पा ६, २, २) न

२)]; १०, ३९, ६; कौ १, ३९९; २, ७३९; जै १, ४५,१; शौ २०, ११४, १.

अना(न्-आ)प्त,प्ता[a]– -प्तः ऋ १, १००,२; तै ७,१,१०,३¶; काठ ८, ७¶; क ७, ४¶; –¶प्तम् तै २,५,११,४; ५, १, ९, १[२]; ६, १,२,७[३]; मै १, ४, ११; ५, ७[२]; ११, ९; २, २, १२; ५, २; काठ १०,८; –¶प्तस्य तै ७, १,५,६; –प्ता काठ ३८, १४; –प्ताः शौ ४,७,७; ५, ६, २; पै ६, ११, २; –प्ताम् तै ७, ४, ५, ३¶; –प्तेन मै ४, २, ११.

अना(न्-आ)प्य[b]– -प्यम् ऋ ७,६६,११.

अँना(न्-आ)बयु[c]– -ॖयो शौ ६,१६,१.

†अँना(न्-आ)भयिन्[d]– -ॖयिन् ऋ ८, २, १; कौ १, १२४; २,८४; जै १, १३, १०; ३, ८, १०.

अँना(न्-आ)भव[e]– -ॖव काठ ६, ७; क ४, ६.

¶अ-नाभि– -भिम् काठ २०, ७; क ३१, ९.

अँना(न्-आ)भु[a]– -ॖभो मै १, ८, ५.

अना(न्-आ)भू[a]– -भुवः ऋ १, ५१, ९.

अ-नामग[f]– -गः शौ १९, ४५, २.

अनामन्[g]– -नात् शौ १२, ४, ५; ८.

१अँना(न्-आ)मय[a]– -?[h]यः पै १६, ५, ७.

२अना(न्-आ)मय[i]– -या खि ५, १५, ५?[j]; शौ २०, १२९, २०; –याः शौ ९, १३, १३–१८; पै १६, ७५, ३–८.

अना(न्-आ)मयत्[k]– -यत् मा १८, ६; का १९, ४, २; तै ४, ७, ३, २; मै २, ११, ३; काठ १८, ९; क २८, ९; पै १०, १२, १.

†अना(न्-आ)मयित्नु[l]– -त्नुभ्याम् ऋ १०, १३७, ७; शौ ४, १३, ७; पै ५, १८, ८.

†अ-नामिन्[m]– -मि ऋ ३, ६२, ५; ६, ८, ६; तै १, ५, ११, २; मै ४, ११, १; काठ ४, १६.

अना(न्-आ)मृण[n]– -णः ऋ १, ३३, १.

¶अना(न्-आ)मृत[o]– -तम् तै ५, २, ३, १; काठ ७, १२[२]; २०, १; २२, ६[२]; क ६, २[२]; ३१, ३; ३४, १[२]; –ते तै ५, २, ३, २; काठ २०, १; क ३१, ३.

अना(न्-आ)यत[p]– -तः ऋ [४, १३, ५; १४, ५.]

---

त्वाऽऽर्थीति (आपि-रहिते वृत्तेर्नाऽऽपि-भिन्न इत्यभिसन्धेः)। उच्यते । इह उप. बस. भवत्विति । सोऽपि कल्पना-मूलत्वाद् विकल्पितविग्रहः द्र. । तद् यथा । नञ् उत्तरस्य (सह्>)*साऽऽपि- इति मूलतः सतो नैरुक्तिकः सकारलोपो नकारोपजनश्च स्यातामिति प्रथमः कल्पः (तु. अगोपा-) । 'आ(ऽऽप्ताः) आपयोऽनेनाऽनया वा' इति माध्यमिकधातु-जलोपे सत्य् अँाऽऽपि- इत्य् उप. इति द्वितीयः कल्पः (पावा २,२,२४) । 'अन्-(आप्ताः) आपयोऽनेनाऽनया वा' इति नञ्मात्रातिरिक्तस्य धातुजांऽशस्य पूप. लोपे सति बस. पूपप्रस्व. इति कृत्वा नञ्मात्रस्य पूप. स्वरः प्रकृत्येति च तृतीयः कल्प इति दिक् (चरमश्चायं प्रकारः नापू. अपि द्र.)।

a) तस. नञ्-स्वरः (पा ६, २,२) । उप. यद्र. ।

b) तस. नञ्-स्वरं बाधित्वा 'कृत्य-' (पा ६,२,१६०) इत्यन्तोदात्तः । उप. यद्र. ।

c) आबयुँः सन्नेव तदुग्रत्वशमनायेव नञ्-पूर्वत्वेन श्राव्येत । उप. आबयु- यद्र. । सस्व. एपूटि. द्र. ।

d) तस. नञ्-स्वरः । उप. आ√भी + कर्तर्यु इनिः प्र. (तु. पा ३, २, १५७) इति वा अँा-भय-(प्रास.) + मत्वर्थे इनिः प्र. (पा ५,२,११५) इति वा ।

e) सस्व. नापूटि.द्र. । उप. आ-भवँ-(आ√भू+अच् प्र.) । एस्थि. माध्यमिकरेफोपजनः मुपा. चिन्त्यः ।

f) सस्व. नापूटि. द्र. । उप. ?*नाम-ग- (नाम्ना गच्छति नाम-भृदित्यर्थः) इति तत्त्वतः पर्येष्टव्यम् । कथमिति । मूको. पा. बहुविकृततत्वेनोपलम्भात् (तु. पाराडु.)। यत्तु सा. अ-नामक- इति बस. अत्र पठित्वेव व्याचष्टे, तदसत् । तथा सति कपिपूर्वीयःस्वरःस्यात्(पा६,२,१७३)। 'माम् अगतस्य' इति पैं. (तु. W.) यच्छ्रूयते तेनापि सुगमो निर्वाह इति (कल्पनान्तरकृते तु. W. WR. च) ।

g) पपा. अवग्रहो न भवति । व्यु. ? । ६अ+(भावार्थे) आ-मन्-(<आ√मन्) इति बस. अन्तोदात्तः (पा ६, २, १७२) इतीव W. द्र. । ६अ+आमन- (<√२अम् >आमि+भावे ल्युट्) इतीव च LUD. द्र. ।

h) अयं मुपा.'अनामयत्' इति मूको.स्थाने संस्कारमा-न्याद् धृतः।'-यम्'इत्य् अस.द्वि१ सत् क्रिवि.इत्येव सुपठम्।

i) बस. अन्तोदात्तः (पा ६, २, १७२) । उप. यद्र. ।

j) 'अनामया' इति मुपा. स्वरश्चिन्त्यः ।

k) तस. नञ्-स्वरः (पा ६, २, २) । उप. √२अम् >आमि + शतृ-प्र. ।

l) तस. उप. <√२अम् >आमि + इत्नुच्-प्रत्यये णेर् अय्-आदेशे (तु.पाउ ३,२९; पा ६,४,५५) नञ्-स्वरापवादः 'कृत्योक-' (पा ६,२,१६०) इत्यन्तोदात्तः उसं.।

m) सस्व. एपू. द्र.। उप.√नम्+ताच्छीलिकः णिनिः।

n) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. आ √मृण् + कः (पा ३, १, १३५)।

o) तस. नञ्-स्वरः । उप. आ√मृ+क्तः प्र. ।

p) उप. आ√१यम्+क्तः प्र. । शेषं नापू. द्र. ।

¶अना(न्-आ)यतन्,ना[a]– -नः मै ३, ४, १०; ४, ७, ६; काठ १०, ३; २६, ३; २८, ३; ३०, ७; ३४, ९; ३५, १८; क ४१, १; ४४, ३; ४८, १६; $शौ ११, ३, ४९; $पै १६, ५८, ४; ५; –नम् मै ३, ४, १०; ४, ७, ६; काठ २१, ८; २६, ३; क ४१, १; –नाः तै ३, १, ९, २; ३; ७, १, ५, ४; मै ३, ८, १; १०, ५[२]; काठ २४, १०; २९, १[२]; क ३८, ३; ४५, २[२]; –नानि काठ १२, ५; –ने मै १, ६, ११; ३, १, ४; ४, ४; ७, ७; ४, ५, २; ८, ५; काठ ३५, १८; क ४८, १६.

अना(न्-आ)युध[a]– -धासः ऋ ४, ५, १४; ८, ९६, ९.

¶अना(न्-आ)रब्ध[b]– -ब्धः तै ६, ४, २, १.

¶अना(न्-आ)रभ्य[b] तै १, ६, ८, १; काठ ३२, ७; ३६, ११.

अना(न्-आ)रम्भण[a]– -¶णः तै २, ६, ५, ६; –णम् काठ २१, ८¶; –†णे ऋ १, ११६, ५; [१८२, ६; ७, १०४, ३]; खि १, २, १; शौ ८, ४, ३; पै १६, ९, ३.

अना(न्-आ)रुद्ध– -द्धः पै १६, ७२, ६.

¶अना(न्-आ)र्त,र्ता[b]– -र्तः तै ३, ४, ३, ६; काठ १२, १०; –र्तम् पै ९, २२, २४; –र्ताः तै ७, ५, १, ३; –र्ताम् काठ ३५, १९; क ४८, १७; –र्तेन मै २, ४, १.

¶अना(न्-आ)र्त्ति[b]– -र्त्यै तै २, ६, ९, ३; ८; ३, १, ७, १; २, ४, २[२]; ५; ७, ४, २, ४.

¶अना(न्-आ)र्त्विजीन[c]– -नः काठ १३, ४.

अना(न्-आर्य→)र्या– -र्यां पै २, ३१, २.

अना(न्-आ)र्षेय[b]– -याणाम् शौ ११, १, ३३; पै १६, ९२, ३; –याय मै ४, ८, ३¶.

१अना(न्-आ)ल(<र)ब्ध[d]-

¶अनालब्धा(ब्ध-अ)यता[e]– -ता काठ २४, ३[f]; क ३७, ४.

२¶अना(न्-आ)लब्ध[g]– -ब्धम् तै ६, ३, ५, २.

¶अना(न्-आ)लभ्य[h] मै १, ४, १०; ४, १, ४[२]; ५, ६; काठ ३१, ३; क ४२, ६; ४७, ३.

अना(न्-आ)लम्बु(क→)का[i]– -का काठ ३५, १८; क ४८, १६.

¶अना(न्-आ)लेश[a]– -शे तै ५, १, ५, ५.

अना(न्-आ)वयस्[j]– -याः शौ ७, ६५, ३.

†अना(न्-आ)वि(द्ध→)द्धा[b]– -द्धया ऋ ६, ७५, १; मा २९, ३८; का ३१, २, २; तै ४, ६, ६, १; मै ३, १६, ३; काठ ४६, १; पै १५, १०, १.

अना(न्-आ)व्या(ध→)धा[k]– -धाम् शौ १४, १, ६४.

अना(न्-आ)वृत्[b]– -वृत् ऋ १०, ९५, १४.

अना(न्-आ)वृ(त्त>)त्ता[b]– -त्ताम् शौ १५, ६, १९.

१¶अना(न्-आ)व्रस्क[l]– -स्काय तै ३, १, ५, १; ६, १, १०, ३; ३, ८, ३.

२अना(न्-आ)व्रस्क[m]- -स्कः शौ १२, ४, ४७.

†अना(न्-आ)शस्त[a]– -स्ताः ऋ [१, २९, १; २, ४१, १६]; शौ २०, ७४, १.

*अना(न्-आ)शिस्[a]–

a) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र.।

b) तस. नञ्-स्वरः (पा ६,२,२)। उप. यद्र.।

c) तस. उप. ऋत्विज्-+तादर्हिकः खञ् प्र. (पा ५, १, ७१)।

d) अर्थपार्थक्यनिदानोऽयं नाउ. पृथङ् निर्देशः द्र.। तच्चाऽर्थपार्थक्यं किञ्चिदानमित्येतद् १आ.√लभ् इत्यत्रा-ऽनुसंधीयताम्।

e) कस. पूप. च उप. चोभे तस. नञ्-पूर्वौ भवतः (=अना[र→]लब्धा चासाव् अयता चेति तु. तै ६, १, ७, ५ यत्रात्रत्यस्य पूप. स्थाने 'अबद्धा' इत्येतद् 'अयता' इत्येतच् च पृथक् द्वे पदे भवतः)।

f) मूको. 'अनालबा' इति पूप. भवति। ततः 'अना-ऽऽलम्भा' इत्यस्य मूलतः बस. सतः संकेतोऽपि सुग्रहः तथा सत्यपि यनि. कस. अव्यभिचरितः।

g) तस. नञ्-स्वरः (पा ६, २, २)। उप. <२आ √लभ् यद्र.।

h) नापूटि.सस्व.द्र.। उप.१आ.√लभ्+क्त्वा>ल्यप्।

i) उप. <१आ.√(र>)ल(म्भ्>)म्ब् यद्र.। शेषम् अनपरोधुक- इत्रत्ये टि. द्र.।

j) सस्व. द्विपूटि. द्र.। उप. आ-वयस्- यद्र.। यत्तु WI. आकारान्तं प्राति. निरदेशि तदप्रमाणम्।

k) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. आ √व्यध्+भावे घञ् प्र.।

l) तस. नञ्-स्वरः (पा ६, २,२)। उप. आ.√व्रश्च्+ भावे घञ् प्र. कुत्वञ्च (पा ७,३,५२)।

m) सस्व. एपूटि. द्र.। उप. नापूटि. द्र.।

¶अना(न्-आ)शीर्क[a]- -र्केण तै १, ६, १०, ४.

अना(न्-आ)शीर्दा[b]- -र्दाम् ऋ १०, २७, १.

†अना(न्-आ)शु[c]- -शवः ऋ १, १३५, ९; ८, १, १४; शौ २०, ११६, २; -शुः खि ५, १३, ६; शौ २०, १२८, १०§; -शुना ऋ ६, ४५, २; -शोः ऋ १०, ३९, ३.

¶अना(न्-आ)शुमवत्[b]- -वन्ति काठ २३, ३[2].

¶अना(न्-आ)श्वस्[d]- -श्वान् तै १, ६, ७, ३; ४[2].

अ-नाष्ट्र- -ष्ट्रः पै १०, २, ५; -ष्ट्राम् पै ५, २८, २.

अना(न्-आ)स्[e]- -नासः ऋ ५, २९, १०.

अ-नासिक[f]- -काय तै ७, ५, १२, १; काठ ४५, ३.

¶अना(न्-आ)स्क(न्न→)न्ना- -न्ना काठ १२, १३.

?अनास्त[g] पै ७, ८, ९.

अना(न्-आ)स्थान[f]- -ने ऋ १, ११६, ५.

अना(न्-आ)स्माक[h]- -कः शौ १९, ५७, ५; -कम् शौ १९, ५७, ४.

?अनास्य[i]- -०स्यौ क २, १.

अना(न्-आ)स्राव[f]- -वम् शौ २, ३, २; पै १, ८, २.

अँना(न्-आ)हत[b]- -तः पै २, ३१, ४.

अनाहत-शी(र्षन्)र्ष्णी[j]- -र्ष्णी तै ३, २, ५, १.

¶अना(न्-आ)हित[b]- -तः मै १, ६, ४.

¶अँनाहिता(त-अ)ग्नि[k]- -ग्निः काठ ६, ७; ८, ११; क ४, ६; ७, ८; -ग्नेः काठ ९, १५.

अँना(न्-आ)हुत[b]- -तम् पै ६, १४, १.

¶अना(न्-आ)हुति[b]- -तिः तै ५, ४, ३, २; -तिम् ऋ १०, ३७, ४; ६३, १२.

¶अ-निखात,ता[b]- -तः काठ ३७, १६; -ता मै ३, ८, ९.

अनितभा[l]- -भा ऋ ५, ५३, ९.

¶अ-निधाय[m] मै १, ६, ६.

†अनि(न्-इ)ध्म, ध्मा[f]- -ध्मः ऋ २, ३५, ४; १०, ३०, ४; तै २, ५, १२, २; शौ १४, १, ३७; -ध्माम्? मै ४, १२, ४‡[n].

अनि(न्-इ)न[o]- -नस्य ऋ १, १५०, २.

---

a) बस. समासान्तः कप् (पा ५, ४, १५४)। 'कपि पूर्वम्' (पा ६, २, १७३) इत्युक्तः स्वरः। अयस्मयादित्वञ्च उसं.। तेन पदत्वाद्रुत्वं भत्वाद्विसर्जनीयाभावश्च (पावा १, ४, २०)। यत्तु भा. 'नञ्सुभ्याम्' (पा ६, २, १७२) इत्यन्तोदात्तत्वमाह तद् भ्रान्तमिव स्यात्।

b) तस. नञ्-स्वरः (पा ६,२,२)। उप. यद्र.।

c) चार्वादित्वम् उसं. तेन तस. नञ्-स्वरापवादोऽन्तोदात्तो भवति (पा ६, २, १६०)। उप. यद्र.।

d) तस. नञ्-स्वरः। उप. √२अश्+क्वसुः प्रत्ययः (पा ३, २, १०९)।

e) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. नास्- इति GRI.। आस्- (<>आस्य-) इत्यन्ये। 'मृध्रवाचः' इत्यनुपदश्रूयमाणविशेषणान्तरापेक्षयोत्तरो बहुसंमतः कल्प एव साधीयानिति मतं भवति।

f) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र.।

g) असंस्कृत एव मुपा. भवति नितरां दुष्पठः। अना(न्-आ)स्त->-स्तम् ('यज्ञम्') इति शोधः संबन्धश्च द्र.।

h) तस. नञ्-स्वरे प्राप्ते चार्वादिष्व् उसं. अन्तोदात्तः (पा ६,२,२;१६०)। उप. (अस्मद्>) अस्माक-+अण् (पा ४, ३, २)। यद्वा अस्माक- (यद्र.) इत्यतः प्रातिभावेऽणि प्र. उप. निष्पन्ने सति बस. अन्तोदात्तः (पा ६, २, १७२) इत्येवं सुवचतरं द्र.।

i) वास्तविकः पाभे. वा अनश्रु- इत्यत्र गपू. (यद्र.) प्रामादिकविकारमात्रं वेति विमृश्यताम् (तु. संटि.)। प्रथमे कल्पे अ-नास्य- इत्येवं पदविभागः स्याद् अन्-आस्य- इत्येवं वेत्यपरो गवेषणार्हो विषयः।

j) बस. पूपप्रस्व. (पा ६,२,१)। उप. शीर्षन्-+ङीप् प्र.उपधालोपश्च (पा ४, १,२८; ६,४,१३४)।

k) बस. पूपप्रस्व. (पा ६, २, १)। अन्-आहिताग्नि- इत्येवं तस. नञ्-स्वरे (पा ६, २,२) स्वरतः समाने संभवत्यपि यदसौ नोररीकृतस् तत्र नञः क्रियार्थरूपगुणप्रतिषेधे वर्तमानाया मुख्याया वृत्तेः क्रियावतः पदावयवस्याऽऽहितेत्यस्य समासान्तरोपसर्जनीभावे सति बाधो मा भूदित्येतद् बीजं द्र.। अर्थनित्यत्वेन परीक्ष्यत्वाल् लक्ष्यलक्षणानामित्यभिसन्धेः।

l) वैसं. इतीवाऽनवग्रहः पपा. भवति। तस. नञ्स्वरः (पा ६, २, २)। उप. *इत-भा- (बस.) इति पदविभाग-कल्पना व्यु. निमित्तमात्रतया गृह्येत।

m) तस. नञ्स्वरः। उप. नि√धा+क्त्वा>ल्यप्।

n) '-ध्मः' इत्यस्य स्थानेऽपपाठः स्यात् (तु. नापू. रू. ऋ [२,३५,४] स्थलम्)। अस्मे इति पपा. (तु. संटि.) यः पाभे. भवति सोऽपि दुष्पठः द्र.।

o) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

अ-निन्दा[a]— -न्दाः शौ ११, १०,२२; पै १६, ८७, २.
अ-निन्द्य[b]— -न्द्यः ऋ ९, ८२, ४; —०न्द्या ऋ १, १८०, ७.
अनि(न्-इ)न्द्र, न्द्रा[c]— -न्द्रम् ऋ ७, १८, १६; —न्द्राः ऋ १, १३३, १; ५, २, ३; १०, ४८, ७; —न्द्रान् ऋ १०, २७, ६; —न्द्राम् ऋ ४, २३, ७.
अनि(न्-इ)न्द्रियं[d]- -याः पै १६,७६,९.
†१अ-निपद्यमान[a]— -नम् ऋ [१, १६४,३१; १०, १७७, ३]; मा ३७,१७; का ३७,३,४; मै ४, ९, ६; पै १६, ६८, १०.
२?अ-निपद्यमान[e]— -‡नम् शौ ९, १५, ११.
अ-निबद्ध[a]— -द्धः ऋ [४, १३, ५; १४, ५].
अ-निबाध[f]— -धः ऋ ३, १,११;[५, ४२, १७; ४३, १३].
अ-निभृष्ट,ष्टा[g]— -ष्टः ऋ १०, ११६, ६; शौ १९, ६०, २; —ष्टम् मा १०,६; का ११, ४,२; तै १, ८, १२,१; मै २, ६,८;४,४,२[2];¶; काठ १५, ६; —ष्टाः तै १, ८, १२, १.
अनिभृष्ट-तविषि[h]— -षिः ऋ २, २५, ४; ५, ७, ७.
अनिभृष्ट-तेजस्— -जाः काठ १८, १६; क २९, ४.
†अ-निमान[i]— -नः ऋ १, २७, ११; ६, २२, ७; कौ २, १०१४; जै ४, ९, ५; शौ २०, ३६, ७.
अ-निमिष्[a]— -मिषा[j] ऋ ३, ५९, १; ७, ६०, ७; तै ३, ४, ११, ५[k]; काठ २३, १२; ३५, १९; क ४८, १७.
१अ-निमिष[l]— -षम्[m] ऋ ५, १९, २; ७, ६१, ३.
†२अ-निमिष[c]— -षः ऋ १०,१०३, १; मा १७, ३३; का १८, ४, १; तै ४; ६, ४, १; मै २, १०, ४; काठ १८, ५; क २८, ५; कौ २, ११९९; शौ १९, १३, २; पै ७, ४, २; —षम्[n] ऋ १, २४, ६; —षाः ऋ २, २७, ९; —षेण ऋ १०, १०३, २; मा १७,३४; का १८, ४, २; तै ४. ६, ४, १; मै २, १०, ४; काठ १८,५; क २८, ५; कौ २, १२००; शौ १९, १३, ३; पै ७, ४, ३.
अ-निमिषत्[a]— -षद्भिः ऋ [१, १४३, ८; (६, ८, ७)]; —षन्तः ऋ १०, ६३, ४.
†अ-निमेष[a]— -षम्[n] ऋ १,३१,१२; १६४, २१; मा ३४, १३; का ३३, १, ७; शौ ९, ९, २२; पै १६, ६७, १२.
१अनि(न्-इ)र[o]— -रेण ऋ ४, ५, १४.
२अनि(न्-इ)रा[p]— -राः ऋ ८, ४८, ११; मा ११, ४७; का १२, ४, ११; मै २, ७, ५; काठ १६, ४; —०म् ऋ ७, ७१, २; ८, ६०, २०; १०, ३७, ४; खि ५, २१, ३; मा १२, १०५; का १३, ७,

a) तस. नञ्-स्वरः (पा ६,२, २)। उप. यद्र.।
b) तस. उप. ण्यदन्ते कृति 'कृत्योक-' (पा ६, २, १६०) इत्यन्तोदात्तः।
c) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र.।
d) बस.। निरिन्द्रिय- इति पाभे. (शौ ९,२, १०)। स चापि समानाऽर्थः बस. यद्र.।
e) नापू. स्थाने स्वरतोऽपपाठो वा स्यात् पाभे. वा (तु. ऋ १, १६४, ११)। उत्तरे कल्पे <आ नि√पद् इतीयं मौलिकी स्थितिः स्यात्। ततः प्रथमाज्झस्वत्वनिर्देशः प्राकृतिको वा स्याद्वास्तविकः प्रामादिको वा स्याद् मूको. एव विद्यमानः। उभयथाऽप्य् उपप्रस्व. गतिद्वयात्मकं पूप. उपकल्पयेदित्यव्यभिचरितं द्र.। एवं तावद् वस्तुतोऽर्थभेदवती श्रुतिद्वयीति संभाव्येत विस्तरतः वैश. चानुसंधीयेत।
f) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. नि √बाध्+भावे घञ् प्र.।
g) तस. नञ्-स्वरः। उप. नि√भ्रस्ज्+क्तः यद्र.।
h) बस. पूपप्रस्व. (पा ६,२,१)। तुटि. अनाहिताग्नि-यत्रत्या दि. तस. नेह लब्धादरः। उप. यद्र.।
i) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. नि √१मा+ल्युट् प्र.।
j) तृ१ सत् प्रयोगतः क्रिवि. द्र.। एतद् <१अ-निमिष- (=नाउ) इति PW. विमृश्यः (तु. NW.; वैतु. GW. MW.)।
k) उप. कर्तरि कः प्र. इति तृ१=द्वि३ इति च कृत्वा देव- पर्यायत्वेन यद् भा. विकल्पेन व्याचष्टे तत् क्लिष्टकल्पनाऽव्यभिचरितं द्र.।
l) तस. नञ्-स्वरः। उप. नि√मिष्+भावे कः प्र.।
m) एतद् रू. <नापू. इति प्रतिपन्नौ GW. MW. च चिन्त्यौ द्र.। प्रयोगत एतत् क्रिवि. भवतीत्यभ्युपगमसामान्ये सति नापू. न. द्वि१ अनिमिड् इत्याकारकं स्यान्न यनि. इत्यनुपपत्तिदर्शनादिति दिक्।
n) द्वि१ सत् प्रयोगतः क्रिवि. द्र.।
o) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. <इरा- यद्र.।
p) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

४; तै ४, २, ७, २; मै २, ७, १४; काठ १६, १४; क २५, ५; शौ २०, १३५, १३.

अ-निरा(र-आ)हित[a]– -तः शौ १२, २, ३५; ३६.

¶अ-निरुक्त,क्ता[b]– -क्तः तै ७, ४, २, ३; मै १, १०, ५; ११, ९[2]; ३, ६, ५; काठ १२, ९; १४, १०[2]; २०, ५; २४, ८; २६, १; २८, १०; ३३, ४; ३५, २०; क ३१, ७; ३८, १; ४०, ४; ४५, १; ४८, १८; –क्तम् तै ६, २, ७, ३; मै ३, २, ५; ४, ६; ८, ९; ४, ८, ६; काठ ६, ५; ९, १५[2]; १६; २९, ४; ३२, १[2]; क ४, ४; ४५, ५; –क्तया मै ३, ६, ५; ४, ८, ६; –क्ता काठ १२, ९; –क्ताः मै ३, ४, ६; ८, १०[2]; काठ १४, १०[2]; –क्तानि काठ २१, २[2]; क ३१, १७[2]; –क्ताम् तै २, ५, ७, ३; काठ ३६, १३.

?अ-निरुक्तसामन्[c]– -मा काठ १४, १०.

¶अ-निर्ऋतिगृहीत[d]– -तम् मै ४, ३, १.

¶अ-निर्घात[b]– -ताय तै ३, १, ८, ३; २, ४, २; मै ४, ४, ४.

¶अ-निर्दाह[e]– -हाय तै २, ३, ६, २; ७, ४; मै २, ३, ७; ३, ३, ३; ४, १, ९; काठ १२, ५; ३१, ७; क ३०, २; ३; ३१, ७; १८.

अ-निर्दाहुक[f]– -कः मै १, ४, ८; काठ ३२, ४.

¶अ-निर्दिष्टभाग[g]– -गः तै २, २, ४, ६.

¶अ-निर्मार्ग[h]– -र्गाय मै १, ८, ५; २, ३, १[2]; ४, ३, ६[2]; ४, १; काठ १२, ५; ८; १३; २४, १०; क ३७, ७[i]; ३८, ३.

¶अ-निर्याच्य[b] तै ५, २, ३, १; मै ३, १, ३; २, ३; काठ २०, १; ३०, ९; क ३१, ३.

¶अ-निर्वाह[j]– -हाय मै ४, ८, ५.

¶अ-निर्वीर्य[k]– -र्यः काठ २८, ८.

१अनिल- २अनिल- √१अन् द्र.

अ-निविशमा(न→)ना[b]– -नाः ऋ ७, ४९, १.

†अ-निवेश(न→)ना[l]– -नानाम् ऋ १, ३२, १०; पै १३, ६, १०.

अँ-निवीर्य[m]– -र्यः काठ २७, ९.

अ-निवृत[b]– -तः ऋ ३, २९, ६.

अ-निशित,ता[n]– -तः मा १, २९; का १, १०, १; काठ ३१, १४; –तम् ऋ २, ३८, ८; ९, ९६, २[o]; तै ४, ७, १५, ४[p]; –ता मा १, २९; का १, १०, १; –ताः मै ४, १, १२[2]; काठ १, १०; ३१, ९[2]; क १, १०; ४७, ९[2]; ¶.

†अनिशित-स(र्ग→)र्गा[q]– -र्गाः ऋ १०, ८९, ४; कौ १, ३३९; जै १, ३५, ८.

अ-निःशस्त[r]– -स्ताः ऋ ४, ३४, ११[s].

---

a) नाउटि.सस्व.द्र.। उप.<निर्-आ √धा यद्र. ।

b) तस. नञ्-स्वरः (पा ६, २, २) । उप. यद्र. ।

c) यनि. तस. नञ्-स्वरः (पा ६, २, २) । वस्तुतस्तु सुपा. चिन्त्यो भवति । निरुक्त-सामन्-(यद्र.)इत्यस्याऽनञः प्राति. एव प्राकरणिकत्वात् (तु. मै १, ११, ९) ।

d) सस्व. एपूटि. द्र. । उप. निर्ऋति-गृहीत- इति तृतस. द्र. ।

e) उप. <निर् √दह् यद्र. । शेषम् द्विपूटि. द्र. ।

f) तस. कृत्योकीयस्वराभाव-कृते अ-क्षोधुक- टि. द्र.।

g) तस. नञ्-स्वरः (पा ६, २, २) । उप. निर्दिष्ट-भाग- इति बस. यद्र. ।

h) सस्व. नापूटि. द्र.। उप.निर् √मृज्+भावे घञ् प्र.।

i) काठ. समानप्रकरणे अनुद्दाह- इति श्रूयमाणं यद्र. (तु. संटि.) ।

j) उप. निर् √वह्+घञ् प्र. । शेषं द्विपूटि. द्र. ।

k) सस्व. एउटि. द्र. । अनिवीर्य- इति प्रमाद-भ्रंशितमध्यरेफः पाभे. यद्र. । उप. बस. ।

l) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. नि √विश्+अधिकरणे ल्युट् प्र. ।

m) तस. नञ्-स्वरः । उप. *नि-वीर्य- बस. (पावा २, २, २४)। यद्वा =निर्वीर्य- (गपूटि. द्र.) ।

n) सस्व. नापूटि. द्र. । उप. १निशित- (<√निश्) यद्र. (तु. शब्रा १, ३, १, ६; ४, १, २, २५ यत्र यक्र. अनुपरत- इति चराचर- इति चैतत्पर्यायभावतो निर्दिश्येते; अर्वाश्च [GW.MW.NW.प्रमृ.])। एस्थि.सर्वत्र पपा. अनि-शित- इत्येवं निरदेशीतीव कृत्वा सा. प्रमृ. भाष्यकारैर् उप. =२नि-शित- (<नि √शा<शो) इत्यवधार्य तत्र तत्र व्याख्यानप्रौढिं प्रदर्शयद्भिस्ततत्प्रयोजितान्वयपीडनादौ व्यर्थमादरः प्रादर्शि (भूयानप्यत्र विस्तरः √निश् इत्यत्र द्र.) ।

o) क्रिवि. सद् न. द्वि१ द्र. ।

p) यतु. ?अ-निषित-> -तम् तत्रत्यं टि. च ।

q) बस. पूपप्रस्व. (पा ६, २, १) । उप. यद्र. ।

r) तस. नञ्-स्वरः (पा ६, २, २) । उप. निर् (<>स्) √शंस्+क्तः प्र. ।

s) इह श्रूयमाणं रू. प्र३ (तु. 'सजोषसः सूरयः' ऋ ४,३४,६ प्रमृ.) । एस्थि. एतद् रू. सं३ इति यद् GW. आह तन्निःसारं द्र. ।

अ-निषङ्ग[a]— -ङ्गाय ऋ १, ३१, १३.
अनि(न्-इ)ष(व्य→)व्या[b]— -व्याः ऋ १०, १०८, ६.
?अ-निषिञ्चनः[c] पै १५, १५, ९.
?अ-निषित[d]— -तम् मै ३, १६, ५; काठ २२, १५.
अ-निष्कृत[e]— -तः पै ३, ३३, ४[f]; –ंतम् ऋ ८, ९९, ८; ९,३९, २; कौ २, २४९; जै ३, २१, १४.
अ-निष्कृति— -त्या पै ३, १७, ३.
¶अनि(न्-२इ)ष्ट,ष्टा[e]— -ष्टः काठ ३५, १७; क ४८, १५; –ष्टम् तै ६, ६, ६, २; –ष्टाः तै २, ६, १, ५; –ष्टेभ्यः काठ ५, ४; ३२, ४; –ष्टेषु काठ ३५, १८; क ४८, १६.
¶अनि(न्-इ)ष्टक[g]— -के तै ५, ४, १०, ३[२]; मै ३, ४, ५; काठ २२, २.
अ-निष्टर्क्यं[h]— -र्क्यम् काठ २४, ५; क ३७, ६.
अ-निष्टृत[i]— -तः ऋ ८, ३३, ९; मा २७, ४; का २९, १, ४; ७; तै ४, १, ७, २; ३; मै २, १२, ५[२]; काठ १८, १६[२]; क २९, ४[२]; कौ २, १०४८†; शौ ७, ८२, ३; †२०, ५३, ३[j]; ५७, १३; पै ३, ३३, ७.
¶अ-निष्ट्य[k]— -ष्ट्यः काठ ७, १३[२]; क ६, २[२].
¶अनि(न-२इ)ष्ट्वा[e] काठ १२, ७[२]; ३५, १७; क ४८, १५.
अ-निहत्य[l] शौ १२, ३, ४४.
अनीक[m]— -कः पै ४, २४,७; –ंकम् ऋ १, ११३, १९; ११५, १; १२१, ४; १२४,११; १६८,९; २, ३५, ११; ३, ३०, १३; ४, ५, ९; १५; ११, १; १२, २; ५, २, १; ४८, ४; ७६, १; ६, ४७, २८; ५१, १; ७, १, ८; ९; ८८, २; ८, ९६, ९; १०, २, ६; ७, ३; ४३, ४; ४८, ३; ६९, ३; मा ७, ४२; ८, २४$; १३, ४६; २९, ५४; का ८, १७, १; ९, २,२; ४,२$; १४, ४, ९; तै १, ४, ४३, १; ४५, १$; २, ३, ८, २; ४, १४, ४; ४, ३, १३, १; ६, ६, ६; ६, २, ३,१¶; मै १, ३,३७;३९¶; २, १, १०¶; ३, १६, ३†; ४, १४, ४; काठ ४, ९; १३; २२, ५; ६; ८; २९, ३; ४६, १; क ३, ७; ११$; ३४, १; ४५, ४$; कौ ३, ११०२; ३, ५, ३; जै २, ४, ६; शौ ४, २७, ७$; ६, १२५, ३; ७, ३७, १$; १३, २, ३४$; ३५; २०, १७, ४; १०७, १३; १४; पै ४,३५, ७; १५, ११, ७; १२, ४; १६, १५१, ५; –का ऋ ३, १९, ४; ४, २३, ७; –कात् पै ८, १३, ११‡; –कानि मै २, १, १०¶; –के ऋ ४, ५८,११; ६,४७,५;

a) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. नि √ष(>स) ञ्ज् + घञ् षत्वं कुत्वं च ।

b) तस. उप. साध्वर्थक-यदन्ते नञ्-स्वरापवादो ऽन्तोदात्तः (पा ४, ४, ९८; ६, २, १५६)।

c) मुपा. नितरामकृतसंस्कारः । वस्तुतः पूर्वमन्त्रस्य यः 'एषा' इत्य् उत्तरार्धो भवति सोऽस्य मन्त्रस्य पूर्वार्धं स्यात् । 'अनिषेचनं चक्षुषी' इत्यनेन शोधितपाठेन तृतीयेन पादेन च तस्य मन्त्रस्य गायत्र्या छन्दसा पूर्त्तिः स्यादिति विचारयन्तु सुधियः । एवं तावदिह तस. नञ्-पूर्वः । उप. नि √षि(<सि)च्>नि-षेचन- इति यद्र.।

d) अ-निशित- >-तम्(गद्र.)। अत्र मूको. पा. वैकृतं द्र. (तु. संटि.)।

e) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

f) 'अनिष्टतः' इति (शौ ७, ८२, ३) पाभे.।

g) बस. अन्तोदात्तः (पा ६, २,१७२)। विशेष्यगर्भं वि. द्र.। उप. इष्टका- <√यज् यद्र.।

h) तस. नञ्-पूर्वः । 'कृत्य-' (पा ६, २,१६०) इत्यन्तोदात्तः । उप. निष्टर्क्य- यद्र.।

i) तस. नञ्-स्वरः (पा ६, २, २)। उप. <नि √ष्टृ<स्तृ यद्र.।

j) पपा.निस्√स्तृ> *निः-स्तृत- इतीव उप. निर्दिष्टं विवेक्तव्यम्।

k) सस्व. एपूटि. द्र.। उप. निष्ट्य<निस्+त्यप् प्र. षत्वं च (पावा ४, २, १०४; पा ८, ३,१०१) यद्र.।

l) सस्व. द्विपूटि. द्र.। उप. <नि√हन् यद्र.।

m) √२*अन्+ईकन् प्र. (पाउ ४,१७)। नित्स्वरः (पा ६, १, १९७)। यद्वा तस. स्याद् नञ्-स्वरः (पा ६, २,२)। उप. च (नि>)नी+क- (<१अक- <√अच्, ञ्च्)। अथवा, नापू.कल्पे नञोऽभावे सति नि इत्यस्य स्थाने अनु इति द्र.। तथा च सति समाननिष्पत्तेर् अनूक-इत्यस्मात् प्राति. विवेचनप्रयोजनः ऊ>ई इति वर्णपरिणामः। अथापि वा नापू. एव कल्पे नञभावे सति नि इत्यस्य स्थाने ३*अन् यद्र. (तु. अन्तर्, २अन्तर-)। माध्यमिक ईकार उपजनः (तु. सम् (ईक्-)। अन्ततस्तदेव उप. दर्शनार्थेन √२अक् इत्येतेनाभिसंबद्धं स्यात् पूप. च सप्तमीप्रकारकम् (२अन्- >) अनि इति रू. सद् दीर्घीभूतं स्यादित्यपीहाभियुक्तानामूहः द्र. (तु. WW. १, १२, ६; १६९)।

५; ७, ४,३; ८, ७४, ४;१०२, १३; ९, ९७, २२; खि ५, ५, ८; मा १७, ९९†; २०, ३६; का १९, १, १२†; २२, ४, १; मै ३, ११, १; काठ ३८, ६; ४०, ७; १४; †कौ १, १३; ५३७; २, ९२०; †जै १, २, ३; ५५, ५; ४, ३, ४; ६, ५; –केन क २, ९, ६; मा ५, ३४; का ५,८,५; तै १, ३, ३, १; †४, ३, १३, २; ६, १, ५; मै १, २, १२; ¶१०, ५; १४[२]; ३, ९, ५¶; †४, १०, ५; ११, ४; काठ २, १३; २१, १३; ३५, २०; ३६, ८[२]; क २, ७; ४८, १८¶; –केषु ऋ ८, २०, १२; –†कैः ऋ [३, १, १५; ५४, १]; ४, १०, ३; ७, ८, ५; मा १५, ४६; का १६, ५, २८; तै ४, ४, ४, ८; मै ४,१०, २;५; ११,४$; काठ २०, १४; कौ २, ११२८; पै ४, २७, ६. [°क- चतुर्°, ज्योतिस्°, तिग्म°, त्रि°, द्वि°, पुरु°, बृहद्°, शत°, सु>स्व्°]

¶अनीक-त्व[a]– -त्वाय मै १, १०, १४; काठ ३६, ८.

अनीक-वत्[b]– -वते मा २४, १६; २९, ५९; का २६, ४, १; ३१, ७, १; तै १, ८, ४, १¶; ५, ४, ५, ४[२]¶; ५, २४,१; मै १,१०, १; २, १, १०¶; ३, १३, १४; काठ ९,५; ४८,३; क ८, ८¶; –वन्तम् खि ४, १४, १; –वान् तै ५, ४, ५, ४¶[२].

अनीक-शस्(>:)[c] शौ ५, २१, ८; ९; ६, १०३, ३.

¶अनी(न्-ई)जान[d]– -नः मै १, ४,६; ४,८,६; –नम् तै ६, ६, ७, ३; –ने मै ४, ८, ६.

†अ-नीड(ळ)[e]– -डः ऋ १०, ५५,६. कौ २, ११३३.

अनी(न्-ई)शान[d]– -नः तै ६, २, ५, १; मै १, ७, १.

अनी(न्-ई)श्वर[d]– -राः शौ १२, ३, ४२.

१अनु- √१अन् द्र.

२अनु[f] ऋ १, ६, ४[g]; १०, १२[h]; १५, ५; २५, १६; ३३, ११[i]; ३७, ९; ३८, ११[j]; ४४, १०; ४६,१४[k];४९,३[l];५०,३[m];६[n];

a) भावे त्वः (पा ५,१,११९)। प्रत्ययस्वरः।

b) मतुपः पित्त्वान्निघाते स्वरः पूर्वावस्थः।

c) शस् प्र. (पा ५, ४, ४२)। प्रत्ययस्वरः।

d) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

e) सस्व. नापू.द्र.। यत्तु सा. प्रभृ. उप. आश्रयपर्याय-तया पश्यन्तः बस. अत्राहुः, तन्न। तथा सत्यन्तोदात्ता-पत्तेः (पा ६, २, १७२)। यथा त्वेतद् उप. सरूपादाश्रय-पर्यायात् संप. विविक्तं सद् वि. इति संभाव्येत तथा विवरणतः १°नीळ- इत्यत्र यद्र.। तस्मिन्न् उप. वि. सतीह तस. भवतु न बस. इति तु तत्त्वम्।

f) =२अँनू- इति रू. प्रयोगतः द्वि१ क्रिवि. च सद् उत्ता नि. योगमुपेत्यैकत्वमिवापन्नं द्र.।

g) लक्षणे कर्मप्रवचनीयः (पा १, ४, ९०)।

h) अत्र उ. म. (तु. मा. ५, २९) यद् 'अनु-वृद्धयः' इत्येकं पदमित्याहतुस्तत् स्वरदोषादुपेक्ष्यम्। अन्वयेऽशक्त इव सन् स्क. पदपूरणतामाहेति सम्भाव्यते। इन्द्रमभिलक्ष्य तदनुगतास्तदुद्देश्यकाः सर्वा वृद्धयश्च सर्वा जुष्टयश्च भव-न्त्वित्याकारकस्यान्वयस्य न केवलं संभवादपि त्वभीष्ट-त्वात् (तु. सा. वें PW. प्रभृ.)। तथा ह्युत्तरस्यामृचि पुनरिन्द्रस्य स्तुतिभिरभिवर्धनं श्रूयते।

i) कप्र. इति सा. वें. GW. च। √क्षर् इत्यनेन गतित्वेन योगम् MW. वष्टि। तन्न। स्वधामनुलक्ष्य न तु तां कर्मतया विषयीकृत्य क्षरणस्य विवक्षितत्वात्।

j) रोधस्वतीर् अनुलक्ष्यत्येयर्थतः कप्र. (तु. सा. वें; वैतु. GW. अनु···यात)।

k) उषस उपाचरणमकर्मकमाख्यातमभिप्रेतं द्र.। आश्विनश्रीरनुलक्षणस्य विषयो न त्वनूपाचरणस्येति विवेकाद् गतित्वदर्शी वें. चिन्त्यः।

l) लक्षणे वेत्थंभूतलक्षणे वा कप्र.। अध्याहार-मुखेन सा. अप्येनमेवार्थमभिप्रयन् स्यात्। गतित्वं तु नितान्तमनपेक्षितमित्यभिसन्धिः।

m) सा. एव केवलम् 'अनु-वि-अद्दश्रम्' इत्याख्यात-योगमाह। तत्र चाऽऽख्यातिकप्रत्ययस्य कर्तरि भ्रान्तदृष्टत्वं बीजम्। रूपं चेदं कर्मणि न तु कर्तरीत्यस्य कृते तु. √दृश्। ऋ १०, ३०, १३ इत्यत्र स्वयमसौ भाष्यकारोऽपि द्र.।

n) उत्तरमन्त्रेण प्रकरणसामानाधिकरण्ये सति वरुणस्य पृथिव्यादिलोकत्रयदर्शकत्वे तात्पर्यं द्र.। तत्राप्य् 'अनु जनान्' इत्यतः पृथिवी संकेतिता (पृथिव्यामित्यर्थः)। √भुरण्यु इत्यस्य चोभयथा वृत्तं भवति सकर्मकं च (तु. ऋ १, १५५, ५; ५, ७३, ६; ८, ५९, १; १०, ३५, ९) अकर्मकं च (तु. ऋ ४, २७, ३; ८, ९, ६)। तदिहाकर्मकत्वं द्र.। यत्तु सा. PW. च 'अनु···पश्यसि' इति योगमाहतुस्तन्न। उत्तरेण मन्त्रेण तात्पर्यसमन्वय-दर्शनात्तद्वदिहाऽप्यनुपसृष्टस्य √पश् इत्यस्योपयुक्त-तरत्वादित्यभिसन्धेः (तु. GW. W.)।

७१, ६; ८०, [१–१६]; ८[a]; ९; ८२, ३[b]; ८४, [१०–१२]; ८८, ६[c]; ९५, ३[d]; ११३, १३; १२०, ११[e]; १२१, ३; ७; १२६, ३[f]; ५; १२८, १[२]; १३६, ५; १३८, ३[g]; १४१, ३[h]; ९[i]; १४८, ४; १६१, ३[j]; १६४, २८[k]; १६५, ५[l]; १६६, १०[m]; १६७, १०; [१७५, ६[n]; १७६, ६]; १७६, २[o]; १८०, ८; १८१, ५; १८३, ३[p]; १८७, ४[q]; १९१, १५[r]; २, १, १५[s]; २, [४; ९, ७०, ३]; ५[t]; ८; ८, ५[u];

[a]) कप्र. इति खलु सा. साध्वाह । कर्मापेक्षातोऽधिकरणापेक्षाया बलीयस्त्वप्रतीतेः ।

[b]) उद्दिश्य प्रयाणेऽभिप्रायाद् अनुप्रयाणं यद् GW. PW. आहतुस्तन्न । तस्यानुगमनपर्यायत्वात्तस्य चेहाऽसंगतत्वात् ।

[c]) अतिक्लिष्टान्वय उत्तरार्धे कदाचिद् **'अनु···अस्तोभयत्'** इत्याख्यातमभिप्रेतं स्यात् ।

[d]) **'अनुष्ठु···अनु···विदधौ'** इत्यन्वयं वष्टि सा. । न त्वसौ सुवचः । **'अनुष्ठु'** इत्यनेनैवाऽनोरनुक्रमाद्यर्थस्याऽऽगतत्वाद् व्यर्था पुनरुक्तिर्भवेदिति । समग्रश्च तदीय उत्तरार्धर्चीयोऽन्वयो व्यत्यस्तः । न ह्य् **ऋतून्** प्रशासता सूर्येण पार्थिवानां पूर्वा दिग् अनुविधीयते । पूर्वां दिशमनु (=तस्यामित्यर्थः), प्रशासता तु तेनर्तवोऽनुष्ठु विधीयन्ते । इहैतावतैवाऽलं विस्तरः वैश. अनुसन्धेयः ।

[e]) **'जनान्'** इत्यनेन च **'सोम-पेयम्'** इत्यनेन च पर्यायेणाभिसंबद्धुमनोरेकस्याऽध्याहारः कर्तुं योग्यः । एवं कृते च तयोरर्थविवेकः द्र. (तु. सा.) ।

[f]) **'मा'** इत्यस्य प्रामुख्यसाधको लक्षणार्थः कप्र. (तु. सस्थ. उप; वैतु. PW. GW. **अनु···आगात्'** इति) ।

[g]) अनुसृत्येति यत् सा. व्याचष्टे तदनुलक्ष्येत्यर्थे द्र. । **'तां नियुतम् अनु'** इति च तत्राऽन्वयः ।

[h]) **'अनु···मथायति'** इतीवाभिप्रयन् सा. चिन्त्यः (तु. ऋ **३**, ४३, १; ५०, २ प्रभृ. GW. च) ।

[i]) **सीम्** इत्यनेनान्वितः कप्र. भवति । यत्तु सा. इममन्वयं व्यभिचार्य्य **'अजायथाः'** इत्यस्य क्रिप. वि. अव्य. (=गतिभिन्नत्वे सति तत्-सकक्षम्) इतीव सम्बन्धमभाषत, तच्चिन्त्यम् । गतिप्रकारके संबन्धेऽपि **सीम्** इत्यस्य रू. कर्माऽऽकाङ्क्षापूरकत्वेन दर्शनादिति यावत् । लक्षणार्थप्राधान्यात् कप्र. एव स्यादिति तु स्थितिः (तु. GW.) ।

[j]) **'वः'** इत्येतदनुबद्धो लक्षणे कप्र. (वैतु.सा. पश्चादर्थे अव्य. इति भापुकः) ।

[k]) **'अनु···अमीमेत्'** इति गतियोगवादिनः पाश्चात्या भवन्ति । तत्र हि तेऽभिप्रेतमनुलक्षणात्मकमर्थमन्तर्भावयन्ति । तदयं वादश्चिन्त्यो भवत्यप्रामाणिकत्वादन्यथाप्रसिद्धेश्च । तथाहि । अनुगमनाऽनुशब्दनाऽनुभोजनादिप्रयोगेषु योऽनोरर्थो भवति तेनैव तत्सदृशेनैव वाऽर्थेनेहापि भाव्यम् । स चाऽऽनन्तर्यसादृश्यादिविशिष्टो नितरां लक्षणार्थविलक्षण इत्यभियुक्तानामतिरोहितमिव भवति । अतो यथाऽभिमतव्याख्यानं लक्षणोद्देशाद्यर्थः कप्र. एव प्रकाश्यताम् । सामर्थ्यात् प्रसिद्धेश्च । सा. च कप्र. अभिप्रयन्नप्यर्थस्य विषये न साधुवादी । तद्विस्तरस्तु वैश. द्र. ।

[l]) **स्वधामनु**लक्ष्य (=तद्विषय इति यावत्) त्वमिन्द्राऽस्माकं भवसीति तुरीयपादस्याऽर्थः पूर्वां पादत्रयीं प्रति हेतुतयोपन्यस्तः । यत्तु सा. **'अनु···बभूथ'** इति योगमाह तद् विमृश्यम् ।

[m]) तु.सा., वैतु. च PW. प्रभृ. । येषां **'वि-अनु···धिरे'** इत्याख्यातयोगोऽभिमतो भवन् **'गतिर्गतौ'** (पा ८,१,७०) इत्युक्तं पूर्वगतिनिघातमुपक्षिपेद् अथ **'श्रियः'** इति द्विरनन्वितमिव कुर्यादिति नैवाऽऽद्रियेत ।

[n]) **'अनु···जोहवीमि'** इति सा. गतित्वमपि विकल्पयति । तन्न । निविदामनुहवनस्य हवनस्य वा श्रुत्याऽप्रसिद्धत्वाद् निविद्द्वारकस्य हवनस्य च प्रसिद्धत्वात् (तु. ऋ **१**, ८९, ३; ९६, २; **२**, ३६, १६) ।

[o]) कर्मणि प्रयोगमाहुः PW.MW.GW. । तच्चिन्त्यम् । **'यम्'** इति कर्मपदस्य तथा सति संबन्धक्लिष्टत्वात् ।

[p]) वें. सा. PW. च **'अनु···वर्तते'** इति योगमाहुः । तथापि विमर्शसहं स्थलं द्र. ।

[q]) गतित्वेऽपार्था द्वैस्वर्यापत्तिरित्यसकृदवोचाम ।

[r]) PW.MW.**अनु···प्रवावृते** इति योगमाहतुः । तथा सति प्राधान्येनाभिप्रेतो लक्षणार्थो गौणो भवेत् । अनुपूर्वकगत्यर्थानामाख्यातानामर्थे लक्षणार्थोऽन्तर्भावश्चाऽप्रसिद्धः ।

[s]) पूर्वेण **'भुवत्'** इत्याख्यातेन गतितया युयोजयिषुर् वें. चिन्त्यः ।

[t]) चित्रमेतद् यत् सा. कर्मप्रवचनीयतयोपक्रम्य गतित्वे पर्यवसाययति । √क्षित् इत्यस्याऽकर्मकः प्रयोगः द्र. (तु. ऋ **२**, ३४, २) ।

[u]) सा.इहाऽर्धजरतीयतीव । **स्वराज्य**-पदे कर्तरि प्रत्ययश्चेद् भवेत्तर्हि का गतिरनोरिति नासौ स्पष्टमाह । **'अनु···वावृधुः'** इति योगश्चेदभिमतः स्यात्तर्हि णिजर्थान्तर्भावेऽपि सति न कोऽपि प्रसिद्धोऽन्वर्थान्वयः संभवेदिति दिक् ।

[१३, १३;१४, १२]; २१,३[a]; २४, १३[b]; २८,२; ३०, २; ३६, ६[c]; ३७, १; ३८, ३; ५[d]; ६[e]; ७[f]; ४२, २; ३, ७, ६[2g]; १२, ७; १५, ३[h]; १७, १[i]; ५; २३, २; २६, ८[j]; ३३, ३[k]; ४; ३५, ८[l]; ४३, १[m]; ५१, १०[n]; ११; ५५, ४; ४, ४, १[o]; ८; ९; १६, १८[p];

a) लक्षणे इति सा., आनन्तर्ये इति वें. । उभयथाऽपि कप्र. एव ।

b) च्युतस्वरसंस्कार एव सा. आदिस्वरं वशा- इति पदं गवार्थे पश्यन्नगतिकत्वादनोर्गतित्वविकल्पमाचष्ट (तु. 'अनु वशान्' इति प्रयोगः [ऋ १,८२,३ प्रमृ.])। विस्तरस्तु वैश. द्र. ।

c) पूर्व्या निविदोऽनुसृत्य प्रवृत्तस्य मे हवस्य बोधत- मित्यन्वयः । सा. √शंस् इतीममध्याहरति गतित्वेनाऽनुं च तेन योजयति । श्रुतिस्वारस्यविरुद्धस्त्वयं योगो भवति। विस्तरस्तु वैश. द्र. ।

d) वें. अनु ''इषितम् इति केतमिति चोभयं भाग- मित्यनेन समानाधिकरणमित्याह । अन्वादि वाक्यान्तरं तु द्र. । केतमनुलक्ष्य सवित्रेषितमित्यन्वयः ।

e) लक्षणे कप्र. । सा. 'जायते' इति पदमिति शेष इत्येवं सुग्रहं द्र. ।

f) सप्तमीवचनः कप्र. (तु. GW., वैतु. PW.) ।

g) तृतीयार्थे कप्र. । स्वेन धाम्नेति मन्त्रांशस्वरसः । 'अनु'''ववक्ष' इति योगं यत् सा. आह तच् चिन्त्यम् (तु. सस्थ. टि. परि√३वक्ष्) । अन्यत्र च 'अनुघोषम्' इति ब्रुवाणः स एव स्वरद्वयं प्रति चोद्यो भवेत्।

h) वें. सा. 'अनु'''विभाहि' इत्यसख्यातयोगमाहतुः । तत्कर्मतया च ज्वालाशब्दोऽध्याह्रियते पूर्वी-शब्दस्य च पुरुशब्दात् स्त्रियां रूपापत्तिरुच्यते । परमेतावतः क्लेशवतः पथः सरलतरः कप्र. मार्गः । 'पूर्वीः (कृष्णाः) अनु (अनु- सृत्य तद्वद् इत्यर्थः) वर्तमानासु कृष्णासु त्वम् अग्ने''' विभाहि' इति सुश्लिष्टोऽन्वयः ।

i) 'अनु'''समिध्यमानः' इति गतित्ववादी वा पक्षे सप्तम्यर्थकर्मप्रवचनीयत्ववादी वा सा. उभयथाऽप्युपेक्ष्यः (तु. समानाभिप्रायाः श्रुतीः ऋ १, १६४, ४३; ५०; १०, ५६, ३; ९०, १६ प्रमृ.) । अथेह प्रथमे कल्प आदिस्वरं धर्म- शब्दम् अग्निविशेषणतया कर्त्तरि व्याचक्षाणः सा. नितरां च्युतसंस्कारः ।

j) सा.PW.GW.MW.अनु-प्रजानन्'इति द्व्युदात्तमे- कपदमाहुः । मति-शब्दश्चाऽक्लीबरूपो ज्योतिर् इत्यस्य समानाधिकरणतया व्याख्यायते । वस्तुतस्तु 'मतिम् अनु' इति तृ.कप्र.द्र.(तु.'हृदा मनीषी मनसाऽभिक्लृप्तः' (कठ. ६, ९) ।

k) सुलभः सप्तम्यर्थे कप्र. । 'अनुसंचरन्ती' इति द्व्युपसर्गयोगं ब्रुवाणः GW. स्वरद्वयीं प्रति चोद्यो भवति ।

l) वें. 'अनु'''आगत्य' इति सा. च 'अनु'''प्रजानन्' इति योगमाहतुः । समानश्रुतिस्वारस्यं तु कप्र. इव द्रढयेत् (तु. ऋ ३, १२, ७; ७, ७,२; १०, १४, २)।

m) 'सोम-पेयम्' इत्यनेन संबन्धाल्लक्षणे कप्र. (तु. ऋ १, १४१, ३; ३, ५०, २; ७, ९०, ४; १०, ३७, ३)।

n) लक्षणे कप्र. । इदमाऽस्याऽन्वयः । नापू. मन्त्रे कृतां प्रार्थनामुद्दिश्येत्यर्थः (वैतु. सा. य इहाऽसंगतमिवा- ऽनुक्रमाऽर्थमाह)। यत्तु वें. एतदन्वयार्थं 'त्वाम्' इति पद- मिन्द्रपरमाचिक्षिप्सति तदप्ययुक्तम् । तथा हि सतीदमः 'सुतम्'इतिपदेन विशेषणत्वेन संबन्धे सिद्धे उत्तरार्धे'अस्य' इत्यस्य पदस्याऽन्वादेशीयेन सर्वनिघातेन भाव्यम् (पा २, ४, ३२)। ननु त्वदभीष्टेऽन्वयेऽपि समानं चोद्यमन्वादेश- सामान्यादिति चेद् । नेति ब्रूमः । 'सुतम्' इत्यत्र क्तस्य भावेऽभिप्रायात् पूर्वार्धेन च प्रथमस्य वाक्यस्य परिसमा- प्तिदर्शनाद् (वैतु. सा.) उत्तरार्धीयेनेदमा सुतस्य सतः सोमस्य प्रथमत एव उपस्थापनाद् अन्वादेशविषयाभावाद् 'ऊडिदम्-'(पा ६,१,१७१) इति स्वरस्य चारितार्थ्यादिति।

o) प्रथमे कल्पे प्रसिति-शब्दं सेनापर्यायीकुर्वन् सा. 'अनु'''द्रूणानः' इति योगमाह । आस्तां तावत् तच्चिन्ता तस्य नितान्तं निर्मूलत्वात् । प्रसितेरुक्तोऽर्थो व्युत्पत्ति- मात्रावष्टम्भः प्रवृत्तिप्रामाण्यशून्यः । गत्यर्थौ √द्रू (स्वा.) √द्रू (क्र्या.) इत्यस्माद् विविक्त इत्यलं विस्तरान्तरेण । द्वितीये च कल्पेऽनोः कोऽर्थो भाष्यकृतोऽभिमत इत्येव न स्पष्टमुक्तं भवति । यदि नाम तृतीयार्थः कर्मप्रवचनीययोग इत्युच्येत तर्हि तृष्वीम् इति तृतीयार्थे द्वितीयेति तद्वचां- स्यपार्थान्यापद्येरन् । उक्तयोगत एव तत्सिद्धेः । न चापीह निरुक्तप्रामाण्यात् तृतीयार्थेऽनुरभिसम्मतस्तस्येति वक्तुं पार्येत । तदुद्धृते निरुक्तांऽशे तृतीयारूपयोर्मध्येऽनोः पाठो- पलम्भात् । यदि हि नाम द्वितीयायास्तृतीयात्वेन परि- णतिर् अनुना कारिता निरुक्तकारस्याऽभिप्रेताऽभविष्यत् तदोक्तप्रकारेणोक्तपरिणामकारितया परिसमाप्तशक्तित्वाद् अनोः पुनःपाठमसौ नाभ्यरोचिष्यतेत्यभिसन्धिः ।

p) लक्षणे कप्र. (तु. सा. [यत्त्वसौ भावे निष्पन्नं प्रमति- इत्येतत् स्त्री. प्राति. लक्षणया तद्वद्वृत्तित्वोपचा- रेण पुंसा सामानाधिकरण्यं भजत् सद् बस. भवतीति कृत्वा

२२, ७[a]; २९, ३[b]; ४०, ४[2]; ५२, ६; | ५, २९, २[c]; ३२, १०[d]; ३३, २[e]; ४४, १[f]; ३; | ५२, ६[g]; ५३, ५; ६[h]; १०[i]; ५९, १[j]; ६१,

स्वत एव पुं. भावयति, तद् यथा दाशतय्या वाचोयुक्त्या विरुध्येत तथा यद्र.] वैतु. वें GW. च लक्षणार्थमलक्षयन्ताव् अनु…आजगन्म इति द्व्युपसृष्टाऽऽख्याताऽऽख्यायिनौ ।

a) सीम् (=पूर्वार्धश्राव्यमाणाः स्वसृः) अनुलक्ष्येति संबन्धः (तु. वें. सा. च)। यश्चेहाऽपरोऽनुः श्रूयते तदर्थं यतु. अनु√बन्ध्>अनु…बद्बधान्- इति (वैतु. सा. यः 'बद्बधानाः' इति पदं 'सीम्' इत्येतत्-समानं प्रकृतेन कप्र. अनुनाऽन्वितमिच्छति)। एवं यश्चेह प्र: श्रूयतेऽसौ गतितया √स्यन्द्>स्यन्दयुध्यै इत्यत्रान्वितः यद्र. (वैतु. सा. यो द्वितीयमुक्तपूर्वम् अनुं 'स्यन्दयुध्यै' इत्यनेन प्रं च 'मुचः' इत्यनेन गतितया योजयितुमिच्छन् 'प्रमुचः' इत्येकस्मिन् पदे द्वैस्वरी कथं, तिङि चोदात्तवति गतिनिघाताभावश्च कथमिति चोद्यं नेव पश्यति । नापू. मन्त्रे च समानप्रकरणके प्र√सृ इत्यस्य प्र√क्रम् इत्यस्य च ये श्रुती भवतस्ते च नितरामिवोपेक्षते)। यत्तु PW. प्रभृ. 'अनुप्रमुचः' इति द्विगतिकं त्रिस्वरमश्रुतपूर्वं क्विप. श्रावयेयुस्तदतीव निस्सारं द्र. । निपातद्वयप्राकरणिकसंबन्धाऽविभावनदुर्विपाकमात्रत्वात् स्वरसंचारसौर्दम्यं प्रत्य् अक्षम्यसाहसमात्रत्वाचेति दिक् ।

b) यद् वें. 'अनु…श्रावय' इत्याह तच्चिन्त्यम् (तु.सा.)।

c) कप्र. । ईम् इत्यनेन सना. वा युदित्येतच्छिरस्केन पूर्वार्धमितेन वाक्येन वाऽन्वयः । प्रथमे कल्पे ईम् इत्यनेन नापू. मन्त्रे श्रावितचरोऽर्चनप्रकारः परामृश्यमानः द्र. । उत्तरे त्व् ईम्…इन्द्रम् इति समानाधिकरणः संबन्धः । प्रथमे कल्पे लक्षणार्थं उत्तरे तु पश्चादर्थेऽनुर् इत्यपरो विवेकोऽपि द्र. (वैतु. PW. प्रभृ. 'अनु… आर्चन्' इत्येवं योजुकाः) ।

d) पादादौ 'यद्' इत्याक्षिप्य पश्चादर्थे वा लक्षणे वा तदभिसम्बद्धः कप्र. (वैतु. सा. सर्वथोत्तन्त्रमिव 'क्षितयः' इत्यस्य वि.इतीव भाषमाणः, PW.प्रभृ.च 'अनु…नमन्त' इत्यनपेक्षिताऽन्वर्थोपसृष्टिमाख्यातिकं योगं ब्रुवाणाः) ।

e) 'याः (धियः) अनु इत्था जोषं वक्षः' इत्येवमन्वयः (वैतु. सा. 'अनु…वक्षः' इति योगोऽस्पष्टान्वितार्थः) ।

f) लक्षणे कप्र. । सामान्येन द्वितीयायां प्राप्तायामिह 'यासु' इति सप्तमी द्र. । अनु…वर्धसे इति योगं GW. मनुते स चात्र प्रत्याख्येयः ।

g) 'एनान्…विद्युतो मरुतो…अनु…अह अनुगच्छन्त्येव' इति सा. √गम् इतीममध्याहरन् अनोर्गतित्वं प्रतिपिपादयिषति । न चासौ यत्नस्तदीयः शोभनः । लक्षणार्थे कप्र. सुवचत्वे तेनैव च विद्युन्मरुत्-साान्निध्यात्मकस्य श्रुत्यर्थस्वारस्यस्य सुवेदे ऽध्याहारस्य तदुपाश्रयस्य गतित्वकल्पनस्य वा सुतरामजागलस्तनायमानत्वं न व्यभिचरेत् । यच्च सा. 'एनान्…मरुतः' इत्यन्वादेशस्य चाऽन्वादिष्टस्य चोभयोः सपदि योगमेकस्मिन्नेव वाक्येऽन्वयं च बभाषे तदपि तस्याऽसदृशमिवापतेत् । अन्वादेशस्याऽन्वादिष्टस्थानित्वेनैव सावकाशत्वादित्यस्य निगदसिद्धत्वात् । न चेहैवोपरिष्टाद् दिवः इति षष्ठी न च तत्संगत्यर्थं 'मरुद्गणस्य' इत्यश्रौतोऽध्याहारोऽपेक्ष्यत इत्यादिविस्तरस्त्वस्मदीये वैश.द्र.। उक्तादेव न्यायाद् अन्वादिष्टाऽन्वादेशविषयकाद् उत्तरार्धमात्रव्यापकैकवाक्यकल्पनामुपाश्रित्य प्रवर्तमानस्य MW. 'अनु…अर्त' इति योगोऽपि सुत्यजः स्यादिति न बहु वक्तव्यमिवास्ति ।

h) 'अनु…यन्ति' इति योगं भाषमाणः PW. उपेक्ष्यः (वैतु.GW.)। तथा सति 'रोदसी' इत्यस्याऽन्वयस्य स्वारसिकस्य दुर्लभत्वप्रसङ्गात् । यनि. तु पर्जन्यविसर्जनानन्तरं मरुतामुभयलोकसंसर्जुकेनेव सतेन्द्रधनुषा द्यावापृथिव्योर्मध्ये गतिः सुवचेति तदुपपत्तिः । यदपि सा. पर्जन्यविमोचनस्य द्यावापृथिवीविषयत्वमनुमन्येत तदपि चिन्त्यम् । 'दिवः' पूर्वार्धे पर्जन्यकोशच्यावनाऽपादानत्वेन श्रावितत्वे सति तस्याः सपदि पर्जन्यविमुक्तजलाधारत्वस्य दुर्घटत्वाच्चायुक्तत्वाच्चेति दिक् । अपि च 'अनु…वि… सृजन्ति' इत्येवं योगमातिष्ठमानः MW. चिन्त्यः । '…यन्ति' इत्यनेन च 'वि…सृजन्ति' इत्यनेन चैकस्यैवानोर्युगपद्योगमुशन् PW. विमृश्यः ।

i) पूर्वार्धगते 'शर्धम्' इति 'गणम्' इति च पदे अनुलक्ष्यत्वेनानेन कप्र. सताऽन्विते भवतः । सकलमन्त्रमयेऽत्रैकस्मिन् वाक्ये सति यत् सा.पूर्वार्धोत्तरार्धभेदेन वाक्यभेदं चकार। तन्मन्दम् । तदीययोजनाद्वयेऽप्य् अनुप्रयन्ति' इत्येकपदे द्वैस्वर्यप्रसङ्गादिति दिग् (अस्मदीययोजनायां तु. ऋ ५,५३,५)। PW.प्रभृ. गतित्वं मन्वानास्तथैवोपेक्ष्याः।

j) इह 'श्रथयन्ते' इत्यकर्मकमाख्यातम् (तुटि. अनु √श्रथ्, श्रन्थ्>°शिश्रथः, वैतु. GW.य इहाप्युपसृष्टमाख्यातमाह,सा.च य उपसृष्टिं च समर्थयति.√श्रथ्=√श्लिष् इति धात्वन्तरसाम्यं च [तु. सा. ऋ ४,३२,२२ अपि])। एवं तावत् 'स्वं भानुमनु' इत्येवं यनि. कप्र. एव द्र. ।

| १९ᵃ; ७३, ४ᵇ; ७८, २ᶜ; ८१, | २ᵈ; ३ᵈ; ८६, ५; ६, १५, ९; | १७, १२ᵉ; २३, ८; २८, ४ᶠ; |
|---|---|---|

a) लक्षणे कप्र. (तु. सा. GW.)। गतिरेव वा स्यात्। तदा **'गोमतीर्...अनु...क्षेति'** इति सकर्मकतयाऽन्वयो वक्तव्यः। प्रायेण तु √२क्षि इत्यस्याऽकर्मकतयैव श्रुतयो भवन्ति। क्वचित्कमेव च सकर्मकमपि श्रवणं भवति (तु. ऋ ५, ३७, ४)।

b) **'वाम्'** इत्येतेनाऽन्वितः पश्चादर्थे कप्र. द्र. (तु. GW., वैतु. सा. PW. यदतु **'अनुष्टुवे'** इति समस्तमाख्यातं भवति न्याय्येतरद्वैस्वर्यं च प्रसज्यते)। यथा च **स्तुव->-त्वे** इति स१ स्यान्न चाऽऽख्यातमिति यद्र.।

c) लक्षणे कप्र. द्र.।

d) पाश्चात्यास्तु प्रथमे मन्त्रे **'अनु...विराजति'** इत्याख्यातं द्वितीये मन्त्रे च **'अनु...ययुः'** इत्याख्यातं पश्यन्ति। तदेतत्तदीयं दर्शनमदर्शनमिव भवति (तु. सा.)। उभयत्र लक्षणादिकर्मप्रवचनीयार्थविशेषोपपत्तेः। तथाहि। उषःकर्तृकया प्रयाणक्रियया सवितृकर्तृकाया विराजनक्रियाया लक्ष्यलक्षणसंबन्धो वा पौर्वापर्यसंबन्धो वा मन्त्रस्वारस्यानुरोधेन काममुपपद्येत। स एव च कर्मप्रवचनीयार्थ इत्यभिप्रायः। गतित्वे प्रयाणविराजनक्रिययोरभिधेयार्थस्वरूपसामान्ये सत्येव तयोः क्रिययोर्गतिद्वारा पौर्वापर्यसम्बन्धो भवेन्नाम वाच्यः। न तु **'पत्युर्मरणमनु म्रियते पत्नी'** इतीह प्रयुक्तमरणद्वयवत् प्रयाणविराजनक्रिययोः काऽप्यभिधेयार्थस्वरूपसमता संभवति येन प्रयाणापेक्षया विराजनस्याऽऽनन्तर्यद्योतकत्वेनाऽनोर्गतित्वमुपपद्यताम्। समानवाच्यार्थस्वरूपतायामानन्तर्यसाहचर्यसजातीयोऽनोरर्थो गतित्वद्योत्यो भवति विभिन्नवाच्यार्थकक्रियाप्रयोगे चाऽसावेवार्थः कर्मप्रवचनीयत्वं प्रयोजयतीत्याकारको विवेक इहाभिप्रेतो भवति। अथोत्तरस्यामृच्ययमपरो विवेकविषयोऽवधेयः। तथेह सवितृकर्तृकदेवान्तरकर्तृकयोः प्रयातियातिक्रिययोरभिधेयस्वरूपं प्रति भेदाभावो भवति, तथा पूर्वोक्तदिशा तदीयाऽऽनन्तर्यार्थो गतिगोचरीक्रियेतेत्येवं प्रत्यवस्थीयमाने उच्यतेऽयमपि नैव गतिविषय इति। कर्मान्तरसद्भावात्। को भावः। उच्यते। यत्र कर्तृविशेषकर्तृकक्रियामपेक्ष्य कर्त्रन्तरकर्तृकायास्तज्जातीयाया अपरायाः क्रियाया आनन्तर्यार्थो गतिद्योत्यो भवति तत्र पूर्वा क्रिया कृद्वृत्तिं वाऽऽपाद्यते कर्तरि वाऽन्तर्भाव्यते। सा चैवं कृद्वृत्तिमापाद्यमाना वा क्रिया तदन्तर्भावविशिष्टो वाऽसौ कर्ताऽनूपसृष्टाया उत्तरस्याः क्रियायाः कर्मतया निर्दिश्यते। तद्वति वाक्ये कर्मान्तरं च न संभवति। यथा **'रामो गच्छति'** इति रामकर्तृकैका क्रिया। **'लक्ष्मणो गच्छति'** इति लक्ष्मणकर्तृकाऽपरा क्रिया। तयोः परस्परसम्बन्धावच्छेदो द्विविधः संभवति। **'रामस्य गमनमनुगच्छति रामं वाऽनुगच्छति लक्ष्मणः'** इति। न तु **'रामस्य वनगमनमनु लक्ष्मणः कीर्त्तिं जगाम'** इत्यत्र गतित्वं सम्भवति। उभयोः क्रिययोर्गत्यर्थसामान्येऽपि द्वितीयस्य कर्तुरीप्सिततमत्वेनाऽपरस्य कर्मणः प्रदानात्तदपेक्षया प्रथमकर्तुर्वा कृद्वृत्तिमापन्नायास्तत्कर्तृकायाः क्रियाया वा द्वितीयकर्तुरीप्सिततमत्वाभावेऽनुगतिविषयत्वाभावात्। अनुना कर्मप्रवचनीयेन तयोर्मध्ये वर्त्तमान आनन्तर्यसम्बन्धस्तु द्योत्यत एव। तद्वदिहाऽपि (ऋ ५, ८१, ३) सवितृकर्तृकप्रयाणक्रियां कृद्वृत्तिमापन्नामनु (अनुलक्ष्याऽनुसृत्य वा) अन्ये देवाः स्वीयमीप्सिततमकर्मभूतं महिमानं ययुर्नत्वनुययुरिति विवेकः कर्त्तव्यः।

e) **तासां** नदीनां संबन्धिनः **पन्थां** पथो मार्गान् **प्रवतः** प्रवणान् अन्वकार्षीरिति शेष इत्येवम् अन्वित्युपसर्गयोग्यक्रियाध्याहारं च तत्प्रकारकमन्वयं च तद्भाष्यं च सा. अनुमेने। अत्र प्रत्येकस्मिन् पदे द्योदक्रमे सत्यपि न विस्तारेणार्थ इति संकेतमात्रमुच्यते। **'प्रवतः'** इति शसि रूपस्य **'नीचीः'** इत्यस्य च **'अपसः'** इत्यस्य च समानाधिकरणभूतस्य तद्वद् **अपां** विशेषणत्वेन सहजेन चारितार्थ्यमुपागतस्य **'पन्थाम्'** इत्यमि रूपेणैकवचनेन विगतिगतीयमानं वचनव्यत्ययमुपाश्रित्य सामानाधिकरण्येन योजयितुं मनीषाऽनीशा तदीयेत्यवधेयम्। **'प्रवतः'** इत्यस्योक्तात् स्त्रियां शसि सामर्थ्यात् (तु. ऋ ७, ३२, २७ प्रभृ.)। अत उक्तो वचनव्यत्ययप्रस्तावो निरर्थकः। एवं चाऽनोः कर्मप्रवचनीयतया **पन्थाम्** इत्यनेनाऽन्वय ऋजूयत्युत्तरार्धमात्रव्यापकमेकमेव वाक्यं च भवेदिति।

f) **'उरुगायम् अभयम् अनु...विचरन्ति'** इत्याकारिका योजना GW. MW. प्रभृतीनां पाश्चात्यानामभिमता भवति। तत्र विमर्शो भवति। किमिह तासां गवामभयविशिष्टलोकविशेषं प्रति संक्रमणं शिश्रावयिषितं भवत्युताहो तासामिहैवाऽभयेन विचरणमिति। सूक्तगानि लिङ्गानि तावद् द्वितीयमेव विकल्पं द्रढयन्ति। ओपक्रमादोपसंहाराद् हि समग्रं सूक्तमेतद् गवामाप्यायने सुखविशेषाधाने पालने पोषणे च सुपठं भवति। अतः कप्र. उरुगायेनाभयेन इति तृतीयार्थे योगः। अभयस्य सिद्धवच्छ्रावितत्वान् नाऽयं साध्याभिप्रायोद्देशादिलक्षण-

३६, २[a]; ४६, १४[b]; ५४, ६[c]; ६३, ६[d]; ७; ६४, ५; ६६, ४[२e]; ६७, ६; ७५, ६[f]; ७, ७, २[g]; १८, १२[h]; ३१, ९[i]; ७०, ४[j]; ७७, ३; ८७, ७[k]; ८, १,

पदार्थवचन इति विवेकश्च सुकरः। तदकुर्वन् सा. तु
चिन्त्यः।

[a]) 'अनुप्रयेजे' इति योगं सा.GW.चाहतुस्तदनभिमतं
भवति। यत ऐन्द्रस्यौजसो लक्ष्यत्वेन समर्पयितुमिष्टत्वात्त-
दर्थीयोऽनुः कप्र. एव स्यात्। अन्यथा द्वैस्वर्यमप्य-
नुपपन्नं भवतीत्यपरं चोद्यं स्यात्।

[b]) इन्द्रचोद्यमानाऽश्वविशेषणपरेयमृक्। अनु-पदवाच्य-
लक्षणार्थविषयतया तेऽश्वा इह श्राव्यन्ते। तान् 'अनु'
तानुद्दिश्य यदि 'क्लोशं'क्रोशनपूर्वकं 'स्वनि' शब्दोऽकारि
तदा 'ये' उत्तरार्धश्रावितप्रकारेण 'आ'''वर्वृतति' इत्या-
कारकोऽन्वयो भवति। अस्मिन्नन्वये 'क्लोशम्' इति पदं
√क्रुश् इत्यस्य क्रियाविशेषणतया प्रयुक्तो घञन्तः परिणामो
वा णमुलन्तः परिणामो वा द्र.। सा. तु पूर्वस्या ऋचश्
'चोदयासे' इत्याख्यातमिहाप्यनुकृष्य तद्वत् ततोऽपि
पूर्वतरयर्चाऽन्वयमाह। तद्विस्तरस्तु तत एव द्र.। स
इहाऽनुं कर्मप्रवचनीयं 'क्लोशम्' इत्यनेन योजयतीति
विवेकस्तु सम्प्रत्येव द्रष्टुं साम्प्रतम्। उभयोः √क्रुश्
√स्वन् इत्येतयोः शब्दार्थयोर्लक्ष्यलक्षणसंबन्धावच्छे-
दकतानुपपत्तेः। न त्विह √क्रुश् इति भये इति वक्तुं
लभ्येत। अप्रमाणात्। नतिश्चेहाऽनुपसर्गनिमित्ता सांहि-
तिकी द्र.। लौकिक्या उपसर्गविशेषनिमित्ताया नतेर्भाज-
नमात्रगोचरतया (पा ८, ३, ६९) विधानादिति यावत्।
यच्च MW. स्वीयशोधनाऽभिवर्धनपरिशिष्टे अनु√स्वन्
इत्येवं योगमनुमेने। तदलक्षणम्। उभयस्वरोपपत्त्यभावा-
दिति दिक्।

[c]) लक्षणार्थः कप्र.। यत्र यत्र यथा यथा च गावः
प्रायुस्तत्र तत्र तथा तथा च प्रेहीत्यर्थः (एवं नाम ताः
संरक्षन् संस् ताभिः सह गत्वा तासां प्रत्यायनसमये-
ऽरिष्टाभिस्ताभिः प्रत्यागन्तुमर्हेरित्यभिसन्धेः [तु. नाउ.
मन्त्रः])। एस्थि.अपलक्षणामपि सतीं द्वैस्वरीमनुमन्वाना
'अनुप्र'''इहि' इति योगं च ब्रुवाणाः PW. प्रभृ.
उपेक्ष्याः।

[d]) अनु-प्र√१पत् इतीवेह कल्पयन्तः सा.प्रभृ.नाद्रि-
येरन्। लक्ष्यमात्रभूतयोरश्विनोः प्रपतनक्रियया कर्तृत्व-
संबन्धाभावे सति कस्यचिदपि तदनुप्रपतनकर्तृत्वेन वक्तु-
मनुपलभ्यमानत्वाल् लक्षणार्थः कप्र. पृथगन्वयः स्यादि-
त्यभिसन्धेः।

[e]) एकतरत्र 'श्रिया दीप्त्याऽनुगताः' इत्यनोस्तृतीयार्थे
कर्मप्रवचनीयतामभिप्रैति वें.। सा. अपि तद्वन्मानी भवति।
एवं तु सति कर्मप्रवचनीयेन तृतीयार्थस्याभिहितत्वे 'श्रिया'
इत्यनया तृतीयया नात्मलाभोऽपेक्षणीयः 'कर्म-' (पा २,
३, ८) इति सामान्यनियमाद् द्वितीययैवेह भाव्यमिति
विमृशन्तु विविचः।

[f]) पूर्वार्धे यथाऽभिलषिते पुरोनयने श्राविते सत्युत्तरार्ध
इह तत्प्रत्यनीकतया मनोऽनुसारि पश्चाद्यमनं श्रावितं
द्र.। एवं सत्य् अनोः कप्र.'मनः' इत्येतेन कर्मपदेन 'पश्चाद्'
इत्यस्य क्रिवि. च 'यच्छन्ति' इत्येतेन संबन्धः (वैतु.
या ९, १६ यदन्विव सा. 'पश्चात्' इत्येतत् पदं
'रश्मयः' इत्येतेन योजयन्नपि मनोऽनुकूलमित्युक्त्या-
ऽनोरिवार्थं परिसमापयन्नपि तदीयं पुनःप्रसवमिवेच्छन्न्
'अनुयच्छन्ति' इत्यपि भाषते,GW. च यः'अनुयच्छन्ति'
इति योगं समर्थयन् 'पश्चाद्' इत्येतद् अनोरर्थे कप्र.
इतीवाऽभिसंदध्यात्)।

[g]) तृतीयार्थे कप्र. इति सा. साध्वाह। 'अनु'''आयाहि'
इत्येवं योगं पश्यन् GW. चिन्त्यः स्यात्।

[h]) सादृश्यार्थे कप्र. (द्रुह्युम् अन्व् इति संबन्धः)।
प्रथमे पादे श्रूयमाणे 'श्रुत-' इति 'वृद्ध-' इति च कवष-
इत्यस्य वि. असती वैसं. भवत इति कृत्वा सा. आनुपूर्व्ये
अव्य. इत्यातिष्ठते। PW. प्रभृ. च द्रुह्यु-कवषयोः सामा-
नाधिकरण्यमिव पश्यन्तोऽनुं 'नि वृणक्' इत्येतद्व्यव-
हितं क्रिप. गतीकृत्याऽनुप्रवेशयन्ति। तदेतत् सर्वं सार्थ-
विमर्शं द्र.।

[i]) कृष्टिकर्तृकसंनमनस्य सोमकर्तृकोर्ध्वीभावस्य च
समानं देवताराधनमुद्दिश्य कृतत्वेन श्रावण एव मन्त्र-
स्वरसः। अतो 'भुवन्' इति क्रियायोगमुशन् GW.
चिन्त्यः।

[j]) 'चख्यथुः' इत्यनेन व्यवहितेन क्रिप. गतित्वाऽभि-
संबन्धं सा. प्रभृ. उश्युः। उपसृष्टधातुवाच्यभूतस्या-
ऽन्वेषणविशिष्टदर्शनार्थस्य प्रसङ्गाऽभावात् कप्र. सतोऽनोः
सदृशार्थस्य च प्रासङ्गिकत्वान्न तथेति दिक् (तु. ऋ ९,
९७, ५)। यथा च √ख्या इत्यस्योपसृष्टस्यानुपसृष्टस्य
च सतोऽकर्मकमपि वृत्तं भवति तथा मा ११,१७[३] इत्य-
त्रत्ये टि. यद्र.।

[k]) गतिरिति वें.सा.PW.प्रभृ.च। तथा च सति'व्रतानि'
इत्येतत् सकर्मकत्वेनाऽभीष्टस्याऽन्तर्भावितण्यर्थस्य' अनु-
ऋञ्वत्->-न्तः'इति शत्रन्तस्य कर्मतया योजयितुमिष्यते।

१४[a]; २, ३३[b]; ४, ८[c]; १०; २०[d]; ६, ३८[2e]; ९, २; १०, ६; [११, ८; ४३, २१]; १७, ५[f]; १९, ३५; २०, ७; २१, १८; ३२, १९[2g]; ४१, ३[h]; ७[i]; १०; ४८, १३; ५८,

यथा चेदमाख्यातं न सकर्मकं न चाऽन्तर्भावितण्यर्थं भवितुमर्हेत् तथा बाह्वृच्य एवास्याऽपराः श्रुतयो विस्पष्टं दर्शयन्ति (तु. ऋ ६, २, ४; ३, २; ८, ४६, २३ यत्र ऋधद्‍-वार- वीतु-वार- शब्दयोश्च विवेकोऽप्युक्तमेवार्थं द्रढयति)। एस्थि. मध्यमयोः पादयोर्हेतुहेतुमद्भावः द्र.।

a) '(वयम्) अमन्महीत् (यथा वयं) शूर ! ते महता राधसा स्तोममनु सकृत् सु मुदीमहि' इत्येवमन्वयः। अनुरत्र तृतीयार्थे कप्र. भवति। स्तोतॄणां स्तोमसहकृतानामैन्द्रेण महता राधसा निमित्तभूतेन वा साधनभूतेन वा (सिध्यमानस्य) मोदातिशयस्याऽन्तर्विच्छिन्नपर्यायराहित्याऽऽत्मकसकृद्भावविशिष्टस्याऽनुभवस्य प्रार्थ्यमानत्वेन समर्पणे तात्पर्यवती भगवती श्रुतिर् द्र. (वैतु. सा. प्रभृ. यैः पूर्वार्धेन वाक्यमेकं परिसमाप्योत्तरार्धेन तदसंबद्धमिव वाक्यान्तरं कर्तुं कृतोत्साहैः सद्भिर्बलात्कारेणेव 'अनु⋯मुदीमहि' इति योगमुरीकुर्वाणैर् अनु √मुद् =अनु √ब्रू इतीव वाभाष्यते)। उक्तपूर्वेऽस्मदीयेऽन्वये 'सु' इत्य् अव्य. क्रिवि. 'मुदीमहि' इत्यनेन क्रिप. संगच्छेतेति दिक्।

b) 'मघं हविर्लक्षणं धनं तद्वतो यजमानान् अनुमन्यनुमोदको भवति' इति प्रथमे कल्पे सा. गतित्वमाह। अत्र तावच् शसन्तस्य 'मघोनः' इत्यस्य 'अनु⋯मन्दी' इत्येवं कृताऽन्वयो दुर्घटश्चिन्त्यः। न च स्यान्नाम 'मघोनः' इति षष्ठी किमतो नश्छिद्यत इति वाच्यम्। अनुपसृष्टस्य 'मन्दी' इति शब्दस्य बाह्वृचे प्रसिद्धत्वात् (तु. ९, ५८, १ प्रभृ.)। उत्तरस्यामृचि 'वाजदावा मघोनाम्' इत्युपस्थिताच्छ्रौताल्लिङ्गादिहापि बहुत्वविशिष्टमघवद्विषयताऽनुमानाच्च। मध्यमे कल्पे तावदसौ 'मन्दी स्तुत्यः' इति नितान्तमसमर्थमर्थमिच्छन् वाक्यपूर्त्तावशक्तस् 'ताननुगृह्णातीति शेषः' इत्यनपेक्षिताऽध्याहारमुपाश्रयति। ततोऽपि सन्तोषमनाप्नुवन्निव चरमे कल्पे 'यस्य मघोनो धनवत इन्द्रस्य मन्दी स्तोता (अनु) अनुकूलो भवति' इत्युक्तन्त्रमसम्बद्धमनोरनुकूलार्थे प्रयोगं वाञ्छति। तेनाप्यथ प्रस्तुतमन्त्रावधिकामर्थपरिसमाप्तिमपश्यंश्च 'एष एतानि' इत्युत्तरत्रैकवाक्यतामाह।

c) तु. सा. यः ऋ ३, ३२, ११ इति श्रुत्यन्तरसंवादनेन तृतीयार्थतामस्य कप्र. सतः प्रतिपेदे (वैतु. GW. 'अनु ⋯वावसे' इति योगः)।

d) लक्षणे कप्र.। यत्तु सा. पश्चादर्थतामस्य पश्यन् 'यूथानि' इत्यनेन कर्मणाऽस्य संबन्धं मन्वानश्च 'निर्⋯ अजे' इति क्रिप. अकर्मकमाह, तन्न (यतु. निर् √अज्)।

e) इह पपा. 'वर्ति' > 'वर्ति' इति शोधः द्र. (इन्द्रमनुलक्ष्य द्यावापृथिव्यौ वर्तनशीले भवत इन्द्रवश्च वर्तनशीला भवन्ति यथाऽश्वमनुलक्ष्य तदनुसारितया चक्रं वर्तनशीलं भवत्येवं मन्त्रान्वयस्य सुश्लिष्टत्वात्)। एस्थि. √वृत् इत्यस्य लुप्तप्रत्ययतकारं प्रपु. इति यदन्ये प्रतिपद्यन्ते (तु.सा.GW.)तदसंगतम्। निदर्शनवाक्ये तिङन्तापेक्षया कृदन्तस्य सतश् चक्रस्य वि. नेदीय इवाऽऽकाङ्क्षितत्वादित्यभिसन्धिः। एवं च तावदत्र मन्त्रे अनुर् द्विः श्रूयमाणतया सकृच्चाऽऽक्षिप्यमाणतया कप्र. द्र.।

f) सकलगात्राऽनुलक्षणस्य प्राधान्येन समर्पणे श्रुतिस्वारस्यप्रतीतिरतत्र च लक्षणे कप्र. एव द्र. (तुटि. शौ २०, ४, २)।

g) स्वधा आहुवश्चानुलक्ष्य यत्रैव तास्तत्रैवेत्यर्थे कप्र.। यत्तु सा. द्वितीयमनुं पूरणमाह। तन्न। 'आहुवः' इत्येतेन द्वि३ तस्याऽन्वयस्य सुवचतरत्वात्।

h) लक्षणे कप्र.। 'तस्य वरुणस्य व्रतम् अनु तिस्र उषो वेनीरवर्धयन्' इत्यन्वयः। यत्तु वें. सा. च 'तिस्र उषः' इति द्वि३ इतीवाभिसन्धाय कालात्यन्तसंयोगार्थतयेव व्याचक्षाते। तच्चिन्त्यम्। 'तिसृभ्यः' (पा ६, १, १६६) इत्युक्तदिशा 'तिस्रः' इत्येतद् रू. प्र३ स्यात्। एतत्-समानाधिकरणं सद् 'उषः' इत्येतदपि च तथेत्यभिसन्धेर् (उषसः > उषः इत्येवं सकारलोपश्च संजात इत्यपरो विशेष इह समवधेयः। न तु क्विप्य् उष्- इति भिन्नं प्राति. स्यादिति। तथा सति जस्य् अन्तोदात्तानुपपत्तेरिति दिक्)। उक्ते चान्वये वेनीर् इति द्वि३ रू. (वैतु. सा. प्र३ रू. इति प्रतिपन्नः [यथा चैतद् रू. √वी > वय(न >)नी- > वेनी- इत्यस्य प्राति. भवति न च पराभिमतस्य √वेन् इत्येतन्निष्पन्नस्याऽन्तोदात्तस्य सतः सरूपकल्पस्यान्यस्य प्राति. इत्येतद्विस्तरः यद्र.])। एस्थि. उषस्त्रिकोपलक्षिताः सर्वेऽपि काला वरुणव्रतानुसारिणः सन्तो वेनीर्नाम नदीर् वर्धयन्तीति तत्तन्मन्त्रवर्णप्रसिद्धेः स्रोत्यानां वरुणाज्ञानुसारित्वे तात्पर्यं द्र.।

i) इत्थंभूताख्यान इह कप्र.। वरुणव्रताधीना देवा इत्यर्थः। व्रतस्य देवकर्तृकानुवर्तनक्रियायाः कर्मीभावेन विवक्षितत्वेऽनोर्गतित्वं वा वाच्यं तत्प्रयोग-

२[a]; ६३, ५[b]; ६९, १८[c]; ८८, ५[d]; १०३, २[e]; | ९, २२, ६[f]; २९, १[g]; ५४, १; ६३, ६; ७०, ३[h]; | ९२, ३[i]; ९७, ५[j]; ३२[k]; १०३, ५; १०९, ७[l]; १०, २, ३[m]:

सामर्थ्याच्च योग्यक्रियाऽध्याहारो वक्तव्यः (तु. वें. सा. GRI. प्रभृ.)। उभयोः कल्पयोरियानेव भेदो भवति यत् कर्मप्रवचनीयकल्पे देवानां वरुणव्रताधीनतामुखेन गतिकल्पे च तेषां तद्व्रताऽनुगमनाऽऽख्यानमुखेन वरुणः स्तूयते। प्रथमे तद्व्रतानुसारित्वं फलत्वेन कैमुतिकं द्वितीये प्रधानतया शाब्दस्तन्निर्देश इति दिक्।

[a]) लक्षणे कप्र. (तु. ऋ ८, ११, ८; ४३, २१)। यत्तु 'अनुप्रभूतः' इत्येकं पदमिति GW. MW. च। तदसत्। स्वरद्वयोपपत्तिविरहात्।

[b]) लक्षणे कप्र. (क्रतुम् अन्व् इति संबन्धः। 'ते' इत्यस्य चोत्तरार्धे संबन्धः)। क्रिवि. अव्य. इति सा. आह। तदीयेऽन्वये 'अनूषत' इत्यनेन क्रिप. गतिभावेन संबन्धवचनं साधीयः स्यादिति।

[c]) पश्चादर्थे अव्य. क्रिवि. (वैतु. 'अनु...आशत' इत्येवं योजुकः सा. [एस्थि. ष. अन्वय आपद्येत न त्वसौ सुपोष इति चिन्त्यत्वं द्र.])।

[d]) 'अनु...ववक्षिथ' इत्येवं योग इति कृत्वा यत् सा. सन्नन्ताद् *अनु√वह् इत्यत एतद् रू. आह। तन्न। अकर्मकस्य √२वक्ष् (यद्र.) इत्यस्याऽनुपसृष्टस्येह संगततरत्वादिति दिक्।

[e]) अधिकरणाऽनुलक्षणवचनः कप्र.। 'पृथिव्यां विवर्तमानः सन्नपि देवान् अच्छ मज्मना नाकस्य सानौ प्रतिष्ठत इव' इत्यभिप्रयती श्रुतिर् द्र. (वैतु. सा. यः देवान् इत्यनेनास्य संबन्धमाह; PW. प्रभृ. च येऽत्र 'अनु...विवावृते' इति योगमाहुः; एवं वें. यः 'अनु...प्र...विवावृते' इति योगमाह)।

[f]) 'प्रवतः' (द्वि३) इत्येतदनुगतः कप्र. (तु. ऋ ६, १७, १२ प्रभृ., वैतु. सा. [यस्य प्रवतः इति प्र३, 'अनु...आशत' इत्युपसर्गवती क्रिया चेति चिन्त्योऽन्वयः। पूर्वमन्त्रानुवर्तितबहुत्वविशिष्टसोमातिरिक्तकर्त्रन्तरानुपपत्तेरिति दिक्])।

[g]) लक्षणे कप्र.। 'अनुप्रभूषतः' इति द्वैस्वर्येऽप्युत्तरेण शत्रन्तेनैकपदतां ब्रुवन्तः GW. प्रभृ. चिन्त्याः।

[h]) उत्तरार्धर्च-दिग्-विशिष्टाः सन्तः केतव उभयलोकप्रसिद्धाः सन्त्व् इत्यस्मिन् मन्त्रस्वारस्ये निर्जागल्यमाने जनुर्द्वित्वस्य प्राधान्येन शुश्रावयिषितत्वात् तत्साधकः कप्र. द्र. (तु. सा., वैतु. वें. PW. प्रभृ. च 'अनु...सन्तु' इति)।

[i]) सप्तम्यर्थे कप्र. द्र. (तु. नापू. स. सकृच्छ्रुतिः। एवं तु. ऋ १, ९८, १; १८६, ११; ३, १६, ४; ५, ३७, १; ९, १११, ३; १०, ७५, ३ प्रभृ. यत्र √यत् इत्यस्य वृत्तम् अकर्मकं सत् तृ. वा स. वा सहकृतं श्रूयेत)। एस्थि. 'अनु...यतते' इति योगमिच्छवः सा. प्रभृ. चिन्त्याः स्युः। अपरं च। सा. अनु√यत् इत्यस्य सकर्मकतामभिप्रयन् कर्मपदवाच्यस्याऽनुगमनरूपे यतने यदस्य वृत्तिमाह तदसमर्थमिव द्र.। अनोर् यतनक्रियार्थानुरञ्जकत्वात्तं प्रति गतिभावाभावाच्चोक्तायाः क्रियायाः कर्मपदवाच्यानुगमनसप्रयोजनतायामनोर्लक्षणार्थवाचकत्वेन पर्यवसानाच्चेति दिक्।

[j]) 'धाम' इति 'इन्द्रम्' इति च पर्यायेण कर्मकारकतां नयन् यत् सा. अनुमुपसर्गीभावयन्नप्युभयत्र तथा न करोतीत्यर्धजरतीयं तन्मतेनापि नितरामजोष्यम्।

[k]) गतित्वमनुरुन्धान इव सा. (तु. MM.) 'अभिक्रनिक्रदत् पुनः पुनः शब्दायते' इति चेद्भणत्, तदासौ चिन्त्यः। एवं हि सति 'पन्थाम्' इति कर्मपदमनन्वितमिवापद्यते। अन्तर्भावितप्रधानकर्मणः क्यङन्तस्य √शब्दाय् इत्यस्य कर्मान्तरापेक्षाभावात्। अतस्तदर्पितक्रियाया अधिकरणलक्षणतया अनुना कप्र. द्वितीयान्तं 'पन्थाम्' इति पदं समन्वितं स्यात्।

[l]) 'पूर्व्यः' इति (<पूर्वी-) द्वि३ इति कृत्वा तदन्वितः कप्र. द्र. (वैतु. वें. सा. यन्मते 'अनु...पवस्व' इति योगः)।

[m]) देवानां मार्ग उपाश्रायि। तत्र किं लक्ष्यमिति। उच्यते, 'यच्छक्नवाम' (=यावती शक्तिर्भवति) 'तदनु' (तावतीं शक्तिमनुलक्ष्य=यथाशक्ति) प्रवोढुम् (=प्रकर्षेण क्रमितुं चलितुं=साफल्यं प्राप्तुम्) इति। एवं तावदस्मिन्नन्वये प्र√वह् इत्यस्याऽकर्मकतया प्रयोगः (तु. ऋ ५, ३०, ३; ४४, ८; ८, ४६, २६ प्रभृ.)। 'प्रवोढुम्' इत्यनेन (भावप्रधानेन नाम्नेव सता द्वि१) लक्ष्यभूतेनाऽनोरन्वय इतीवाभिप्रयन् भा. भवति (तु. तै १, १, १४, ३)। अस्यापेक्षया तावद् 'यच्छक्नवाम तत् प्रवोढुम् अनु (-शक्नवाम)' इत्येवं सकर्मकस्य अनु√शक् इत्यस्य प्रयोगतः साधीयानन्वयः संभवेत्। यत्त्वसौ 'तदनु' (=तं पन्थानमनु) इति लिङ्गव्यत्ययं विकल्पयति तत्

६[a]; ७; ११, ३; १४, १[b]; २[b]; ७[b]; १७, ११[४c]; १८, १[d]; २७, ५; ३७, ५; ४०, ९; १०[e]; ४५, ११; ५१, ६[f]; ५६, ३[२g]; ६१, २१[h]; ६८, १२[i]; ९१, ७; ९७, १९; १०३, ६[२j];

संभवत्युक्तप्रकारके वाक्ययोजनान्तरे नाऽऽद्रियेत। सा. अनुक्रमार्थे **अनुम्** अव्य. (प्रवोढुमित्येतत्-संबद्धं) क्रिवि. चेच्छति। तदपि विमृश्यम्। यत्तु GW. प्रभृ. **अनुप्रवोढुम्'** इति योगमाहुस्तदसत्। एकस्मिन् पदेऽपलक्षणस्वरद्वयाऽनुपपत्तेः। ननु लक्षणस्य लक्ष्यानुविधायित्वोपगमाद् अत्रत्यं द्वैस्वर्यमनुलक्ष्य लक्षणान्तरं क्रियेतेति चेत्। न। सति संभव उपपत्त्यन्तरस्य सामान्यलक्षणापवादाऽनौचित्यादिति दिक्।

a) लक्षणे कप्र. (वैतु. सा. अनु···आयजस्व इत्येवमपि विकल्पुकः)।

b) अत्र पूर्वेषां पितॄणां स्वाः पथ्या अनु(=स्वैः पथिभिस् [तृतीयार्थे कप्र.]) परायणं यत्रेति सप्तम्यर्थेन पदेनाधिकरणमुखेन श्रावितं भवति। अनयैव दिशा परायणमार्गविवेकेन परायणाधिकरणनिर्देशः ऋ १०, १४, ७ इत्यत्र विस्पष्टः कृतो भवति। अत एव कारणाद् ऋ १०, १४, १ इत्यत्र **'प्रवतो महीरनु'** इत्यत्र सप्तम्यर्थपर्यवसानकलक्षणोऽनुर्वक्तव्यः। प्रवत्सु महीषु परेयिवानिति यमस्तुतौ तात्पर्यम्। एवंस्थिते समानाधिकरणे **'प्रवतो महीः'** इति पदे व्यधिकरणतया व्याचक्षाणोऽनुं च गतितया योजयितुकामः सा. चिन्त्यः। एवम् ऋ १०, १४, २ इति मन्त्रेऽपि सा. सप्तमीतृतीययोर्मध्येऽव्यवस्थया भ्रान्तचित्त एवाऽनोर्मन्त्रस्थं संबन्धमपश्यन्नध्याहारमुखेन नवीनं वाक्यमुपकल्पयति। ऋ १०, १४, ७ इत्यत्र त्वधिकरणविवेकस्य निगदसिद्धत्वात् सा. अपि साधु भाष्यमाह।

c) **'प्रथमान्'** इति च **'धून्'** इति च समानाधिकरणे पदे अन्यथा विवृण्वन् सा. चिन्त्यः। तद्विस्तरस्तु वैश. द्र.। तार्तीयीकपादस्थश्चाऽनुः कैश्चिदुत्तरत्र शत्रन्ते कृत्य् अनुगमयितुमुपलिप्सितं भवति। तन्न। स्वरविरोधादेव। पूर्वोक्तदिशाऽत्र कर्तृभिन्नकारकान्तराऽनपेक्षया भावस्वरूपस्य प्रधानस्य क्रियार्थस्य समर्पणमात्रेणाऽऽत्मवती श्रुतिर्भवति। अतः प्रधानकर्मतयाऽनाकाङ्क्षितत्वादत्र **योनि**-शब्दः क्रियालक्षणाऽधिकरणाऽन्यतरार्थपर्यवसायितया तद्वचनसमर्थेनाऽनुना कर्मप्रवचनीयेन योगाद् द्वितीयायां श्रावितो भवति। अथ तुरीये पादे सा. अकारणमेव चैत्तीमव्यवस्थितिमुपागतो विकल्पभूयिष्ठं भाष्यमभाषत। शातपथेनौपसंहारिकेणोद्धारेण तु सप्तम्यर्थपर्यवसायित्वदिशाऽनोः कर्मप्रवचनीयत्वस्यैव प्रदर्शितत्वाद् वचनव्यत्ययाद्यपार्थप्रयासपुरस्कृताऽनुजुहोमीत्याद्यनेक-विकल-विकल्पकर्दमकलिलायमानोऽसौ न कस्य दयनीयः स्यात्।

d) तुटि. ऋ १०, १४, १; २; ७ यत्रोक्तदिशाऽत्रापि तृतीयार्थे कप्र.। परेण पथा परेहि दूरं गच्छेत्यर्थः। तद्दूरगमनाधिकरणभूतदेशविशेषार्थश्चेह तुरीयपादस्थयाऽस्मदीयप्रजादिनिवासाधिकरणभूताऽस्मत्संनिहितप्रस्तुतदेशव्यतिरेचनमुख्यया प्रार्थनया संकेत्यते। **'अनुपरेहि'** इति योगमिच्छवस्तु GW. MW. प्रभृ. सौवरीमनुपपत्तिमधिकृत्याऽनुयोक्तव्या भवेयुः (तु. सा.)।

e) लक्षणे कप्र.। यत्तु. सा. GW. प्रभृ. च **'अनु···दीधियुः'** इति क्रियायोगमाहुः स्तच्चिन्त्यम्।

f) **'अध्वानम्'** इत्येतदनुबद्धः कप्र.। यथा कश्चिद् रथी मार्गप्रस्थितः सन् कस्यचिदन्यस्य नियोगमुरीकुर्याद् अध्वानं प्राप्यैतदप्यन्वाचयेनेव संपादयिष्यामीति, तथाऽमी ते पूर्वे भ्रातरो देवान्तरोद्दिष्टहविर्वहनात्मकं नियोगमुरीकृतवन्त इत्यर्थः। एस्थि. तृतीयार्थे वा स्यात् सप्तम्यर्थे वा (वैतु. सा. PW. प्रभृ. **'अन्वावरीवुः'** इति द्व्युपसृष्टमाख्यातं स्यादिति कृत्वा व्यर्थमपलक्षणं द्वैस्वर्यम् अभिलापुकाः)।

g) प्रथमा···सत्या···धर्म (=धर्माणि) अनु' इत्येकत्र **'पत्म अनु'** इत्यन्यत्र यथाश्रुतमन्वयः। सा. तु विहायैनमृजीयांसमन्वयं **'गाः'** इत्यनेन क्विप. गतित्वेन योगमपश्यत्। तस्य मन्ददर्शनस्यैवैतत् फलं यत् साधनतया श्राव्यमाणयोर् **धर्मपत्मनोः**(तु. ऋ १, १६४, ४, ३; ५०; ६, ३, ७; ८, ८, २३ प्रभृ.) साध्याऽनुप्रवेशः समजनीति दिक्।

h) **'कनायाः···उपमातिम्···अनु'** इति संबन्धे साद्दश्ये कप्र.। (वैतु. वें. सा. GW. ये **अनु···परेयुः** [<२अनु-परा√इ] इत्यातिष्ठन्ते)।

i) **'पूर्वीः'** इत्येतेनाऽभिसंबद्धः कप्र.। **'अन्वानोनवीति'** इति योगं ब्रुवाणाः PW. प्रभृ. द्वैस्वर्यं प्रत्यनुयोक्तव्याः स्युः।

j) अत्र लक्षणे कप्र.। तु. अनुपदमेव मन्त्रे श्रूयमाणम् **'अनु संरभध्वम्'** इति। यत्रेन्द्रस्य प्रामुख्येनाऽऽदर्शीकृत्य शिश्रावयिषितत्वात् तल्लक्षणः कप्र. भवति। मै. त्वेवंविधेषु स्थलेषु सामान्यतः प्रथमं कप्र. अपि निहततया लक्षयन्ती गतिभावं प्रापयन्ती च प्रतीयते। (वैतु. वें. सा. PW. GW. प्रभृ. च येषाम् **अनुवीरयध्वम्** इत्य् **अनुसंरभध्वम्** इति च योगावभीष्टाविव भवतः)।

१०५, २[a]?; ११५, ६[b]; १२२, २[c]; १२४, ९[d]; १२५, ७[e]; १३५, ४[f]; १४२, ७[g]; १४५, ६[h]; १४९, ३; १५९, २; १६८, २[i]; खि २, १४, १०; ३, १५, १; २६[j]; १८, १[k]; ५, ४, ४; ११; ६, १[l]; मा १, २०[g]; २, १५[२m]; २६[n]; २७[n]; †३, १६; ५२[g]; ४, २८[o]; ५, २९†; ४०[२]; ६, १२; ७, १२†; ८, ३७; ४०†; ९, १४[२]†; १०, १९[p]; ११, १२[g]; १७[४q]; †; १२, ३†;

a) 'अनु√?वी>अनु' 'वेः' इत्यत्रत्यं सस्थ. टि. द्र.।

b) अस्य मन्त्रस्य 'यः···वरम्···अनु···तृपु··· च्यवानः···अनुद्रे···चिद्···धृषता···धन्वना···इद् (अविष्यति तस्मै=) अविष्यते (वाजिन्तमत्वादिविशिष्टाय) जातवेदसे सुपिप्य (स्तुतिपरो भवेति शेषः)' इत्येवमन्वयः स्यात्तत्र च वरम् इत्यनेनाऽन्वितो लक्षणार्थः कप्र. अनुद् इति सरलः पन्थाः (वैतु. सा. LUD., GRI. यन्मतेन अनु√च्यु> ॑अनु-च्यवान- इत्येकं समस्तं प्राति. भवति; एवं तु. ORN. यदीयविमर्शविरतरानुविमर्शः वैश. अनुसन्धेयः)।

c) 'अनु···अजनयन्' इति क्रिययाऽन्वयं ब्रुवाणाः PW. प्रभृ. चिन्त्याः। देवानां (विश्व-) जननव्यापारस्याऽग्नेस्तादृशव्यापारात्मकं व्रतमनुलक्ष्याऽभिनिर्वर्तुकत्वेन समर्पणे श्रुतिस्वारस्यप्रतीतेर्लक्षणाऽर्थो गतित्वे सति समासाङ्गीभावाद् गुणतां मा गादिति कृत्वा कप्र. इत्यभिसन्धेः। एस्थि. क्रिप. भावसामान्ये प्रयुक्तत्वात् सकर्मकस्य सतोऽपि कर्मनिराकाङ्क्षत्वं द्र.। अथवा समुचितं कर्माऽऽक्षिप्येत (तु. सा.)।

d) उत्तरेण कृता शानजन्तेन 'चर्चूर्यमाणम्' इत्यनेन गतित्वमुखेनैकपद्यमिच्छन्तः MW. प्रभृ. सौवर्या अनुपपत्तेर्विषये चोद्या भवेयुः (तु. सा.)।

e) अधिकरणानुलक्षणः कप्र. (तु. ऋ १, १८७, ४; १०, ९७, ७; १९; वैतु. PW. MW. अनु···वितिष्ठे' इति युञ्जानौ)।

f) यः कुमार-मानसोपज्ञो रथः नापू. मन्त्रेऽश्रावि यद्विषये च तदितरेषां विप्राणां प्रवृत्त्यभाव इह समकेति, तमनुलक्ष्य (तदाधारेणेत्यर्थः) इतोऽग्रे साम तथाऽनभिप्लवां संप्रवृत्तिमलब्ध, यथा नाव्याहितं सत् किञ्चिद्वस्तु मध्येसागरमपि सुरक्षितं भवेदिति श्रुतिस्वरसे प्रतीयमानेऽपि यत् सा. प्रभृ. सर्वे व्याख्यातारः 'अनुप्रावर्तत' इति द्विस्वरं द्व्युपसर्गं च योगमनुमन्वीरंस्तत्राऽऽस्थाऽभावः साऽर्थः स्यात्।

g) लक्षणे कप्र. द्र.।

h) 'अनुप्र···धावतु' इति योगं ब्रुवाणाः PW. प्रभृ. चिन्त्याः। प्राधान्येन विवक्षितस्य लक्षणार्थस्य तथात्वे गुणताप्रसङ्गादैकपद्ये सति द्वैस्वर्यानुपपत्तेश्च (गतिद्वयं समस्तं सदेकपिण्डीभूतमेकस्वरं च स्यादित्यभिसन्धिर्भवति [तु. W. शौ ३, १८, ६])।

i) 'वातस्य' इति षष्ठ्या सहाऽनुं कप्र. युयोजयिषुः सर्वथोत्तन्त्रः सा. उपेक्ष्यः। द्वितीयान्तेन 'वि-ष्ठाः' इत्यनेन पदेनास्याऽन्वयः द्र.।

j) पाठः खण्डितोऽतो विवेको दुःशकः।

k) तु. ऋ ७, ७७, ३; ८, ५८, १।

l) सप्तम्यर्थे कप्र. द्र.।

m) 'अनूजेषम्' इति द्व्युपसृष्टं द्विस्वरं च योगमुशन्तौ PW. MW. च चिन्त्यौ भवतः। अनुद् लक्षणे कप्र. द्र.। तथाऽन्वयस्य स्वारसिकत्वात्।

n) 'सूर्यस्याऽऽवृतमनु(=उद्दिश्य)आवर्ते' इति वाक्यार्थस्य सुस्पष्टत्वाल् लक्षणार्थे कप्र. (वैतु. यस्था. अन्वावर्त्ते इति तै. काठ. शौ. पै. सौवरः पाभे. यतस् तत्राऽनोरुपसर्गता स्पष्टा भवति। सूर्यस्याऽऽवृतः कर्मतया विवक्षितत्वे सत्य् अन्वा√वृत् इत्येतस्य सकर्मकता चेति दिक्)।

o) 'अमृतान्' इत्येतत्संबद्धो लक्षणे वाऽऽनन्तर्यार्थे वा कप्र. द्र.।

p) लक्षणार्थे समन्विते सत्यपि 'अनुरीयमाणाः' इत्यैकपद्यावच्छेदेन द्विस्वरं योगमनुमन्यमानौ PW. MW. च चिन्त्यौ द्र.।

q) सा. (तै ४, १, २, २) म. च व्यवहितेन 'अख्यत्' इत्यनेन क्रिप. गतित्वेन योगमाहतुः। तन्न। अनूपसृष्टधातुवाच्यार्थस्य प्रकरणाभावादिति यावत् (तुटि. ऋ ७, ७०, ४)। प्रथमयोर्द्वयोः पादयोश्चतुर्थे च पादे लक्षणार्थस्तृतीये च पादे सदृशार्थः कप्र. (तु. ऋ ५, ८१, २ यत्र सवितृ-संबन्धेन समानं वर्णनं भवति)। ननु√ख्या सकर्मकोऽकर्मको वेति। उभयमिति। कथमिति। उच्यते। यदा कर्मविशेषनिरपेक्षं सामान्येन दर्शनप्रकाशनाद्यर्थो भवति तदाऽयमकर्मकः (तु. ऋ १, ४६, १०; १२३, २; ४, १३, १; १४, १; १९, ९; २४, ८; १०, १२७, १ प्रभृ. शौ ७, ८२, ५ प्रभृ. च) एषु स्थलेषु क्वचित् क्वचित् प्रतिर् अनोः स्थाने श्रूयते। तत्र यदि प्रतिः कप्र. न स्यात्तर्हि प्रासङ्गिकार्थाद् विपरीतस्याऽर्थस्य प्रतीतिः स्यात् प्रतिख्यानात्मकस्य।

५[४a]; २८†; ९३†; **१३**, ५[४]†; ६; ७; ९†; **१७**, ३८[२]†; ६६[h]; **१९**, ४०[h]; ५४†[h]; **२०**, ४९†; **२७**, १६; **२९**, १९[४]†; ४३†; **३२**, ४; **३३**, ३२†; **३५**, ७†; का **१**, ७, ४; १०, ५[b]; **२**, ४, १[२c]; ६, ५[d]; ७[d]; ७, ५[e]; **३**, ३, ६†; ७, २†; **४**, ९, ५[e]; **५**, ७, ५†; **७**, ६, १†; **८**, ११, २; १५, १†; **१०**, ३, ७[२]†; **११**, ६, ४[f]; **१२**, २, १; ६[४g]; †; **१३**, १, ३†; ६[४a]; २, ११†; ६, १९†; **१४**, १, ५[४]†; ६; ७; ९†; **१८**, ४, ६[२]†; ६, २[h]; **२१**, ३, ११[h]; ४, ४†; **२२**, ५, ३†; **२९**, २, ६; **३१**, २, १०†; ३, ८[४]†; **३२**, ३, ३†; **३५**, ३, ४; ४, ६†; तै **१**, १, १०, ३[h]; १४, ३†; २, ४, २[३]; ६, १[२i]; ८, १[e]; १०, १; १४, १†; ४[२]†; ३, १, २†; ७, १[२j]; ८, २; ४, ९, १†; ४४, ३[k]; ५, १, ३¶; २, २¶; ५¶[h]; ५, १†; ७, १†; ८, ३¶; १०, ४[l]; ६, ४, १[५]; २[३]; ५, २[४m]; ¶७, १, १[n]; ६[o]; ४, २[३p]; ५, १[२h]; ३[q];

न च तदुपयुज्येतेति यथा प्रतिस्तथाऽनुः प्रकरणसामान्ये कप्र. एव स्यादित्यभिसन्धिः ।

[a]) कप्र. द्र. । (तुटि. तै **१**, ६, ५, २; वैतु. मै **२**, ७, ८ यत्राऽनुगतत्वाद्यर्थैर्विक्रमणक्रियाया एकपिण्डीभावेनेव विवक्षायाः संभाव्यमानत्वाद् अनोर्गतिभावस्तदर्थाऽनुप्राणितक्रियायाः सकर्मत्वं च भवति) ।

[b]) सप्तम्यर्थे कप्र. [तु. पूर्वस्मिन् पादे 'पशुषु प्रविष्टः' इति; वैतु. सा. अनु···वितस्थे इति द्व्युपसृष्टमाख्यातमिच्छन् (तथा संभवत्यपि 'वि-ष्ठाम्' इत्यत्राऽनुव्याप्यत्वमभिप्रेतमिति कृत्वा 'कालाध्वनोः' (पा **२**, ३, ५) इति द्वि. द्र. । सा. तु 'अनुसृत्य' इति भाषमाणः कर्मणि द्वि. इतीवाभिप्रैति)] ।

[c]) तुटि. मा **२**, १५[२] ।
[d]) तुटि. मा **२**, २६; २७ ।
[e]) तुटि. मा **४**, २८ ।
[f]) तुटि. मा **१०**, १९ ।
[g]) तुटि. मा **११**, १७[४] ।
[h]) लक्षणे कप्र. द्र. ।
[i]) तृतीयार्थे वा लक्षणार्थे वा कप्र. द्र. ।

[j]) लक्षणे कप्र. । गतिरिति ब्रुवन् MW. चिन्त्यः (तु. सा. भा. च) ।

[k]) आनन्तर्ये वा (तु. सा. भा. च) लक्षणे वा कप्र. द्र. । प्रथमे कल्पे वसोर्घर्मस्य च दिवश्चाऽऽस्थानक्रियासामान्याऽपेक्षया तत्पूर्ववर्तिन्या देवगणकर्तृकायाः क्रियाया अपेक्षयाऽऽनन्तर्यं द्र. (वैतु. सा. भा. च वसुघर्मविषयस्याऽऽस्थानस्यापेक्षया द्युविषयस्याऽऽस्थानस्याऽऽनन्तर्यमिति) । द्वितीये कल्पे वसुघर्ममनुलक्ष्येति संबन्धः (तु. शौ **७**, १०२, ४ पामे.) ।

[l]) लक्षणार्थे कप्र. । (वैतु. PW. K. प्रमृ. 'अनुसंचरन्ति' इत्यपलक्षणद्विस्वरं योगमसत्यप्यनिवार्यत्वेऽनुमन्यमानाः) ।

[m]) लक्षणे कप्र. । पृथिव्यन्तरिक्षद्युदिशां विक्रमणाधिकरणतया लक्ष्यत्वेनाऽनुश्रूयमाणत्वात् (तु. K.; वैतु. भा. यः पश्चादर्थे कप्र. इच्छन् वि√क्रम् इत्येतम् आत्मनेपदं सन्तं सकर्मकतां प्रापयिष्यन् भवति) ।

[n]) लक्षणे कप्र. (तु. भा.) । K. त्व् अनुम् 'उपतिष्ठन्ते' इत्येतेनाऽऽख्यातेनाऽनुगमयति । पशूनां पाकयज्ञमनुलक्ष्योपस्थानस्य विवक्षितत्वात्तस्य च गतित्वे गौणतापत्तेः प्रथम एव कल्पः साधीयानित्यभिप्रेमः ।

[o]) दक्षिणाया यत्तद्वैशेष्येण युक्तायाः पश्चन्तरसंक्रमणलक्ष्यत्वेन शिश्रावयिषितत्वात् तदर्थीयः कप्र. द्र. ।

[p]) सा. भा. च 'लक्षण-' (पा **१**, ४, ९०) इति कप्र. । 'तृतीयार्थे' (पा **१**, ४, ८५) इति च K. । यथा तु MW. आनन्तर्यार्थं ग्राहयितुं गतित्वं संप्रधारयामास, नैतत् तथा संभवेत् । गतित्वं ह्युपगतोऽनुर्यदा भवति, तदैतदुपसृष्टस्याऽऽख्यातस्य द्विधा प्रवृत्तिर्भवति । कस्यचिदपरकर्तृकस्य स्वजातीयस्य स्वाभिन्नस्य वा भावस्यापेक्षयैतद्वाच्यस्य भावस्य भौतिके वा दिक्कालादिलक्षिते बौद्धे वा चितिसंस्कारलक्षिते पश्चाद्भावित्वविशिष्टे सादृश्य-सामीप्याद्यर्थबोधने तात्पर्यमित्येकम् । प्राक्ताविशिष्टस्य भावस्य वा नामीभूतस्य वा तत्कर्तुर्वा तेनाऽनूपसृष्टेनाऽऽख्यातेन कर्मसंबन्धाद् उपसृष्टेस्तस्याः पूर्वमकर्मकस्यापि सतः सकर्मकता भवतीत्यपरम् । एवं च सत्य् अनुश्चेद् उपसर्गः स्यात्तर्हि यजमानकर्तृका देवकर्मिका वा देवोजितिकर्मिका वा तदनुपातिन्युजितिरवगम्येत । देवाः पूर्वं विजयिनः सन्तो यजमानेन पश्चाज्जिता इत्यर्थः । नचेयमिष्टापत्तिः । तात्पर्यविरोधात् । देवकर्तृकेण विजयेन तत्साधनकस्य तदनुलक्षितस्य वा यजमानकर्तृकस्य विजयस्य प्राधान्येन विवक्षितत्वात् । देवविजयस्य पूर्वसिद्धत्वात् तत्प्राक्ता यजमानकर्तृकस्य विजयस्य च पश्चात् तद्द्वारा च सिद्धत्वात् तदनन्तरता स्वत एव सिद्धा सती शाब्दं वाचनं नापेक्षेत । एवं खलु कर्मप्रवचनीयवाद एवेह सुस्थितः । स एव च सौवरलक्षणानुकूलः (तुटि. मा **२**, १५[२]) ।

[q]) लक्षणवचनः कप्र. न गतिः (वैतु. K. 'अनू-[नु । उ]पयन्ति' इति) । नाउ. मन्त्रे त्व् 'अनूपयन्ति'

६, ३¶[a]; ७, २[b]; ८, ३[२]†;
८, ५, १[२c]; १४, २¶[d];
¶२, १, ४, ५[e]; ५, १[f];

६[g]; २, १, ४[h]; ५[i]; ९,
५[j]; ३, ३, १[२k]; ५, ३[l];
७, १[m]; १२, २[m]; ४, २,

१[२n]; २[o]; ४[o]; ८, १†; २[p];
५, ३, २; ३; ४, २[२q]; ५, ३[q];
६, २[r]; ८, ७[s]; ६, ५, ६[t];

इति गतिर्न कप्र. इति स्वरविवेकेन विज्ञाप्यमानोऽसावुभयोः प्रयोगप्रकारयोर्विषये विवेचनीयः। तद् यत्र लक्षणाद्यर्थः कर्मकारकाद्यनुबद्धतया प्राधान्येन शिश्रावयिष्यते, तत्र तद्वाचकाः प्रातिस्विकस्वराः कप्र. प्रयुज्यन्ते। अथ यत्र त एव नि. अर्थान्तरवाचकाः सन्त आख्याताऽङ्गभूतास्तदर्थविशेषणपरत्वेन शिश्रावयिष्यन्ते, तत्र त उपसर्गधर्मिण आख्यातस्वरभावाभावव्यवस्थितस्वरा भवन्तीति। अन्यथैतावता संनिकर्षेणाऽपार्थस्वरभेदश्रुतेरनुपपत्तेरिति दिक्।

[a]) 'अनु-पर्या॑वर्तते' इत्येवमत्र प्रथमोत्तमस्वरवत् त्र्युपसर्गयोगमिवाऽऽतस्थिवान् MW. (तदनु K. च) चिन्त्यः स्याल्लक्षणार्थस्य विस्पष्टं श्राव्यमाणत्वात्।

[b]) तृतीयार्थे कप्र. इति K.। लक्षणेऽपि सुगमः। गतित्वमुशन् भा. त्विह चिन्त्यः। स्वराऽनुपपत्तेः।

[c]) प्रथमो द्वितीयश्चाऽनू इत्थंभूतलक्षणे, तृतीयश्च लक्षण इति विवेकः (तु. ऋ १, ८२, ३)। 'अनु...प्र...यासि' इति योगे कृताऽऽस्थो भा. चिन्त्यः। वश-शब्देन तत्त्वतोऽपरिचयात्। अथाप्यसाविह मुधैव विकल्पग्रस्तः द्र.।

[d]) गतिरिति भा. K. च। द्वैस्वर्यं त्वनिष्टं तथाऽऽपद्येतेति लक्षणे कप्र. एव द्र.। (तुटि. तै १, ६, ५, २)।

[e]) 'जघनतः' इत्यर्थे जघने (द्वि२) इत्यनेन सम्बद्धः कप्र. भवति। भा. K. च जघने इति स१ पश्यन्तौ 'अनूदेत्' इति द्व्युपसृष्टत्वे सति द्विस्वरं योगं ब्रुवाणौ चिन्त्यौ, तन्मतेनैव पश्चादर्थस्य जघन-शब्देनोक्तत्वात्। प्रकरणे तन्मात्रतया संभवस्याऽन्वर्थस्य चारितार्थ्याभावं प्रति, सत्यैकपद्ये द्वैस्वर्यस्याऽपलक्षणतां च प्रति तौ चोद्यतां व्रजतः। ननु जघन- इति प्राति. पुं. श्रूयते (तु. ऋ १, २८, २ प्रभृ.) इति चेत्। सत्यमेतद् अंशत एव। न. अपि श्रुत्युपलम्भात् (तु. तैब्रा २, ४, २, ७ [यच्छाखासाम्याद् नेदिष्ठतया प्रामाण्यमर्हेत्])। नन्वेवमपि मुपा. पपा. च प्रगृह्यत्वलक्षणाऽनुपलम्भश्चोद्यः स्यादिति चेत्। ओमिति ब्रूमः। अस्मद्व्याख्यानेऽस्यांशस्य प्रामादिकविकारतयाऽनभ्युपाये सति मृग्यसमाधानान्तरत्वादिति दिक्।

[f]) लक्षणे कप्र.। 'अनूदायन्' इति गतित्वं मन्वानौ MW.K.च चिन्त्यौ। तथा तु सति स्वराऽनुपपत्तिर् द्र.।

[g]) भा. K. चाऽत्र लक्षणार्थमपश्यन्तौ 'अनुसंतनोति' इति रू. प्रतिपन्नौ न्याय्येतरद्वैस्वर्यपक्षपातिनौ सन्तौ चिन्त्यौ।

[h]) पश्चादर्थे अव्य. (तु. नाउ. स्थ. यत्र 'उपरिष्टात्' इति प्रयुज्यते; वैतु. MW. 'अनुनिर्वपेत्' इति)।

[i]) आनन्तर्यार्थबोधकम् अव्य. क्रिवि. संबन्धश्च (वैतु. मै २, १, १ यत्र समाने प्रकरणेऽनुः पृथग् अव्य. क्रिवि. असन् नाउ. क्रिप. गतिभावेनाऽनुप्रविष्टो भवति [तु. सस्थ. टि. अनु-प्र√२यम् > अनुप्रयच्छति])।

[j]) प्रधानभूतां वाचमनुलक्ष्याऽन्या वाचः प्रवदन्तीति वाक्यार्थप्रतीतेर् अनुः कप्र. (वैतु. MW. अनुप्रवदन्ति' इत्यन्याय्यो योगः)।

[k]) लक्षणार्थस्य प्राधान्येन विवक्षितत्वाद् द्व्युपसृष्टिश्च तामनु द्विस्वरता चाऽनभीष्टा सुवारा द्र.। प्राक्त्वेवमेव विस्पष्टत्वेऽपि गतित्वमेवाऽनुमन्वानाः MW.K.प्रभृ.चिन्त्याः।

[l]) आ√प्याय् इत्यस्य शुद्धस्याऽकर्मकत्वाद् भिन्नकर्तृकाऽऽप्यायनयोर्द्वयोर्मध्ये लक्षणलक्षितसंबन्धस्यैवोपपन्नत्वात् कप्र. एव सुवचः।

[m]) लक्षणे कप्र.। अन्यथादर्शी MW. चिन्त्यः।

[n]) लक्षणे (हीने वा तु. भा.) कप्र.। (वैतु. PW. प्रभृ. 'अनु-सम्-आ-रभामहै' इति त्र्युपसृष्टं द्विस्वरं योगमनुमन्यमानाः सन्तश्चिन्त्यतामुपगताः। तथा हि सति 'गतिर्गतौ' (पा ८, १, ७०) इत्युक्तदिशा निहतः स्याद् अनुः [तु. नाउ. नि. सम् इति; एवमपि तुटि. ऋ १०, १०३, ६])।

[o]) अनोः कप्र. सप्तम्या योगः समवधेयः।

[p]) अन्तर् इत्यर्थेऽन्तर्भागानुलक्षणवचनः कप्र. (वैतु. अनु वि√विश् मै २, ४, ७; ८ यत्राऽयं कर्मण्येव कारकान्तरसंबन्धस्याऽन्तर्भावादिव गुणभावाद् गतिभावं प्रापितो भवति)।

[q]) पश्चादर्थे अव्य. द्र.।

[r]) सप्तम्यर्थपर्यवसानकः कप्र. द्र.।

[s]) एपूटिदि.कप्र.द्र.।'अनुप्रपिपते'इति योगम् PW.प्रभृ. आहुः। तन्मन्दम्। ऐकपद्ये स्वरद्वयस्याऽपलक्षणत्वात्।

[t]) तु. तै २, ६, ५, ५ यथा तत्र प्रस्तरस्याऽऽहवनीये प्रहरणं श्रावितं भवति तथाऽत्र तत्सकक्षतया तदुत्तरविधितया च प्रस्तरस्य तदेकांशस्येत्यर्थे बर्हिरनु (बर्हिषि) प्रहरणं श्राव्यते। एवं चेह सप्तम्यर्थपर्यवसानो लक्षणे कप्र. एव वक्तव्यः। गतित्वाऽध्यवसानः MW. विस्पष्टेतरान्वयः K. च चिन्त्यौ भवेताम्।

१०, ४[२a]; १२, २†; ¶३, १, ३, १[b]; ४, २$[c]; ८, ३[४]†; २, १, ३[d]; ४, ५[e]; ५, ५[२f]; ६[२g]; ६, १$[h]; ३, ६, ३[३i]; ७, १[३i]; २[i]; ४, ८, ३[j]; ६[k]; ५, १, ३[d]; ४[d]; २, ३[l]; ४[२l]; ६, २[m]; ३[२m]; ४, १,२, १[d]; २[४n]; ३[n]†; ८, २[o]; १०, ४†; २, १, १[३p]; २[p]; २, ४†; ८, २†; ३[५]†; ९, ५[४]†; ३, १०, ३[q]; ११, १[२r]; ४[२]; ४, ४, ८[s]; ६, ४, २[२]†; ५, १; ६, ३†; ७, ३[४]†; ¶५, १, १, ४[t]; २, ६; ३, १[d]; ७, ४[d]; ८, ६[d]; २, १, ३[२]; ३, ६; ५, ४[४u]; ६, १; ७, ३[v]; ८,

[a]) हेतुवचनः कप्र. इति भा. अभिप्रैति। तथात्वं लक्षणवाचकताद्वारकमेवाऽनुवेदितव्यम्। पञ्चत्वसंख्यामनुलक्ष्य तत्पूर्त्तिहेतुना प्रायणवत्-समिष्टयजुःसंकलनेनोदयनपञ्चकस्योक्तत्वात्।

[b]) तुटि. तै २, १, ५, ६।

[c]) लक्षणे वा तृतीयार्थे वा कप्र.। यत्तु भा. ऐकपद्यमिवोत्तरेण कर्मणि शानजन्तेन कृताऽभ्युवाह 'अनुरज्यमानाः' इत्येवं च व्याचचक्षे, तन्नोपपद्यते। प्रथमा खल्वापत्तिः सौवरी सुविदिता विमृशां भवति। कर्मणि प्रवृत्तिमतः पदस्य कर्त्तरि व्याख्यानं दुर्वचमित्यपरा। उपेक्षिताऽनुपदः K. तूपेक्ष्यः।

[d]) लक्षणे कप्र. द्र.।

[e]) यत्तु MW. 'अनुप्रसर्पन्ति' इत्य् आख्यातिकं योगमाह तदसत्। स्वरविरोधात्। अत एवंविधेषु लिङ्गान्तरैः सामान्येन गतितया वा कर्मप्रवचनीयतया वा सुवहेषु स्थलेषु स्वर एव विनिगमकः स्यात्। लक्षणाद्यर्थस्य प्राधान्ये द्वैपद्यं द्वैस्वर्यं च। तस्याऽऽख्यातान्तर्भावेण गौणत्व ऐकपद्यमैकस्वर्यं चेति दिक्।

[f]) इत्थंभूतलक्षणे कप्र.। यथाऽनु विष्णुं भक्तस्तद्वदित्यर्थः। वस्तुतस्त्व् अनुगतत्वाऽऽदिबोधकाऽऽख्यातस्य गम्यत्वमिह द्र.। एवं च गर्भीकृताऽऽख्यातानुप्राणितार्थवचनसामर्थ्यमित्थंभूतलक्षणार्थ इति सुवचं भवति।

[g]) हीने कप्र. इति भा. सुवचः।

[h]) हेत्वर्थानर्थान्तरभूते लक्षणे कप्र.।

[i]) नापूटिदि. कप्र.। गतित्ववादी MW. चिन्त्यः।

[j]) इह द्वयोः कल्पनाऽऽख्यभावयोर्मध्ये प्रथमोक्तमनुलक्ष्य पश्चादुक्तस्य संभावितया श्रावितत्वाच्चाऽनुकल्पनाऽऽख्यस्योपसृष्टभावस्याऽप्रासङ्गिकत्वाच्च यथाकथमप्यभ्युगमे सति लक्षणविषयभूतवाचकस्य द्वितीयान्तपदस्याऽन्वयविघातकत्वाच्च गतित्वपक्षपातिनी मतिरर्वाक्तनी (तु. PW. प्रमृ.) नाऽऽद्रियेतेति दिक्।

[k]) आनन्तर्ये गतित्वकर्मप्रवचनीयत्वव्यतिरिक्तं प्रातिस्विकाऽन्वययोग्यमव्ययमनुमन्तव्यमिति।

[l]) आनन्तर्य इति भा., तृतीयार्थ इति K.। सप्तम्यर्थसामान्येऽथवा वक्तव्यः कप्र. अनुपदमोषध्यादिषु पश्वादीनां प्रतिष्ठापनात्मकाच्छ्रुतिलिङ्गात्। सर्वथाऽपि कर्मप्रवचनीयतामात्मनस्तु न जहातीति। अनु-सं√तन् इत्येवं वितथाऽनुमानीव प्रतीयमानः MW. चिन्त्य एव स्यात्।

[m]) लक्षणे कप्र.। अनन्तरपर्यायं स्वतन्त्रम् अव्य. इति भा.।

[n]) लक्षणे कप्र. (तु. ऋ ८, ४८,१३; तुटि. मा ११, १७[४]; वैतु. सा अनु…आततान' इति)।

[o]) अनु√दद्<√१दा>'अनु…ददन्ते' इत्यत्र टि. द्र.।

[p]) तुटि. मा १२, ५[४]; वैतु. अनु-वि√क्रम्>अनुविक्रमस्व मै २.७,८[४]।

[q]) स्वार्थप्रधानम् अव्य.(वैतु.'अनुध्यायन्' मा१४,३०)।

[r]) इह 'अनुसंचरन्ती' इति पदं ब्रुवाणः सा. चिन्त्यः। एकस्मिन् पदेऽनेकस्वरानुपपत्तेः। अतः सप्तम्यर्थपर्यदसानके लक्षणे कप्र. एव प्रथमोऽनुः। अथ 'ऋतस्य पन्थामनु' इत्यत्र तृतीयार्थे वा लक्षणे वा द्वितीयोऽनुः कप्र.एव। ऋतस्य मार्गेण वा मार्गमुद्दिश्य वाऽऽगमनमात्रस्योषसां विवक्षितत्वात्। कुतः। उच्यते। अनुपदं ज्योतिषा त्रयाणां घर्माणामन्वागमनस्य श्रूयमाणत्वात्। आगमनमेवान्व् अन्वागमनस्योपपन्नत्वात् (तु. 'रेतः' शौ ८, ९, १३)। एवमस्यां कण्डिकायां त्रयोऽनवो भवन्ति। तेषां द्वौ कर्मप्रवचनीयावादिमौ चरमस्तु गतिरिति विवेकः। अन्यथैवाभिप्रयन्तौ सा.K. चोक्तदिशा चोद्यौ भवतः (तुटि. सस्थ. अन्वा√गा>अनु…आगुः)।

[s]) इहेत्थंभूतलक्षणे वा हेत्वात्मकलक्षणे वा कप्र. द्र.। बाह्वृचे तु गतित्वमुपागतः (तु. ऋ १,१२७,१)।

[t]) तृतीयार्थे वा हेत्वर्थतात्पर्यको वा कप्र. द्र.।

[u]) लक्षणे कप्र.।'अनूत्सृजति'[२]इति 'अनुपर्यावर्तन्ते'[२] इति च द्व्युपसृष्टं द्विस्वरं च योगं पश्यन्तौ PW. MW. चाऽयथार्थदर्शिनौ भवतः।

[v]) वैतु. तै ५, २, ७, २ यत्रत्याद् 'अनु-उप√धा' इति योगा.दिहत्ये पृथक्कृताऽनुके प्रयोगे सूक्ष्मेक्षिकयाऽवश्यं विशेषः कश्चन भवति। तदपश्यन्तःMW.K.प्रमृ.चिन्त्याः।

४[२a]; ७b; ९, ५c; ३, १, ३[d]; ४, ७[e]; ५, २[f]; ७, ४[g]; ४, २, १; ६, २; ७, १$; ६[h]; १०, ३[i]; ५, २, १[h]; ५, २j; ७, ५[i]; १०, ६[i]; ६, ४, १; ७, ४, ४$; ७, १$; ९, २[k]; ¶६, १, ५, ३[l]; ४[२]; ७, ७$; ८, १[m]; ९, ५[n]; ११' २$[o]; ३, ४, ७[p]; ५, ३$[q]; ७, १; ८, ३; ४$; ४, १, २[२]; २, ६[r];

[a]) एकतरत्र गतिमदङ्गिरोभिः प्रसर्पतः पुरोडाशस्य केवलं गच्छन्तमनुगच्छति इत्याकारकः पौर्वापर्यात्मकोऽनुसार्यानुसरणविशिष्टः संबन्धो न भवति । किन्तु स्वर्गं यतोऽङ्गिरस उद्दिश्य (=तत्-सहभावप्राप्तये) स्वभावतश्चलितुमशक्नुवन्नपि कूर्मत्वमुपगच्छन् पुरोडाश आत्मनः प्रसर्पणमकारयदिति तात्पर्यात् कूर्मीभूतस्य पुरोडाशस्योद्देशविशेषसाधनतामुपगतायाः प्रसर्पणक्रियायाः श्रावणे मन्त्रस्वारस्यात् कप्र. अनुर् न गतिरित्यभिसन्धिः । अन्यत्र लक्षणे कप्र. (तुटि. तै ६,५,११,१) । उभयत्र वैतु. PW. प्रभृ. 'अनु-प्र√सृप्' च 'अनु-परा√भू' च ।

[b]) 'तृतीयार्थे' (पा १, ४, ८५) इति चीयमानाग्नेर्वेदिप्रवेशे करणं समर्पयितुमिष्टं द्र. । उलूखलमुपधेयमिति विधिर्भवति । नाभिर्हि तद् अग्नेश्चीयमानस्य भवति । तदुपधाने सति स्वनाभ्येदासावग्निर्वेदिं प्रविशति । तदनुपधाने स्वनाभिमपश्यन् यजमानस्य प्रामादुकस्य नाभ्या द्वाराऽसौ वेदिप्रवेशं कुर्वाणस्तं विहणीयात् । मैवं भूदित्युपधेयमुलूखलमिति श्रुत्यर्थो भवति । अथवाऽधिकरणात्मकः सप्तम्यर्थोऽभिप्रेतः स्यात्तद्वचनश्च कप्र. द्र. (तु. मै ३, २, ७; काठ २०, ७; क ३१, ६ यत्र नाभि- इत्यस्य स१ श्रूयते) । उभयथाऽपि नाभिपदार्थस्य मुख्यलक्ष्यत्वेन समर्पणे सति स्पष्टे प्राकरणिके तात्पर्ये यदेतदपश्यन्तः केचिद् 'अ̱नु̱प्र̱विशति' इत्येकपदात्मकं द्विस्वरं योगं प्रतिपद्यन्ते (तु. MW. K.) तन्नाऽऽद्रियेतेति दिक् ।

[c]) तुटि. तै ५, २, ५, ४ ।

[d]) तृतीयार्थे कप्र. (तु. K.; वैतु. भा. लक्षण इति) ।

[e]) अर्क्यम् (=अर्कभवं) साम शस्त्रं चाऽनुलक्ष्याऽर्के तदाधारेण विधा विधीयत इत्येव श्रुतिस्वारस्यं स्यात् (तु. तै ४,३,८;९ च तदुपरि सा. भाष्यं च [K. टि. च]) । गतितया योजयन्तौ MW. K. च चिन्त्यौ भवतः ।

[f]) प्रणुदितान् भ्रातृव्यान् उद्दिश्येत्येवंप्रकारकेऽर्थे कप्र. द्र. ।

[g]) तृतीयार्थे कप्र. ।

[h]) लक्षणे प्रकरणस्य मुख्यं तात्पर्यमिति कृत्वा तदुद्बलनप्रयोजनः कप्र. । ऐकपद्ये सति द्वैस्वर्यानुपपत्तेः । (वैतु. भा. PW. प्रभृ. 'अ̱नु̱प्रा̱विशत्' इति) ।

[i]) लक्षणे कप्र. द्र. ।

[j]) पश्चादर्थे अव्य. वा लक्षणार्थे कप्र. वा । प्रथमे कल्पे प्रथमायाः स्वयमातृण्णाया उपधानं कृत्वा (पश्चात्) प्राणनक्रियां कुर्यादित्यन्वयः स्यात् । द्वितीये कल्पे प्रथमां स्वयमातृण्णामुपधीयमानामनुलक्ष्य प्राण्यादिति संबन्धः । एवं चाऽन्यतरार्थकोऽनुरुत्तरयोर् उपधानयोरप्यनुर्वर्तयितव्यो भवति । नन्व् 'अ̱नु̱प्रा̱ण्यात्' इत्येका ह्युपसृष्टा क्रिया स्यादिति । नेति । कथम् । यावता सकृत्ते उत्तरे 'व्य॑न्यात्' इति च 'अ̱पान्यात्' इति चोभे अपि क्रिये अह्युपसृष्टे सती 'प्रा̱ण्यात्' इति क्रियाऽपि तदन्व् अह्युपसृष्टेत्युपक्षिपेतामिति । अन्यथात्व ऐकपद्ये सति द्वैस्वरी नोपपद्येत ।

[k]) लक्षणे कप्र. । यत्राग्निर्भवति तत्रैव पशव उपतिष्ठन्त इत्यर्थः । 'अ̱नू̱प̱तिष्ठन्ते' इति सकर्मको ह्युपसृष्टो योग इति यद् भा. च K. चोष्टस्तन्न । तदभिप्रेतस्य पश्चादर्थस्य प्रकरणेऽनभिप्रेतत्वाद् ऐकपद्ये सति द्वैस्वर्यस्याऽनुपपत्तेश्च ( वैतु. मै ३, २, ३; ७; ९, २; ४, ७, ९ यत्र लक्षणार्थस्याऽप्राकरणिकत्वात् साकल्यार्थस्य च स्वारसिकत्वादिहाऽसंगतः पराभिप्रायः संगतो भवति) ।

[l]) तुटि. तै ३, ४, ८, ३ ।

[m]) लक्षणे कप्र. । निक्रमणक्रिया पदषट्कपरिमितेत्यस्यैवाऽर्थस्य न त्विहाऽनुनिक्रमणार्थस्य प्राधान्येन विवक्षितत्वात् । अत एवाऽनौ पृथक् स्वरोऽप्यत्रैव ज्ञापको भवेत् । चिन्त्या अतो गतित्ववादिनो भा. MW. K. प्रभृ. (तुटि. 'अनु-नि√क्रम् >अनुनिक्रामति' इति) ।

[n]) सप्तम्यर्थे कप्र. तु. ततः किञ्चिदिव प्राक् श्रूयमाणं 'स̱र्वासु···उ̱प' इति । एस्थि. भा. प्रभृ. 'अ̱नु̱सं̱चरति' इति योगमनुजानानाश्चिन्त्याः स्युः । अपलक्षणद्वैस्वर्यापत्तेः ।

[o]) अन्तरिक्षमुद्दिश्य वाऽन्तरिक्षेण वाऽयनस्य विवक्षितत्वसंभवाल्लक्षणे वा तृतीयार्थे वा कप्र. ।

[p]) आनन्तर्यार्थे स्वार्थप्रधानम् अव्य. ।

[q]) छन्दोभिरेवैनं प्रजनयतीत्यानुपदिकाल्लिङ्गात् तृतीयार्थे कप्र. इति सिद्धमिव । वितथवादी MW. चिन्त्यः ।

[r]) लक्षणे कप्र. । न त्वनुपदम् अ̱नन्ववचार- इति

५, १[a]; ६, ३[b]; ७, १[c]; १०, ४[a]; ५, ३, ३[२d]; ८, १[२a]; ३[e]; १०, १[f]; ११, १[g]; २[२h]; ६, ४, २[i]; ६, १[२h]; ¶७, १, १, ४[२]; ५[२]; ६[२]; ५, ५[j]; ६, ८[k]; ७, ४[l]; २, ४, १[m]; ७, १[२a]; ८, २; ४; ५; ३, ७, २; ४, ४, १[n]; ८, ३[३]; ९, १[o]; ११, ४[३l]; ५, ६, २[२p]; मै १, १, ७[f]; २, ६[q]; ११†; १५[r]; १६; ३, ११†; ३३†; ३९[s]; ४, ७[२f]; ५, १†; ५[२]†; ६†; ६, २; ८, ५¶[f]; ९[५t];†¶; १०, ३†; १७[२u]¶; ११, २[२]†; २, १, १०¶[v]; २, २[२]¶; ४, ७†; ५, ३¶[v]; ७[२]¶[w]; १०[४]†; ६, ११[f]; ७, २[२s]; ८†; ९†; १५[२];†; १०, ४[२]†; ६; १२, ४[x]; १३, ८[y]; १०[४]; ३, १, ४[२t]; ¶; ५[३z];

शब्दश्रवणादिहाप्य् अनु-अव√चर् इति भ्रमः स्यात्। इह लक्षणार्थस्यैव विवक्षितत्वात्। तस्मिन् शब्दे च हेतुमानिति वाऽऽनुषङ्गिक इति वाऽनोरर्थः। विस्तरस्तु वैश. द्र.।

[a]) तृतीयार्थे कप्र.।

[b]) यतः प्राणो न्यृतस्तत एवाऽपानोऽपि 'न्यृंच्छेत्' इत्यस्यार्थस्य विवक्षातो लक्षणे कप्र. इत्येव युक्तम्। अतः K. अत्र वैरूपध्यमर्हेत्।

[c]) तृतीयार्थे कप्र. द्र.। वाचमनु वाचा तया सहायभूतयेत्यर्थः। 'अनुप्रयन्ति' इति योगं मन्वानाः K. प्रभृ. तु चिन्त्याः।

[d]) गतित्व कर्मप्रवचनीयत्वाऽन्यतरसद्भावापेक्षया स्वार्थप्रधानम् अव्य. इत्येव साधीयः द्र.।

[e]) सप्तम्यर्थे कप्र. द्र.।

[f]) लक्षणे कप्र.।

[g]) लक्षणार्थस्यैव प्राकरणिकत्वाद् अनुर् अत्र कप्र. भवति। परा√भू इत्यस्य चाऽकर्मकं वृत्तं भवति (वैतु. MW. यः 'अनु-परा√भू' इति कल्पयन् सकर्मकं क्रिप. इच्छति)।

[h]) हेत्वात्मके तृतीयार्थे कप्र. (तु. भा.; वैतु. PW. प्रभृ. 'अनु···पुरा (आ वा) भवन्ति' इति)।

[i]) तुटि. तै ५, ७, ९, २।

[j]) अनुक्रमार्थेऽव्ययमित्यभिप्रैति भा.। अथापि खल्व् अधि-परि-वत् (तु. पा १, ४, ९३) अनुप्रयुक्तविभक्त्यर्थाऽनुवादकतामात्रेण सार्थकोऽप्यनर्थक इव स्याद् अन्यथा सिद्धेः।

[k]) लक्षणे कप्र. द्र.। एनमनुलक्ष्याऽस्य विषय इति यावत्। आनन्तर्यार्थे अव्य. इति भा.।

[l]) तुटि. तै १, ७, ६, ३।

[m]) तुटि. तै ३, ४, ८, ३।

[n]) प्रजापतिकर्तृकस्तुतिप्रयोगाऽभावे देवान्तरकर्तृकतदनुसारित्वप्रयोजितस्तुत्यनुप्रयोगाऽसंभवाचाऽपलक्षणाद्वैस्वर्यप्रसङ्गाच्च गतिभावेन अनुर् उत्तरां प्र-पूर्वां क्रियां नानुप्रवेशयितव्य इति।

[o]) तृतीयार्थे कप्र.। तत्र सत्रे केशवपनं सशिखं कुर्यादिति विधेरभिप्रेतत्वात्। अतः सशिख-विशिख-वपनविवेकाऽननुदर्शी K. चिन्त्यः।

[p]) एकतरत्र तृतीयार्थे कप्र.। 'अनुप्राणन्ति' इत्येवं योगमुशन् MW. चिन्त्यः।

[q]) तुटि. मा ४, २८।

[r]) लक्षणे वा तृतीयार्थे वा कप्र.।

[s]) पश्चादर्थे अव्य. द्र.।

[t]) तुटि. मा ११,१२;१७[४]। अन्यत्र 'यज्ञमनुलक्ष्य दम्पती अम्नाताम्' इत्येवं प्रकरणसंगत्या कप्र. द्र. (वैतु. MW. 'अनु···अम्नाताम्' इति)।

[u]) 'तान् अपिपद्यमानान् अन्वपिपद्यते' इत्यत्र तावद् अनुर् 'गतिर्गतौ' (पा ८,१,७०) इति गतिलक्षणं निघातमनुभवन्नपि सजातीयप्रयोगान्तरसाम्येन सस्वरः कप्र. स्यादित्यपेक्षा बलवतीव भवति। कदाचिन्मूलतो विद्यमानः स्वरः प्रमादाच्च्युतिं गमित इतीव चोत्प्रेक्ष्यते। तु. अनुपदमेवोपरिष्टात् 'तान् प्रजायमानान् अनु प्रजायते' यत्र अनुर् इति पृथक् कप्र., 'प्रजायते' इति च पृथक् क्रिप. भवति।

[v]) तुटि. तै १, ७, ४, २।

[w]) एकतरत्र यत्तु मुपा. 'अनुवर्षति' इत्येवमुपसृष्टमाख्यातं शिश्रावयिषितं भवति तदसङ्गतत्वाच्चिन्त्यं द्र.।

[x]) कप्र. यथा भवति तथा 'अनु-सम्-प्र√या>?अनुसम्प्रयात' इत्यत्रत्ये टि. यद्र.।

[y]) तुटि. तै ४, ४, ४, ८।

[z]) सकृद् 'अनुप्रतितिष्ठति' इत्यत्र गतिर्भूत्वाऽथ त्रिः कप्र. द्र.। यदा द्वयोः समानभावयोर्लक्ष्यलक्षणसंबन्धो विवक्षितो भवति पौर्वापर्यप्रकारकस्तदा तद्वचनः अनुः कप्र. वा स्याद् गतिर्वेत्युभयथाश्रुतेर्विकल्पः। यदा चैकस्मिन् वाक्ये प्रयुक्ताया गतिभूताऽनुविशिष्टायाः क्रियाया अर्थो वाक्यान्तरेऽनुपदिन्यनुवर्त्तयितुमिष्टो भवति तदा तदर्थं प्रकारद्वयमुपयुज्यमानं द्र.। तद् यथा।

२, १$^{२}$†; ५¶[a]; ६$^{२}$;†¶[b]; १०; ¶३, ५; ६[c]; ८; ४, ५[d]; ६$^{३}$¶; ¶६, ४; ८; ७, १[e]; ६$^{२}$; ७; ८, ४¶; ९, ७[f]; १०, १$^{२}$[g]; २[h]; ७¶[h]; ११, १०[h]; १६, ३†; **४**, १, ७[i]; १०¶[j]; २, १¶[k]; ३, १¶[l]; ३[m]; ४, ५¶; ¶५, १; ३$^{२}$[i]; ४$^{६}$[n]; ७; ८[o]; ६, २¶; ३$^{४}$[i]; ५[i]; ६¶[p]; ७, ४$^{२}$[i]; ८, ९†; ९, १०$^{३}$¶[i]; १०, २†; ६†; ·११, २?[q]; ३†; ४$^{२}$†; ५$^{२}$†; १२, ४$^{२}$†; १४, १२†; १४†; १६$^{२}$†; १८†; काठ **१**, ६; **२**, ६$^{२}$[r]; १२†; १५†; **३**, ४$^{२}$; ६[l]; **४**, ११†; १३[s]; १६[q]; **६**, २[t]; ८[i]; ९†; ११$^{२}$†; **७**, ४†; ५†; १३[i]; १४$^{२}$[t]; ८, ५; ७$^{२}$; ८$^{२}$; १५; १७†; ९, १$^{२}$[i];३;४;६$^{४}$[u];†;११$^{४}$[i];१४$^{२}$[i]; १८†; **१०**, ४$^{२}$; १०$^{२}$[v]; **११**, २; ३$^{२}$; ४$^{२}$; ८; ९†; १०; **१२**, ५$^{२}$; **१३**, ८$^{२}$; ९$^{४}$†; १४$^{२}$†; १६†; **१५**, ७[i]; **१६**,१; २$^{४}$[w]; ८$^{५}$[x]; ९†; १५$^{५}$†; **१७**, ८†;

अनुः पश्चादर्थकः कप्र. एव पुनः श्राव्येत तस्य चाऽऽक्षेपेणाऽनुवर्तनीयया मूलक्रियया क्रिवि. संबन्धः स्यादिति प्रथमः प्रकारः यथेह । अथ लक्ष्यलक्षणभूतसमानभावाभ्यां कर्तृत्वसंबन्धविशिष्ट-पूर्ववाक्यगतपदद्वयसक्षतया समर्प्यमाणे स्वं स्वं भावं प्रति कर्तृभूते पदान्तरे एवोत्तरे वाक्ये श्राव्येयाताम् । पश्चादर्थकगतिभूताऽनुसहिता समग्रैव च क्रियाऽऽक्षेप्या स्यादिति द्वितीयः प्रकारो भवति यथा मै **३**, ३, १०; काठ **२२**, २ इत्यत्र ।

[a]) 'हीने' (पा **१**, ४, ८६) इति कप्र. । अधिकशक्तिहीनशक्तिभ्रातृव्ययोः प्रणोदनस्य सममभीष्टत्वात् तयोस्तत्ताऽति-अनुभ्यां द्योतिता भवति ।

[b]) तु. नापूटि. । न चेह **'स्यात्'** इत्याख्यातस्य विद्यमानत्वात् तेन गतित्वेन योगः स्यादित्युच्येत । प्रतिवाक्यं क्रियान्तराभावे भ्वस्तिरूपस्य क्रियासामान्यस्य विद्यमानत्वदर्शनान् नेह किमपि विवेकविनिगमकं विशेषान्तरमुत्पश्यामः । पूर्ववदेव च सदृक्-पदस्य **'अ̱ति'** इति कप्र. सान्निध्याद् विषयविवेकार्थं हीनार्थवचनोऽयं कप्र. एव द्र. ।

[c]) तृतीयार्थवचनः कप्र. । तादृक्-सकक्षपदसाहचर्यात् ।

[d]) प्रायिकसामान्यवत्सु सत्स्वपि बहुषु स्थ. एष तावत् परस्परं विशेषो भवति यथा कश्चिद् निपातोऽन्यत्र गतिर् भवत्यन्यत्र च कप्र. इति (प्रकृते तु. अनु-प्रति √स्था>अनुप्रतितिष्ठति मै **३**, ३, १०; ४, ४ यत्र अनुर् गतिर्भवति) । एस्थि. यथोपलब्धि सौवरी स्थितिरेवाऽत्र नियामिका स्यादिति दिक् ।

[e]) तुटि. तै **६**, १, ५, ३ ।

[f]) तुटि. मै **१**, २, १५ ।

[g]) एकतरत्र तुटि. तै**३**,३,११,१ । अन्यत्र लक्षणे कप्र. ।

[h]) लक्षणार्थस्य प्राधान्येन विवक्षितत्वाद् **'अ̱नु··· प्र̱जायन्ते'** इत्येवं योगं पश्यन् तदन्तर्धापकः MW. चिन्त्यः । कप्र. इत्येव साम्प्रतम् ।

[i]) लक्षणे कप्र. द्र. ।

[j]) **'मूलम्'** इत्यनेन सम्बद्धो लक्षणार्थे तृतीयार्थे वा कप्र. द्र. ।

[k]) हेत्वर्थपर्यवसानके लक्षणे कप्र. । वितथदर्शी MW. चिन्त्यः । अकर्मकस्य जागरणस्य कर्माभिसंबन्धनैरपेक्ष्यात् ।

[l]) तृतीयार्थे कप्र. ।

[m]) तुटि. मै **२**, ५, ७ ।

[n]) चतुर् हीने वारद्वयं तु लक्षणे कप्र. ।

[o]) हीने कप्र. द्र. ।

[p]) आनन्तर्यार्थे अव्य. वा लक्षणे वा कप्र. द्र. ।

[q]) **'नु'** इति मुपा. ? (तु. पपा. संटि. नाउ. काठ **४**, १६ च) । लक्षणे कप्र. (तु. प्र̱ति तै **१**, ८, २२, १; **२**, ५, १२, १; मै **४**, १०, १; शौ **७**, २९, १; वैतु. SIM. **'अ̱न्व् आ̱चरण्यात्'** इति) ।

[r]) एकतरत्र तुटि. मा **४**, २८, अन्यतरत्र लक्षणे कप्र. द्र. ।

[s]) गतिर् इति ब्रुवाणः SIM. द्वैस्वर्यं प्रति चोद्यो भवति । स्वार्थप्रधानम् अव्य. द्र. ।

[t]) सप्तम्यर्थे कप्र. द्र. ।

[u]) तृतीयार्थे वा लक्षणे वा कप्र. द्र. ।

[v]) तुटि. तै **२**, ४, २, १$^{२}$ ।

[w]) तुटि. मा. **११**, १७$^{४}$ ।

[x]) कप्र. (वैतु. टि. मै **२**,७,८ अनु-वि√क्रम्>अनुवि̱क्रमस्व इति स्वराङ्कणाभावादिह काठ. श्रुतिस्तत्र मै. संकेतितं कतरं वर्गमनुबद्धा स्यादित्यध्यवसातुमशक्यमित्येवं सत्यपि यदेषैव मौलिकी वाक्-प्रवृत्तिः स्यादितीव कृत्वाऽत्र गतीतरपक्ष उरीकृतस्तत्र सदसद्विविचः प्रमाणम् ।

१९[४a]; १८, ४; ५[२]†; १९[३]¶[b]; १९, ३[c]; ५¶[d]; ९¶[e]; २०, १; ३[f]; ६[g];७;९[२]; १०[६h]; १२[२i]; २१, १; ३;७; ८†[j]; ९; १४†; २२,१[k]; २[b]; १०; २३, ८[२b];९; २४, ६[l]; २५,४[m]; ५; २६, ७[b]; ८[b]; २७, २; ८[३n]; २८,१[३o]; ९[२p]; २९, ८[q];१०[b]; ३०, १[b];२;३[२b]; ७[३]; ८[r]; ९[r]; ३१,५[b];८[२]¶[s]; ३२, ५[b]; ३३, ३[४t];३४,७¶;१३[५u]; ३५,८[४]†; १६[२]¶[v];१७[२w];१८; ३७,११[२];

[a]) तुटि. काठ ७, १४[३]।

[b]) लक्षणे कप्र. द्र.।

[c]) तुटि. मा ११, १७[४]।

[d]) स्वार्थप्रधानम् अव्य. वा स्याल्लक्षणवचनः कप्र. वा योग्यक्रियाऽध्याहारो वेति भूयोऽपि विमृश्यं द्र.।

[e]) सयोनेरग्नेश्चयनं कर्त्तव्यं तद्-द्वारा वेदिं प्रविशेद् नेद् यजमानस्य योन्या द्वारेति कृत्वा तृतीयार्थे कप्र. द्र.।

[f]) तुटि. सस्थ. मै २,७,८; तुटि. तै ५, ३, ४, ७।

[g]) तुटि. तै ६, ५, ११, १।

[h]) आनन्तर्यार्थे कप्र. (वैतु. मै ३,२,९ यत्र पश्चादर्थेनाऽऽख्यातार्थो नेदीय इवाऽनुरञ्जितो भवति। तेनाऽकर्मकस्याप्याऽऽख्यातस्य सकर्मकत्वाऽभिनिर्वृत्तौ सत्यां तस्य च तदीयस्य कर्मपदस्य चाऽन्तरा तदीयं कर्तृपदं श्रूयते [वैतु. प्रकृतेऽस्य कप्र. सतो व्यवधापनीव श्रुतिः])।

[i]) लक्षणे कप्र. (तु. मै ३, २, १० यत्रत्या समानप्रकरणिका सौवरी स्थितिरिहापि विनिगमनी भवति।

[j]) तु. ऋ १०, १४५, ६; शौ ३, १८, ६ यदन्विहापि 'मा॒म् अ॒नु' इतीव लक्षणाऽभिप्रायः संबन्धो भवति।

[k]) प्रेत्य समारोढ्यस्य स्वर्गस्य मानं सम्प्रति क्रियमाणस्य यज्ञस्य मानमन्वित्यर्थविवक्षाप्रामुख्यात् कप्र. द्र. (तु. तैब्रा २, १, २, १०, यत्रत्यः स्वरसंकेतोऽप्येतत्समर्थकतां भजति [तु. वैप२ यस्था. टि.])। एस्थि. PW. प्रमृ. 'अ॒नुस॒मा॒रोहति' इति त्र्युपसृष्टौ बम्भ्रम्यमाणाश्चिन्त्याः स्युः।

[l]) तु. सस्थ. टि. तै ५, ७, ९, २।

[m]) लक्षणे कप्र.। अनु√खन् >अनुखनेत् इत्येवं योजुकः SIM चिन्त्यः।

[n]) तुटि. मै ४, ६, ३[३]।

[o]) तुटि. मै ३, १०, २।

[p]) तुटि. मै ४, ७, ४[२]।

[q]) सप्तम्यर्थे कप्र. द्र.।

[r]) तुटि. मै १, २, १५; शौ २, ३४, ३।

[s]) एकतरत्र तुटि. काठ १६, ८। अथेह विशेषोऽप्यस्ति। तथा हि। असुरस्य लोहितं पृथिवीं साकल्येनाऽपूरयदित्येवं श्रुतिर्नाभिप्रैति येन गतिभावमनुप्रविश्य अनोर् अर्थो विधावनार्थमनुरञ्जयेदिति गतिपक्षानादरः द्र. (वैतु. PW. MW.)। अन्यतरत्र तु. सस्थ. टि. मै ४, १, १०।

[t]) तुटि. तै ७, ४, ११, ४[३]।

[u]) सप्तम्यर्थे कप्र. भवति (तु. तत्रैव श्रूयमाणं 'पूर्वपक्षेषु' इति)।

[v]) भावलक्षणस्य विषयस्य प्रामुख्येन श्रावयितुमिष्टत्वात् तस्य च यथा कप्र. न तथा ग. गमयितुं शक्यत्वात् कप्र. एव द्र.। अथ कप्र. एतदपरं लक्षणम्। तद् यथा। यत्र लक्ष्यभूतो भावश्चाऽन्यतः पृथक् क्रियापदेनोच्यते लक्षकभूतो भावश्चाऽन्यतः पृथक् क्रियापदान्तरेणोच्यते तत्र सामान्येन कप्र. अनुर् द्र. इति। तस्माद् यथा **'डिम्भस्य मरणमनु मरणं खिम्भस्य'** इत्यत्र कप्र. अनुर् भवति तथैव **'डिम्भं म्रियमाणमनु म्रियते खिम्भः'** इत्यत्राऽप्ययं कप्र. इति। यत्र तु लक्ष्यलक्षकयोर्भावयोः समानत्वे वा सजातीयत्वे वा सति लक्षकभूते भावे गम्ये सति लक्ष्यभूतो भावोऽनुपूर्वेण सकर्मकेण सता क्रियापदेनोच्यते तत्र ग. अनुर् भवतीति। यथा **'डिम्भमनुम्रियते खिम्भः'** इति। एवं तावत् प्रकृते कलशस्योपवानं पृथक् शत्रन्तेन क्रियाप्रधानेन पदेनोच्यते तदनुलक्ष्य प्रवर्त्तमानश्च प्राणोपदसनभावः पृथक् क्रियापदेनोच्यत इति कृत्वा कप्र. अनुर् अत्र भवतीति निर्विवादं सद् अन्यत्र च सकक्षासु वाचोयुक्तिषु निदर्शयितव्यमिति दिक् (तु. प्राण- >-णेन इत्यत्र क ४८,१४ टि., गपू. पृ१८० टि. D च)।

[w]) प्रयास्यद्-यजमानकर्तृकाऽग्न्यन्वाधानादिक्रियाविशेषाधीनप्रीतभावाः कामास्तेन तस्यां क्रियायां कृतायामेव तं प्रति कामप्रीताः सन्तस्तेन प्रयाता सह प्रयायुर्नान्यथेत्येवं लक्षणार्थस्य प्राधान्येन विवक्षितत्वात् कप्र. अनुर् न गतिरितीव कृत्वा पृथक् स्वरो भवति (वैतु. काठ ९, १७ यत्र समानकल्पया श्रुत्या तत्-सजातकर्तृकं प्रयातोऽनुप्रयाणं सूचितं भवति। अयं तु तत्र विशेषो भवति यथा प्रयाता क्रियमाणायाः क्रियाया इन्द्राग्नीदेवताकत्वं न तु प्रयात आत्मीयं कमपि विशेषमुपजीव्याऽकामानामपि सतां सजातानां तदनुप्रयाणे प्रवृत्तिः संजायत इति कृत्वा प्रयात्रनुप्रयातृमध्ये लक्ष्यलक्षकसंबन्धाभावे सति लक्षणार्थस्य वाच्यत्वेनाऽप्राप्तत्वाद् न कप्र. अनुरिति)।

**अनू-काश्-** अनु √काश् द्र.

**अनूक्त-** अनूचान-, १अनूच्य, २अनूच्य-

**अनूच्यमान-** अनु √वच् द्र.

**अनूचीन-** ३अनूच्य- अन्व(नु √अ)- ञ्च् द्र.

¶**अनूच्छ्रि** (नु-उद् √श्रि), अनूदश्रयत म २, २, ८; काठ १०,१०.

¶**अनू(नु-उद्)ज् √जि**, अनूदजयत् मै ४, ३, २; काठ १२, ७[2].

**अनू(न-ऊ)ति**[a]– -ती[b] ऋ ६, २९, ६.

**अनूत्था**(नु-उद् √स्था), अनु··· उत्तिष्ठतु खि ६, १, २; ¶अनूदतिष्ठन् मै ४, ८, ५.

¶**अनूत्-स्थाय**[c] तै ३, ४, १०, ३; ६, २, ५, ५; मै १, ९, ८; काठ ९,१५;२२,११; क ३५,५.

¶**अनू(नु-उद्)त् √सृज्**, अनूत्सृजति मै ३, २, ७; काठ २०, ८; क ३१, १०; अनूत्सृजन्ति मै ३,२,४; अनूत्सृजेत् काठ १३,३.

¶**अनू(न-ऊ)दक**[d]– -कम् मै ३,१०,७.

¶**अनू(नु-उ)द् √अय्** (<√इ) अनूदु(द्-अ)य्य[e] काठ २४, ४; क ३७, ५.

¶**अनू(नु-उ)द् √इ**, अनूदयाथ मै ३, ७, १.
अनूदेति काठ ८, ५; क ७, १; अनूद्यन्ति मै १, १०, १८; ३, ७, १[2]; काठ ३६, १३; अनूदैत् मै १, ६, १२; २, ५, ३; काठ १३, ३.

अनूद्-यत्– -द्यन्तम् काठ १३, ४.

¶**अनूदे**(नु-उद्-आ √इ) अनूदेत्य काठ २२, ११; क ३५,५.

¶**अनू(नु-उ)द् √द्रु**, अनूद्द्रवन्ति काठ ८, ११; क ७, ८; अनूद्द्रवेत् काठ ६, ६.
अनूद्-द्रुत्य काठ ६, ४; ९, १६[c]; १०, ५; २१, ८; १०.

¶**अनू(नु-उ)द् √धृ**(<ह्व) अनूद्-धृत्य[e]– -त्यः तै २, २, ४, ७.

†?**अनू(न-ऊ)धस्**[f]– -धाः ऋ १०, ११५,१; कौ १,६४; जै १,७,२.

**अनू(न-ऊ)न,ना**[g]– नः खि २,१०, २; शौ ७, ८६, ३; पै ११, १, ८; –नम् ऋ १, १४६, १; २, १०, ६; ४, २, १९; ६, १७, ४; खि ३,७,५; मै ४,१३,४†; काठ १६,२१†; शौ ७, ८६, ३; १२, ३,४८;–नस्य ऋ ८,५५,५;–ना ऋ ७, २७, ४; –नाः ऋ ३, १, ५; ८,१६,४; –नेन ऋ ४,५,१.

†**अनून-वर्चस्**[g]– -र्चाः ऋ १०, १४०, २; मा १२,१०७; का १३,७,६; तै ४, २, ७, ३; मै २, ७, १४; काठ १६, १४; क २५, ५; कौ २, ११६७.

¶**अनू(नु √उ)न्द्**, अन्वौन्दन् काठ २७, ५; क ४२, ५.

†**अनूप**[h]– -पाः ऋ १०, २७, २३; –पे ऋ ९, १०७, ९; कौ २, ३४८; जै ३, २९, ५.

---

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[b]) स१ द्र. (वैतु. सा. तृ१ इति; GW. प्रमृ. च१ इति [कथं वत रक्षाया अभावमप्युद्दिश्य देवतायाः सुहवत्वं काम्येतेति त्वत्राऽर्वाञ्चः प्रष्टव्याः स्युः])। सा. व्यु.? (तु. सस्थ. टि. ऊती)।

[c]) गस.ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[d]) सस्व.कृते तु.अनुदका-। उप. नैरुक्तिकं दीर्घादित्वं द्र.।

[e])गस. क्यबन्त- कृत्- प्रस्व. (पा ६, २, १३९)।

[f]) बस. अन्तोदात्तः (पा ६, २, १७२)। सकारान्तं प्राति. नकारान्तमुतेत्यत्र पूर्वमिति पपा.। तेन च तन्मतेऽस्त्रीपरमेतद् भवति (तु. पावा ५, ४, १३१)। एतदभ्युपायेऽपि यत् सा. लोकशब्दयोजनेन द्यावापृथिव्योरस्त्रीत्वं सिषाधयिषति, तन्मन्दम्। पूर्वार्धे तयोर्मातृत्वेनोपचारस्य तेन स्वयमभ्युपेतत्वात्। एस्थि. अस्याऽस्त्रीविषयत्वे सति कैम्पर्यस्य व्यवस्थेयत्वमवधेयम्। अथवा कृतसमासान्तत्वं द्र.। संहितायां तथापि निर्विशेषं संभवान्निगमान्तराऽभावे विनिगमनस्य दुःसाधत्वाच्च। एवं तावदस्त्रीविषयत्वे सत्ययं समासान्तो भवतीत्यस्य लोकमात्रपरत्वमुक्त्वा यथाश्रुत्येव वेदेऽनुशिष्यम्। तन्नाऽत्र समासान्तस्य सावसरत्वं भवतीत्येव तथ्यम्। सकारान्तनकारान्तयोः प्राति.अन्योन्यनिरपेक्षं श्रुत्युपलम्भात् पूर्वोक्तदिशा विनिगमनाऽभावे यतरस्य कतरस्यापि प्राति. इह रू. स्यादित्यस्य सुवचत्वात्।

[g]) बस पूपप्रस्व. (पा ६, २, १)।यद्वा तस. नञ्-स्वरः (पा ६, २, २)। उप. ऊन-वर्चस्- इति बस. द्र.।

[h]) बस. पाप्र. अनु-ऊ(<२अ)प्- +अः (समासान्तः)। इत्येवं व्याकृतौ सत्याम् उप. आदि-विकारः (पा ५,४,७४; ६,३,९८) प्रत्ययस्वरश्च। यत्तु सूत्रे 'ऊद्' इत्यस्य स्थाने 'उद्' इत्यनेनापि पठितेन सता पूर्वसवर्णदीर्घत्वेनाऽभीष्टरूपसिद्धिप्रस्तावे प्रत्युपस्थाप्यमानेऽवग्रहदोषः पाम. अचोदि, तद् यावदुपलब्धि पपा. अवग्रहस्यैवानुपलम्भाद् उप. ह्रस्वदीर्घान्यतरादित्वस्य विनिर्णेतुं दुःशकत्वात् तद्विषयस्योद्दङ्कनस्य नितरामनवसरत्वाद् भग्नभित्तिकत्वं द्र.। पामउ. च दीर्घोच्चारणस्याऽत्यावश्यकत्वाभावस्याऽवग्रहाभावे हेतुत्वमिव प्रदर्श्यमानमपि नादरणीयम्। यथाकामह्रस्वदीर्घान्यतरोच्चारणसद्भावस्याभीष्यमाणस्य सतो नितान्ताऽवग्रहाभावं प्रति कारणतानुपपत्तेरिति यावत्। वस्तुतस्त्वत्र वैयाकरणे प्रकरणे पूर्वसवर्ण-

अनूप्यं[n]– -प्याः काठ २,१; क १,१३; शौ १,६,४; १९,२,२; पै ८,८,८.

¶अनू(नु-उ)प√जीव्, अनूपजीवन्ति मै ३, १०, ४.

¶अनू(नु-उ)प√धा>दधा, अनूपदधाति काठ २१, ४; अनूपदध्यात् तै ५,२,७,२; क ३१,१९. अनूपधीयन्ते मै ३, २, ९[२].

¶अनू(नु-उ)प√नम्, ?अनुपनमति[b] मै ४, २, ९.

¶अनू(नु-उ)प√स्था>तिष्ठ, अनूपतिष्ठन्ते[c] मै ३,२,७; ४,७,९; अनूपतिष्ठन्ते मै ३, २, ३; ९, २; काठ २९, ८; क ४, १.

अनूपा(नु-उप√आ)स्, ?अनूपास्ते[d] पै १६, २१, १०.

¶अनूपे(नु-उप√इ), अनूपयुन्ति[e] तै १, ७, ५, ४.

अनू-राध- अनु√राध् द्र.

अनू-रोह- अनु√रुह् द्र.

अनू(न्-ऊ)र्ध्वभास्[f]– -भासः ऋ ५, ७७, ४.

¶अनू(न्-ऊ)र्ध्वभावुक[g]– कम् तै २, ६, ५, ३.

†अनू(न्-ऊ)र्मि[h]– -र्मिम् ऋ ८, २४, २२; शौ २०, ६६, १.

अनू-वृज्- अनु√वृज् द्र.

अनू-वृत्- अनु√वृत् द्र.

¶अनू(न्-ऊ)षरिह्[i]– -रिहः मै १,६,३.

†अनृ(न्-ऋ)क्षर, रा[j]– -रः ऋ १, ४१, ४; २, २७, ६; –रा ऋ १, २२, १५; मा ३५, २१; ३६, १३; का ३५, ४, २०; ३६, १, १३; मै ४, १२, २; काठ ३८, १३; शौ १८, २, १९; –राः ऋ १०,८५,२३; शौ १४,१,३४.

अनृ(न्-ऋ)च्[k]– -चः ऋ १०,१०५,८.

¶१अनृ(न्-ऋ)च[l]– -चम् मै ३, ३, ५; काठ २१, ५; क ३१, २०. [°च- एक°]

२?अनृ(न्-ऋ)च[m]– -चाय पै ८,११,७.

अनृ(न्-ऋ)च्छ(त्–>)न्ती– -न्तीः पै १, ३६, १-३.

अनृ(न्-ऋ)जु[n]– -जोः ऋ ४, ३, १३.

अनृ(न्-ऋ)ण[o]– -णः मा १९, ११; का २१, १, १०; तै ३, ३, ८, २; ४¶; ६, ३, १०, ५¶; मै ३, ७, ८¶; ४, १४, १७; ¶काठ १३,२; २६,२; क ४०, ५¶; शौ ६,११७,१;२; पै १६, ४९,१०; –णम् पै १६,५०,१; ८; –णाः मै १, १०, २०[२]¶; काठ ३६, १४[२]¶; शौ ६, ११७, ३[४]; पै १६, ५०, २[४०];

दीर्घात्मिकैव मौलिकी शाब्दी प्रवृत्तिः । तन्मूलश्चाप्यवग्रहाभावः । पूर्वोत्तरयोरुभयोर्वर्णयोः स्थान एकस्य समानस्य सत आदेशस्य विभागानर्हत्वात् । एवं च अनूप-, अभीपँ-, द्वीप-, नीपँ-, प्रतीपँ-, इत्येतान्येव प्राति. मौलिकानि सन्तीतरेषां सजातीयनिष्पत्तीनां वृत्तिसामान्योपजनितप्रवृत्तीनां सताम् अन्तरीप-, समीप-प्रभृ. आदर्शस्थानीयानि द्र. । अनूप- इत्यस्माच् च देशात्मकवृत्तिविशेषवतः सतो विवेककरणीव 'अन्वीप-' इत्यस्य साम्यप्रवृत्तितो द्वितीयवर्गानुपातिनी प्रवृत्तिर् द्र. । इह च सर्वत्र उप. विषये २अप्- इति स्याद् √आप् इति वेत्यस्य विनिर्णयः २अप्- इत्येतत्-प्रसङ्गेन यद्र. । अन्ततः, 'द्व्यन्तर' इत्यादिविषयोपनिबन्धः 'द्व्यनवर्णनिपातेभ्योऽपः पूर्वसवर्णदीर्घः', 'समन्तभ्र्योमीत्', 'अनोरदेशे' इत्याकारकः स्याद् इति विमृशां विमर्शाय कल्पताम् (तु. पा ६, ३,९७;९८) ।

[a]) तात्रभविको यत् प्र. स्वरितश्च (पा ४,४,११०; ६,१,१८५) ।

[b]) विकृता इव मूको. भवन्ति (तु. संटि.)। यमु. तु स्वरोऽलक्षणो योगश्च विपरीतार्थकर इति कृत्वा '६अ-सू-(सु-उ)पनमति' इत्याकारकः शोधः विचारकोटौ द्र. ।

[c]) वैतु. टि.२अनु (तै ५,७,९,२)। यदनु तत्राऽसौ नि. कप्र. इष्टो भवति गतिश्च नेष्ट इति ।

[d]) 'अनुवस्ते' इति शौ (११,६,१०) पाभे. । '(अ)नूपस्ते' इति पै. मूको. ज्ञापयति यथा मूलतस्तत्रापि शौ. अभिन्नैव सती श्रुतिः प्रामादिकम् (अनूवस्ते>°नूपस्ते>°नूप°) इत्याकारं वर्णविकारमुपगतेति । एस्थि. मुपा. चिन्त्यकोटिमनुप्रविष्टः सन् शोधार्हः स्यान्न तु वास्तविकस्य कस्यचित् पाभे. सूचक इति ।

[e]) वैतु. टि. २अनु (तै १,७,५,३) यत्रासौ नि. कप्र. ।

[f]) पदविभागः सस्व. च 'अजात-शत्रु-' इत्यत्र द्र. (उप. तु. ऊर्ध्व-ग्रावन्-) । यत्तु सा. 'ऊर्ध्व-भास्-' इत्यस्य उप. अग्निपरत्वमपि विकल्पयति, तच्चिन्त्यम् । नञ्पूर्वत्वे बस. अन्तोदात्तत्वप्रसङ्गात् (पा ६, २, १७२)।

[g]) अ-नग्नंभावुक- इत्यत्र गटि. अत्रापि प्रमाप्येत ।

[h]) तस नञ्-स्वरः (पा ६,२,२) । उप. यद्र. ।

[i]) सस्व. नापूटि. द्र.। उप. ऊष- +√रि(लि)ह्+क्विप्।

[j]) बस. अन्तोदात्तः (पा ६, २,१७२) । उप. √ऋष् +क्सरन् (पाउ ३,७५) । नित्स्वरः ।

[k]) सस्व.नापूटि.द्र.। समासान्ते प्र.विकल्पःउसं.(तु.नाउ.)।

[l]) बस. समासान्तः अः प्र. (पा ५,४,७४) । तत्स्वरेणान्तोदात्तः । समासान्ताऽभावपक्षे तु. नापू. रू. ।

[m]) सांशयिकः पदविभागो भवति विमर्शविशेषसापेक्षः ।

[n]) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र. ।

[o]) 'अनृणः' इति शोधः द्र.(तु.'?अदीप' इत्यत्र सस्थ.टि.)

–णेन काठ १३, ३¶.

**१अनृ(न्-ऋ)त, ता[a]–** -तम् ऋ १, २३, [२२; (२३); १०, ९, ८; (९)]; १०५, ५; १३९, २; १५२, ३; ७, २८, ४; ८, ६२, १२; १०, १०, ४; १२४, ५; †मा ६, १७; †का ६,५,५; ¶तै २, ४, १, २; ५, ५, १; ६; ¶मै १, ९, ३; १०, ११[२]; २, १, ४[२]; ४, २[४]; ४, ७, ५; १४, १७[४]§; ¶काठ ६, ७[२]; ८, ७; ९, ११; १०, ७; १२, ५; ११[४]; १४, ५[३]; २३, १[२]; ६; २७, ४; ७[३]; ८; ३४, ११; ३६, ५[३]; ३७, १[२]; ¶क ४, ६[२]; ७, ४; ३५, ७[२]; ४२, ४; शौ १, १०, ३; २, १५, ५; ४, ९, ७; १६, ६; ६, ६१, २; ३; ७, ९४, ३†; ९, १५, २३†; १०, २, १४; ५, २२; १२, ३, ५२; १८, १, ४†; १९, ४४, ८; पै १, ९, ३; ३३, ३; २, २६, १; ५, ३२, १; ३६, ४; ५; ८; ६, ५, १२; ८, ३, १३; ९, २२, ४; १२; १६; २३; १५, ३, ८; १६, ६०, ५; ८; ६९, १२†; १३०, १; –तस्य ऋ ५, १२, ४; ७, ६०, ५; ६५, ३; ८६, ६; १०, ६७, ४; १००, ७; मै ३, ७, ३¶; शौ २०, ९१, ४†; –ता ऋ २, २४, ६; ७; ७, ६१, ५; ८४, ४; –ताः पै २, ५५, ३; ४; –तात् मा १, ५; का १, ३, १; ¶मै १, १०, १२[२]; २, ४, २; ¶काठ १२, ११; ३६, ६[२]; पै ७, ८, ८; –†तानि ऋ १, १५२, १; २, ३५, ६; मै ४, १४, १०; –ते मा १९, ७७; का २१, ५, ४; मै ३, ११, ६; काठ ११, ३; ३८, १; –तेन ऋ १०, ८७, ११; ¶मै १, ९, ३; ११, ५; २, ४, २; ¶काठ ९, ११; १२, ११; १४, ५; शौ ६, ७१, ३; ७, ७३, २; ८, ३, ११†; पै २, २८, २; ५, ३२, ६; १६, ७, १†; –†तेभिः ऋ ७, १०४, ८; शौ ८, ४, ८; पै १६, ९, ८. [°त- सत्य°]

**†अनृत-देव[b]–** -वः ऋ ७, १०४, १४; शौ ८, ४, १४; पै १६, १०, ४.

**अनृत-द्विष्[c]–** -द्विषः ऋ ७, ६६, १३.

**¶अनृत-पशु[d]–** -शू मै १, १०, १२; काठ ३६, ६[२].

**अनृत-वाच्[e]–** -वाक् काठ ४, १६; शौ ४, १६, ७; पै ५, ३२, ८.

**अनृत-वादिन्[f]–** -नम् पै ९, १९, २.

**¶अनृतवादिनी[g]–** -नी मै ४, ५, २.

**२अनृ(न्-ऋ)त[h]–** -ताः ऋ ४, ५, ५.

**¶अनृ(न्-ऋ)तु[h]–** -तु[२i], –?तुभिः[j] मै ३, ६, ७.

**अनृ(न्-ऋ)तुपा[k]–** -पाः ऋ ३, ५३, ८.

**¶अनृ(न्-ऋ)त्विज्[a]–** -त्विजे काठ २८, ५[३]; क ४४, ५[३].

**अने(न्-एक>)का–** -काम्?[l] पै ६, २, ६‡.

**अनेक-वत्–** -वन्तम् काठ २१, १३.

**¶अने (न्-ए) कादशि (न्→) नी–** -नीम् काठ २२, ७; क ३५, १.

**अने(न्-ए)जत्[a]–** -जत् मा ४०, ४; का ४०, १, ४.

**अने(न्-ए)जित[m]–** -तः पै ९, ६, १२.

---

[a]) तस. नञ्-स्वरः (पा ६,२,२)। उप. यद्र.।

[b]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[c]) उस. क्विबन्त-कृत्-प्रस्व. (पा ३,२,६१; ६,२,१३९)।

[d]) तस. मध्यमपदलोपः सासस्व. च (पा ६,१,२२३)। तु. अनृतेष्टका- माशब्रा ६, २, १, ३८।

[e]) उस. ताच्छीलिक-क्विबन्त-कृत्-प्रस्व. उप. दीर्घश्च (पावा ३,२,१७८; पा ६, २,१३९)। यद्वा 'अनृ-ऋत-वाच्-' इति नञि पूप. बस. अन्तोदात्तः (पा ६, २, १७२)। अस्मिन् कल्पे उप. तस. मध्यमपदलोपः (तु. नापूटि.)।

[f]) उस. णिन्यन्त-कृत्-प्रस्व. (पा ६,२,१३९)।

[g]) स्त्रियां ङीपः (पा ४,१,५) पित्त्वान्निघाते स्वरेऽविशेषः।

[h]) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र.।

[i]) द्वि१ अन्वये क्रिवि. द्र.।

[j]) विकृत इव मूको. असंगतश्च सुपा. द्र.। तत्स्थाने °मितं नाविष्कृतदताभिक्रम्यम् (=न। आविष्कृत-दता। अभि-क्रम्यम्)' इत्येवं शोध-पूर्वकं पठ्येतेति मतं भवति।

[k]) तस. नञ्-स्वरः (पा ६, २, २)। उप. सप्तम्यन्त उपपदे √१पा + विच्।

[l]) '°मिदेकाम्' (>°मंदे°>°मने°) इत्याकारो विकारः मूको. प्रत्येतव्यः (तु. ऋ १०, ५, ६; शौ ५, १, ६)। अन्यथाऽनभीष्टार्थ-प्रतीतिकरत्वे मर्षितेऽप्यवरतो रू. द्वित्ववद् बहुत्ववद्वा स्यान्न त्वेकत्ववदिति दिक्। एस्थि. शोधः सावसरः द्र.।

[m]) तस. उप. √एज्>एजि+क्तः (कर्मणि)। अथवा बस. उप. √एज्+क्तः (भावे)। अथापि वा तस. एव स्याद् उप. च (√एज्>)एज- + इतच् (पा ५, २, ३६)। एवं मूको. वैविध्येनाऽर्थवति सत्यपि यद् 'अनेजातः' इति नितरां दुरूहो सुपा. धृतो भवति तच्चिन्त्यमिति नेव वचोऽन्तराऽपेक्षि।

†अ-न्नेद्य[a]— -०द्य ऋ [८, ३७,१-६]; -द्यः ऋ १, [८७, ४; (२, २३, ११)]; १६५,१२; ५, ६१,१३; मै ४, ११, ३; काठ ९, १८; -द्याः ऋ ६, १९, ४.

अने(न्-ए)नस्[b]— -नः[c] ऋ ६,६६,७; -नसम् तै १, ८, ५, ३; -नाः ऋ १, १२९, ५; ७, २८, ४; ८६, ४; मै ३, १०, १¶.

अने(न्-२ए)व[d]— -वम् काठ १३, ३; -वा शौ १६, ७, ४?[e].

†अने(न्-ए)हस्[b]— -हः ऋ १, १८५, ३; ६, ५०, ३; ८, १८, २१; ३१, १२; ६७, १२; -हसः ऋ ३, ५१, ३; [५, ६५, ५; ८, ४७, १-१८]; ८, [(५,६७,४); १८, ५]; ४५, ११; १०, ६१, २२; मै ४, १२, ३; -हसम् ऋ १, ४०, [४; ३, ९, १; (५, ३४, ७; ८, १०३, ५; ९, ६६, ७)]; ६; [६, ५१, १६; ८,६९, १६]; ८, २२, २; ४९, ४;५०, ४; १०, ६३, १०; खि ३, १, ४; २, ४; मा ४, २९; २१, ६; का ४, ९, ६; २३, १, ६; तै १, २, ९, १; ५, ११, ५; मै १, २, ५; ४, १०, १; काठ २, ३; ६; क १, १९; कौ १, ६२; जै १, ६, ८; शौ ७, ७, १; २०, ९२, १३; -हसा ऋ १, १२९, ९; ६, ७५,१०; मा २९, ४७; तै ४, ६, ६, ४; काठ ४६, १; पै ४, २४,७; १५, १०,१०.

?अनेहा ऋ १०, ६१, १२[f]; शौ ६, ८४, ३[g].

अन्त,न्ता[h]— -न्तः ऋ १, ५४, १; १६४, ३५; ६, २९, ५; १०, १११,८; मा १७,२; २३,६२; का १८,१,३;२५,१०,१०; ¶तै ७, २, ७, २; ८, ५; ३, १, ४; ¶मै १, ९, ७; १०, १८$^{२}$, २, २, ९[?]; ८, १४; ४, ३, १; ४, ३$^{२}$; ६, ६; ¶काठ १०, ८; ११, ४; १२, ४; १७, १०; १९, ९; २६, १; ३०, ३; ३२, ३;३६, १२$^{२}$; ¶क २६,९; ४०,४;४६, ६; शौ ९, १५, १४†; पै १६, ६९, ४†; -न्तम् ऋ १, ३३, १०; ३७, ६; ५२, १४; [१००, १५; १६७, ९]; १६४, ३४; १७९, २; ५, १५, ५; ६, ४३, २; ७, २१, ६; ९९, २; ८, ४६, ११; १०, ५४, ३; ११४, १०; मा २३, ६१†; का २५, १०, ९†; ¶तै २, ४, ११, २$^{२}$; ३; ७, २, ७, २; ३; ८, ६; ४, १५, १†; १८, २$^{२}$†; ५, ८, १$^{२}$;२; ¶मै १,६,१३;९,७;१०, १६; १९; २, २, ९$^{२}$; १३; ४, ४$^{२}$; ५; ३, ६,६; ४, ४,३;५$^{२}$; ६, १; ७, ७; ८, १०$^{२}$; ¶काठ १०, ८$^{२}$; ९; ११, ४$^{२}$; १२, ४$^{२}$; २६, १; २७, १; २९, ४; ६$^{२}$; ३०, २; ३$^{२}$; ५; ३६, १०, १३$^{२}$; ४४, ४; ७$^{२}$; ¶क ४०, ४; ४२, १; ४४, १; ४५, ५; ७$^{२}$; ४६, ५; ६$^{२}$; †जै २, २, ४; शौ ९, १५, १३†; १०, ७, ४२; १२, ३, ३४; १५, ७, १; पै १, ८७, ४; १६, ६९, ३†; -न्ता ऋ ४,१,११; -†न्ताः ऋ ७, ६७, २; ८३, ३; १०, ८२, १; मा १७, २५; का १८, ३, १; तै ४, ६, २, ४; मै २, १०, ३; काठ १८,२; क २८,२; §शौ १, १७, ३; १४, २, ५१; -न्तात् ऋ १, ३०, २२; ३, ६१, ४; १०, ८९, ११; तै ७,

---

a) तस. नञ्-स्वरः (पा ६,२,२)। उप. यद्र.।

b) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

c) वा. इदं रू.प्र१ <अने(न्-ए)न- इति, उप. च एन- इत्यू एनस्- इत्येतत्-सजन्मेतीवाभिप्रैति G. (तु. NW.; यत्तु तत्र सा. अप्येवमभिप्रैतीति समकेति, तदसत्। यनि. द्वि१ क्रिवि. चेत्येवमेव तस्याभिप्रेतत्वात्)। यदपि PW. GW. MW. चेह उप. एन- (=एत-=हरिण-) इत्यनुपदं श्रूयमाणस्य 'अनश्व-' इत्यस्य संस्कारसाम्यादास्थिषत तदपि चिन्त्यम्। अनश्व- प्रभृ. पदानामन्वयान्तरस्य प्राकरणिकतरत्वात् (तु. सा.)।

d) सस्व. द्विपूटि. द्र.। उप. २एव->-वम्,>-वा यद्र.।

e) पपा. 'अनेव' इति ह्रस्वान्तं रू. भवति। तच्चिन्त्यम्। 'एवम्' इत्येतत्-पर्यायभूतस्य दीर्घान्तस्य तृ१ सतः क्रिवि. संगततरत्वप्रतीतेः (तु. सस्थ. २एव->-वा)।

f) 'कारुवः' इत्येतदन्वितं सत् प्र३ द्र. (वैतु. सा. प्र१ [=इन्द्रः] इति [उभयथापि पपा. विसर्गान्तत्वाऽभावः समानं दुर्घटः])। प्र३ इति पक्षे '?*अने(न्-ए)हु-हाः' इति वा स्यात्, 'अनेहुस्-> (मौलिके संपा.) *ऽनेहासः >(उत्तरे संपा.) *अनेहा (=अन्त्याधिकाक्षरच्युतिः) >(उत्तरतरे संपा.) ऽनेहा' इति वा (वैतु. GW. L५५१b,५५९b 'अनेहुसः>*अनेहु अः>अनेहाः'इति)।

g) 'निर्ऋति-' इत्यस्य वि. इति प्र१ सद् '<*अने-(ह>)हा-' इति वा '<अनेहाः (=विसर्गच्युतिः) <अनेहुस्-' इति वा (तु. NW. टि. 'अनेनु-' इति)।

h) √१अम्+तन् प्र.नित्स्वरश्च (पाउ ३,८६; पा ६, १,१९७)। यत्त्वेतत् प्राति. <√अन्त् इति MW. आह तन्न। तदपेक्षया नाधा. असावित्यस्य मतस्य तत्त्वस्य नेदीयस्त्वप्रतीतेः (तु. GW. NW. WW.[१, ६७ उउ.]

२, ७,३¶; ¶काठ ११,४; ३०, ३; क ४६, ६¶; कौ १, ७१‡; जै १, ७,९‡; शौ १८, ३,६५‡; –न्तान् ऋ १, ९२, ११; ४, ५०, १; ५, ४७, ४; ५९, ७; ६, ६२, १; ७, ४५, २;६९, ३; ८, २५, १८; १०, ८, १; २०, ४; ८९, १; १०८, ५; †मै ४, १२, ५; १४, १०; †काठ ९, १९; ११, १३; २५, ६; †क ३९, ३; शौ १४, १, ४५; २०, ८८, १†; पै १५, ५, ६; १६, १०३, ६; १५०, ६; –न्ताय मा ३०, १९; का ३४, ४, १; तै ७, २, २०, १; काठ ४२, १०; –न्ते ऋ ४, १६, २; १०, ३४, ११; ¶तै १, ७,६,४; ६, १, ९, ३; ७, १, ६, ६; ५, ८, १[2]; ¶मै १, ९, ७; २, २, ९[2]; ३, ९, २; ४, २, १; ४, २; ६, २; ¶काठ ७,११; ११,१०; २४, २; २६, ३; २७,४; ३९, ६; ¶क ३७, ३; ४२, ४; शौ २०, ७७, २†; –न्ते मै ४, २, ५; –न्तेन ¶मै २,२,९[2]; ४, ४,३; –†न्तेभ्यः ऋ १, ४९,३; ८, ८८, ५; काठ १६, १३‡; क २५, ४‡; कौ १, ३६७; जै १, ३८, ८; –न्तेषु ऋ ७, ७९, २; तै ५, ७, १०, ३¶; काठ ३७, १६¶; –†न्तौ ऋ ५, ४७, ३; खि ३, २२, ६; मा १७, ६०; का १८, ५, ११; तै ४, ६, ३, ४; मै १, १०, १४¶; २,१०,५; ३, ६, ११[a]; ४,३,१[2]¶; काठ १८,३;¶१९, ९; ¶२२,१३;¶२८,१;३६,८; क २८, ३; ४४, १¶; $शौ ६, ८९,३; १३, २,६; १३; पै २, ३५, ५$; ३, १५, ६$; १६, १०३,७. [°न्त- अन्°,आदित्य°, इडा°, ईर्म°, उप°, तीव्र°, त्रिष्टुभ्°, दूरे°, नि°, बहुल°, भस्मन्°, भिन्न°, मण्डल°, यज्ञ°, विष्ट°, वेदि°, सम्°, समुद्°, संहिता°, सूक्त°]

¶अन्त-ग(त->)ता[b]- -ताः तै १, ५, ९, १.

¶अन्त-नामन्[c]- -मानौ तै ७, ४,८, १[2].

¶अन्त-तस्(:)[d] तै १, ७, ४, ४; २, २, ७, ५; ५, ४, ३, ३;१०, २; ७, १०, ३; मै १, १०, ५[2]; ३, १, १[2]; ४, २; ८, ५[2]; ४, ३, ८; ८, ३[2]; ६[2]; काठ १८, १९[2]; २१, ११[2]; २२, १; २३, ९; २४, ४; २५, १०; ३२,३; ३४, १[6]; ३५, २०[2]; क २९, ७[2]; ३६, ६; ३७, ५; ४०,३; ४८, १८[2]; $शौ १४, १,६४.

१अन्त-म,मा[e]- -¶मम् तै ५,१,१, ३; ६, ३, ९, ५; मै १, ५,१३; काठ ३५, १६; क ४८, १४; –मस्य ऋ ३,५५,८; –¶माः तै ६, ४, २, ३[2]; मै ४, २, ७; –¶माम् तै ५,१,१,३;–†मेभिः ऋ १, १६५, ५[f]; मै ४, ११, ३; काठ ९, १८.

अन्त-वत्[g]- -वत् शौ १०, ८,१२; पै १६, १०१, ८.

√अन्ति[h]

अन्तक[i]- -क[j]? पै २, ८५, १; –कः शौ ६,४६, २; ८,१३, ७; १६, ५, २; ४–७; ९; १९, ९, ७; पै १६, १३५,३; –कम् ऋ १, ११२, ६; –काय मा ३०, ७; १८; ३९, १३; का ३४, १, ७; ३, ५; ३९,९, ३; शौ ८, १, १; पै १६, १,१.

अन्तक-द्रुह्[k]- -ध्रुक् ऋ १०, १३२, ४.

१अन्त्य,न्त्या[l]- -न्त्यः तै १,७,९,१; ४, ७, ११, २; मै १, ११, ३; काठ १८, १२; क २९, १; –न्त्या काठ १०, ८; –न्त्याय काठ १४, १; –¶न्त्ये तै २, २, ७, ५; काठ १०, ९[2].

---

यतो मूलतः '√२*अन्' (यद्र.) इति प्रकृत्यंशतया 'त' इति च प्रत्ययांशतया निर्धार्यत्वेनोपतिष्ठेयाताम्)।

a) 'अन्तौ' इति सुपा. अन्तोदात्तश्चिन्त्यः।

b) सतस. पूपप्रस्व. (पा ६, २, २)। उप. यद्र.।

c) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

d) तसिः प्रत्ययः (पावा ५, ४, ४४)। तत्स्वरः।

e) पपा. अवग्रहाभावः (तु. चरम्-, परम्-, मध्यम्- प्रभृ.)। मः प्र. उसं. (पावा ४,३,८)। तत्स्वरः। भा. त्व् अन्तिम्->अन्तम्- इति च्छान्दसः (=प्राकृतिकः) वर्णविकारो वा स्यात् प्र.(डिमचः) आदिलोपो वा स्यादिति विकल्प्य 'अन्तिक-+तमप्' इत्येवं प्राति. तादिलोपमुपाश्रित्य विकल्पान्तरं ब्रुवाणोऽपार्थगौरवश्रद्धः स्याद् अन्ति- इत्यस्य प्राति. (यद्र.) 'म' प्र. च यनि. पृथक् सुकल्पत्वात्।

f) अस्य रूपस्य प्रवृत्तिनिमित्तान्तरमुपजीव्याऽर्थान्तरवृत्तित्वं स्यादिति वैश. विचारसहं द्र.।

g) मतुपः पित्त्वान्निघाते स्वरः पूर्वाऽवस्थः।

h) तत्करोतीत्यर्थे णिजन्तो नाधा.।

i) ण्वुलि लित्स्वरः (पा ३,१,१३३;६,१,१९३)।

j) नितरां दुरूहस्य पा. मध्ये स्थितं भूयस्तरविमर्शापेक्षिस्वरूपं सांशयिकमेतद् रू.।

k) उस.क्विबन्त-कृत्-प्रस्व. (पा ३,२,६१;६,२,१३९)।

l) तात्रभविकेऽर्थे यत्। आद्युदात्तः (पा ६,१,२१३)।

१आन्त्य[a]– -न्त्याय मा ९, २०[b]; १८, २८; २२, ३२[२]; का १०, ४, १[b]; १९, ९, १; २४, १९, १.

आन्त्यायन[c]– -नः तै १, ७,९,१; ४,७,११,२; –नाय मा ९, २०; १८, २८; का १०, ४, १; १९, ९, १; २४, १९, १.

२आन्त्य[d]– -न्त्यः मै १,११,३; काठ १८, १२; क २९, १; –न्त्याय काठ १४, १.

†२अन्त(न्°-त)म,मा[e]– -मः ऋ ३, १०,८; ५, २४,१; ६,[४५,३०; ८,५, १८]; ४६, १०; ८, १३, ३; ४५, १८; ६४, ९; १०, १००, ६; मा ३, २५; १५, ४८; २५, ४७$; का ३, ३, १७; १६, ५, ३०; २७, १५, २$; तै १, ५, ६, ३; ३, १, १०, ३$; ४, ४, ४, ८; मै १, ५, ३; १०; २, १३, ८; काठ ७, १; ८[२]; क ५, १; कौ १, ४४८; २, ९८; ४५७; जै १, ४७, २; ३, ९, १२; ३४, १५; शौ २०, ८३, २; –मम् ऋ ८, ३३, १५; –मस्य ऋ १, २७, ५; कौ २, ८४९; जै ४, १२,१; –मा ऋ ७, २२,४; कौ २,११४८; –माः ऋ ६,५२,१४; कौ ३, ३, ९; –मानाम् ऋ १, ४,३; कौ २, ४३९; जै ३, ३३, १३; शौ २०, ५७, ३; ६८, ३.

अन्तः °कोश-, °परिधि-, प्रभृ. नाउउ. द्र.

अन्त(न्-तँ)र्(>:,श्)[f*]– ऋ १, २३, १९; [२०; १०, ९, ६]; २४, ७; ५४, १०; ६७, ५; ७०, २; ९५, १०[g]; ९६, ५[h]; १०५, १; ११६, २४; १३०, ३; १३२, ३[i]; १३५, ९[j]; १५७, ५; [१५९, ४; १०, १७७, १]; १६१, ४; १६३, ४; १६४, ९; १७; [३१; १०, १७७, ३]; ३२[k]; ३३; १६८, ५; १७३, ३[g]; १८०, ३; १८२, ६; २, १२, ३; २७, ३[i];

---

a) गर्गादिषु उसं. अपत्येऽर्थे यञ् प्र. ञित्स्वरश्च (पा ४,१,१०५; ६,१,१९७)। समानार्थीयो भिन्नशाखीयोऽन्तोदात्तः (तु. मै. काठ. क.) एउ. द्र.।

b) अत्र पपा. उ. म. च 'अन्त्याय' इत्येवमुशन्तः शुक्लयजुःसम्प्रदायानुरोधाद् भग्नभित्तिका एव (तु. सा. [का. इत्यत्र] BC. च)।

c) यञन्ताद् गोत्रापत्येऽर्थे फक् प्र. कित्स्वरश्च (पा ४, १, १०१; ६, १, १६५)। यत्तु म. (मा १८, २८) अन्त्य-अयन- इति समुदितशब्दद्वयात् तात्रभविकेऽर्थे प्र. इत्याह तत् पपा. विरोधाचिन्त्यम्।

d) शिवादिषु उसं. अपत्येऽर्थे अण् (पा ४,१,११२)। तत्स्वरः। समानार्थीय एव मा. का. शाखयोर् आद्युदात्तः एपू. द्र.।

e) पपा. अवग्रहाभावो विमर्शार्हः (वैतु. शं-तम-)। अत्र √२*अन्>२*अन्- इत्यस्य स्थाने अन्तिकं*- इति पूप. भवति तादिलोपश्चेति प्राञ्चः (पावा ६, ४, १४९)। अन्त- इति पूप. भवतीत्यर्वाञ्चः (तु. PW. प्रभृ.)। तमप् प्र. सर्वसंमत इति।

f) ३*अन्+(√तॄ>)*तर्-(यद्र.) इत्येवं गस. विजन्त-कृत्-प्रस्व. (पा ६, २, १३९; तु. WW १, १२६; वैतु. √अम्+[त्]अर्[अन्] प्र. [पाउ ५, ६०] नित्स्वरश्च [पा ६, १, १९७])। व्यु. तु. टि. अनीक-, अन्तम-, अन्तर-,। वाच्यस्याऽधिकरणताऽनुरञ्जितत्वस्वाभाव्यात् क्रियया तदत्यन्तसंयोगप्रद्योतनार्थं मूलतः द्वि. प्रयोगस्य सावसरत्वे सति (पा २, ३, ५) वस्तुतः द्वि१ एव सतो रू. सामान्येनैतत् क्रिवि. इत्य् अव्य. इति ग. इति कप्र. इति चोत्तरोत्तरं बुद्धयः समजनिषत (तु. पाम १,४,६५)। एस्थि. एउ. (अन्तरा) एतदीयं प्राचीनं तृ१ एव सद् अव्य. इत्य् एतद्वद् दिक्कालाधिकरणताऽनुरञ्जितवाच्यप्रधान-शब्दान्तरवत् प्रसिद्धिमगात् (तु. *पुर्->पुरा, दक्षिण->दक्षिणा, *पश्च->पश्चा, उत्तर->उत्तरा, मध्य->मध्या) एवम् द्विउ. अप्यस्यैव स१ इति द्र. (वैतु. GW. *अन्तरि>अन्तर् इत्यन्त्यलोपत इव परिणामं सम्भावयन् सन् वस्तुतो जातकमात्रं जनकीयमान इत्युपेक्ष्यः)।

g) सप्तम्यर्थोपबृंहणः कप्र. द्र. (वैतु. सा. GW. प्रभृ. 'अन्तश्√चर्' इति)।

h) 'द्यावाक्षामा' इत्येतदभिसम्बद्धम् अव्य. (वैतु. GW. SIM. 'अन्तर्विभाति' इत्येवमपलक्षणतां सौवरीमवगणय्योपसर्गीयमाणौ)।

i) अनुपदश्रावितदर्शनक्रियां प्रत्य् अधिकरणत्वस्य विवक्षकः द्र. (वैतु. सा. प्रथमे स्थले 'द्विताऽन्तर्' इत्येवं संबन्धुकः, PW. GW च 'अन्तःपश्यन्ति' इत्येवं योजुकौ [इह कर्मणोऽन्तर्दर्शनं नेष्टमिष्टं च कस्यचिदन्यस्याऽन्तस्तत्कर्मीभूतवस्तुदर्शनमिति विवेकः यनि. विनिगमकः])।

j) 'अन्तः (√१पत्>)पतयन्ति' इति योगं संभावयन् GW. विमृश्यः।

k) सप्तमीप्रवचनः कप्र. द्र. (वैतु. GW. 'अन्तः...परिवीतः' इति)।

८; ३५, ७; [४०, २; ६, ७२, ४]; ३, १, ३; १४; ६, ४; ३८, ३[a]; ४४, ३[b]; ५४, ९; ५५, २; ५; [९[b]; १०, ४, २]; १२; १५; ५८, १; ४, १, ७[c]; [१३; ५, ३१, ३]; १३, ४; १६, १७[d]; १८, ४; २७, ४[d]; [(१, १२४, १०) ५१, ३]; ५८, ६; ११[२]; ५, ५९, २; ६२, ५; ६; ६, ४, ४; ९, ५; ११, २; २७, ७[b]; ४३, ३; ४४, २४; ५८, ३; ६६, ४; ७२, ४; ७, २, ३; ११, ३; १२, १; १८, २४;

७१, ५[e]; ८६, २[f]; ८७, २; ५[g]; १०४, ३; ८, २, ४; २९, २; ३; ३९, १[h]; ४८, २; ६८, १८; ७२, ३[i]; १००, ९; १०१, ९; १३; १४; ९, १२, ५; ७; १५, ३; ६७, २३; ६९, २; ७२, ७; ७३, ८[j]; ७८, ३[k]; ८२, ४; ८६, ४; ८७, ८; ८९, ५; ९६, ७[l]; १०७, १; १०८, ६; १०, ५, ५[m]; ८, ७; २७, ९; १७[b]; ३०, ४; ३९, १३; ४२, ८; ४५, ३; ४[n]; ४६, ६[o]; ४८, १०[२]; ६१, १; ७९, ३; ८०,

३; ८६, १५; १०१, ११[b]; १०६, ११; १२४, ४; १२५, ७; १६२, ४; १७३, १; १७७, २; १८३, ३; १८९, २[b]; खि ४, ४, ३; ५, ३५; ११, २; ३; ५, १६, ६; मा ३, ७†; ४, १२; ८, २५; ३०[p]; ९, ६†; १०, ७; ११, ३१; १२, २†; ६†; ११[q]; १५[r]; १६; २०†; २१†; ३३†; ३९; १३, ३८†; †१७, ७०; ९४; ९९[२]; १९, २; ८७; ९४; २०, १९; २३, ५१[२]; ५२[२]; ६३; २९, १५†; ३१, १९[g]; ३२, ४; †३३, ८५; ९०;

---

a) अन्तर्धापनार्थस्य प्रसङ्गाऽभावाद् 'अन्तर्···धुः' इत्येवं योजुकः GW. चिन्त्यः ।

b) सप्तम्यर्थोपबृंहणः कप्र. (तु. सा.; वैतु. PW. प्रभृ.) 'अन्तश् √चर्' इति ।

c) सप्तमीवचनः कप्र. (वैतु. GW. 'अन्तःपरिवीतः' इति [एतदीयाऽयुक्तत्वं स्वरतोऽपि सुवेदमिव]) ।

d) सप्तम्यर्थानुगामी तदुपबृंहणः कप्र. (तु. सा. PW.; वैतु. GW. अन्तः √१पत् इति) ।

e) निधानक्रियाधिकरणोपबृंहणार्थम् अव्य. (तु. सा. PW.; वैतु. GW. 'अन्तः···नि···धातम्' इति) ।

f) 'भुवानि' इत्युत्तरेण व्यवहितेन क्रिप. गतियोग इति PW. प्रभृ. आहुः । तन्न । अन्तर्भावस्य गस. सतोऽन्तर्भाव्यस्य सत्तायामन्तर्भावुकस्य सत्तायाः पार्थक्येनाऽभिव्यक्त्यभावे सति विलयानर्थान्तरत्वेन प्रसिद्धेरिह च तथाविधस्य स्तोतृ-सत्ताया देवता-सत्तायां विलयस्य प्रसङ्गाऽश्रुतेः । यदपि सा. स्तोतुर्देवताभिसंबन्धेनाऽऽन्तरिकीं सतीमपि पृथग्भूतां स्थितिं स्पष्टं भाषमाणोऽप्यन्तर्वर्तित्वमात्रे गस. अनुमन्वान इव लक्ष्यते, तदपि तदुपष्टम्भकश्रौतप्रामाण्यानुपलम्भादेवाऽप्रमाणं द्र. ।

g) सप्तम्यर्थोपबृंहणः कप्र. ।

h) 'उभे विदथे' इत्येतदन्वयी कप्र. (वैतु. सा. विदथे इत्येतत् सर इत्येवं भ्रान्तः सन् द्यावापृथिव्याक्षेपशरणः; PW.प्रभृ. च 'अन्तश्चरति' इत्येवमनुपपन्नस्वरमाख्यातं साधुकाः सन्तो दूत्यं √चर् इत्यस्याः साध्व्या वाचोयुक्त्याः स्थाने पुनरुक्तदुष्टामिव सतीं दूत्यम् अन्तश् √चर् इत्याकारिकां वाचोयुक्तिं प्रवर्तयितुकामाः) ।

i) 'जने' इत्यधिकरणार्थोपबृंहणः कप्र. (तु. सा. PW.; वैतु. GW. MW. 'अन्तरिच्छन्ति' इति) ।

j) सप्तम्यर्थोपबृंहणः कप्र. (वैतु. PW. GW. MW. 'अन्तरादधे' इति [स्वरतोऽनिष्टमर्थतोऽसंगतं च] ब्रुवन्तौ) ।

k) अव्य. क्रिवि. (वैतु. GW. MW. च 'अन्तर् √आस्>अन्तः···आसीनाः' इति) । अप्सरसां सोमाभिमुख्येन चरणे तदीयस्य मध्यवर्तित्वस्य तन्मुख्यसाधकत्वेन शिश्रावयिषितत्वान् मध्यात्मकस्याऽर्थस्य प्राधान्येनैव श्रुतिरुपयुज्येतेति (तु. सस्थ. टि. अभि) ।

l) तुटि. ऋ १, १३२, ३ (तु. सा. PW.; वैतु. GW. 'अन्तःपश्यन्' इति विफलद्वैस्वर्यानुमानः) ।

m) सप्तम्यर्थोपबृंहणः कप्र. (वैतु. GW. 'अन्तर्येमे' इति) ।

n) आधेयप्रधानम् अव्य. (तु. माशब्रा. ६, ७, ३, २ प्रभृ. PW.; वैतु. GW. [अन्तर्- आ √भा इति ह्युपसृष्टयभिमानः]) । इह आ √भा सकर्मकः (तु. ऋ १, ४९, ४; २, ४, ६; ३, २५, ३; ४४, ४ प्रभृ., गपू. माशब्रा.; वैतु. सा. भा. उ. म. च) ।

o) नापूटिदि. अव्य. (तु. वें. सा. PW.; वैतु. GW. 'अन्तः···नि···सीदत' इति) ।

p) 'आनञ्ज' इत्याख्यातिकं योगं मन्यमानाः PW. प्रभृ. चिन्त्याः (तु. तै ३, ३, १०, २ यत्र तदेवाऽऽख्यातमनुपसृष्टं क्रियताचित् पाभे. अन्वितं भवति) ।

q) अन्तर्भावुकस्य चाऽन्तर्भाव्यस्य च सत्तयोः पृथक् सत्योरेवाऽन्तर्वर्तित्वमात्रस्य विवक्षितत्वादुत्तरेण 'अभूः' इति क्रिप. गस. न भवति (इह तुटि. ऋ ७, ८६, २) ।

r) तुटि. ऋ १, ९६, ५ ।

३४, २; ३; ३७, १७†; ४०, ५; का २, ३, ५; ३, १, ७†; ४, ५, ४; ९, ४, ३; ५, ३; १०, २, ३†; ११, ४, ३; १२, ३, ४; १३, १, २†; ७†; १२[a]; १६; १७; †२, ३; ४; ३, ४†; १०; १४, ४, १†; १८, ६, ६†; †१९, १, ७; १२[२]; २१, १, २; ६, ८; १५; २२, १, ४; २५, ९, ७[२]; ८[२]; १०, १०; ११; ३१, ३, ४†; ३५, २, ३; ३, ४; ३७, ३, ४†; ४०, १, ५; तै १, ३, †१४, २; ७; ४, ४५, २; ५, ३, १†; ७, ७, २†; ८, १२, २; २२, ५†; २, १, ११, ५†; ४, १३, १¶; ५, २, ३¶; ४, १, ३, २; ९, ३[२a]; १०, ५; २, १, २†; ४; ५†; †२, १; २; ३, ३; ९, ६†; ३, ११, १; ४, ११, ४; ६, ५, २; ७, २†; ७, १२, ३; १३, २; ५, ७, ९, १; ६, १, २, १¶; ६, ३, ४[२]; ७, ५, ८, १¶; मै १, ३, ३९; ६, १[२]; †; १२¶; †११, १; ६; २, १, ९; १२¶; ४, ३[५]¶; ६, ८; ७, ३; ८[५]; †[३]; ९; १०; १७; १२, ३; १३, ५†; १०[a]; १३[३]; ¶३, २, १[४]; †[२]; ६, १; ६[३]; ८, ३; ८[४]; ११, ७†; ४, ५, ८¶; ९; ६, ५[२]¶; ८, ५; ९, ६†; १२?[b]; १०, ४†; ११, २†; १२, ५†; १३, ४; १४, ५†; ९; १४†; १६†; काठ २, १४; ४, १३; ५, ३; ७, १२; १३†; ८, १७; ११, ६; १२; १३†; १३, १४†; १४, ६†; १५, ६; १६, ३; ८[५]; †[३]; ९; १०†; १६; १८, ४; १५[c]; १९, ४; २८, १?[d]; ४[e]; ३१, १४; ३५, ३‡[f]; ४; ७; ३६, १५; ३७, ९; १४; १८†; ३८, ३; ५; †३९, १०; १३; ४०, ३[३]; ६†; ७[३]†; क ३, ११; ६, २; ४†; ९¶; २५, १; २९, ४; ३०, २; ४४, ४; ४८, ४†; ५; ९; †कौ १, ४१७; ५१२; ५८५; २, २९५; ५५०; ५५२; ६१९; ६५४; ६६३; ७२१; ७२७; ३, ४, १; ५, ५; †जै १, ४०, ९; ५३, २; ५९, ८; २, २, ९; ६, ४; ३, २४, ११; ४०, २; ४३, ६; ८; ५०, ६; ५४, ४; ५५, ४; ५९, १३; १९; ४, १६, ३; ५; शौ १, २, ४[g]; ४, ४; ६, २†; १३, ३; ३०, ३; २, १०, ५; ३१, ५; ३२, १; ३, ६, ३; १०, ४; २०, ८; २१, १; २[२]; ७[२]; २२, ३; ४, ८, ७; १०, ७[a]; ११, ३[a]; २६, ५; २८, ५; ३०, ७†; ५, ११, ८; ९; ३०, १६[h]; ६, १, २; ३१, २†; ७३, २; ८०, ३; ८७, १[i]; १३२, १–५; ७, ३७, १[j]; ४४, १; ९२, १; ८, १, ११; ४, ३†; ९, ११; ९, ३, ६; २२; १३, ७; ९; १४, ९[a]; १५, १०; ११; १२†; १०, २, ७; ५, १५–२१; ७, १०; ८, १३[a]; २८; १०, २५; २८[k]; ११, २, ११; २४; ६, २०[l]; ७, ३[m]; ९, १; ६; १०, २; ६; १२, १, १९; ३७; ६०; २, ३३; १३, १, १; २; ४०[l]; २, ३०; ३, १५; २०; १४, १, ३७; १७, १, ८; १३; १८, ४, ८९; १९, ३, २; २७, १०; ४८, १; ७२, १; †२०, ३४, ३;

[a]) सप्तम्यर्थोपबृंहणः कप्र. द्र. ।

[b]) नापूटिदि. कप्र. (तु. संटि. यत्र मै. तैआ. च मूको. वैकृतं परिच्छिन्नं भवति)। इह 'मो ष्वस्त्यमस्माँस्तमस्यन्तराधाद्' (=मा । उ । स्वस्त्यं [श्वस्त्वं वा तु. संटि. पपा.] । अस्मान् । तमसि । अन्तः । आधात्' इति पदानि) इत्येवं मूलतः सतस्त्रैष्टुभस्य पादस्य भूयानयं स्वरूपतिरोधापको विकारः द्र. ।

[c]) 'समुद्रे···अन्तः' इति संवन्धः (तु. मा १८, ५५; वैतु. SIM. 'अन्तः···देहि' इति नितरामुपेक्ष्यः)।

[d]) सुपा. संदिह्यते (तु. क ४४, १ [संटि. च], मै ४, ६, ६ यदनु 'अन्तम्' इत्येव प्राकरणिकमाभाति न यनि.)।

[e]) 'अन्तः····नयति' इत्याख्यातिकं योगमिच्छुः SIM. चिन्त्यः ।

[f]) सप्तम्यर्थे कप्र. । ऋ (२, ३५, १३) विशिष्टः पाभे. ।

[g]) इह द्वि.=ष., तदभिसंबद्धश्च कप्र. (=मध्ये, तु. सा.)। यत्तु W. MW.? च 'अन्तस्तिष्ठति' इति योगमाहतुः, तन्न । ऐकपद्ये युथा-योगे तिङ्-निघाताभावे गतीयितस्यास्य निघातप्रसङ्गात् (पा ८, १, ३६; ७१)। न चात्र पराभिमतस्तिरोधापनार्थः संगच्छेत । मध्यवर्त्तित्वस्य शक्यमात्रस्याऽर्थस्य प्राकरणिकत्वादुपपत्तेः ।

[h]) आधिकरणिकवृत्ति अव्य. (वैतु. WI. 'अन्तर्वेदति' इति ।

[i]) तुटि. मा १२, ११ ।

[j]) हृदोऽधिकरणत्वस्य प्राधान्यश्रुतेस्तत्प्रत्यायकः कप्र.। स्वानभिमतः पराभिप्रायः द्विउटिदि. द्र. ।

[k]) सप्तम्यर्थोपबृंहणम् अव्य. (वैतु. WI. 'अन्तर्दीद्यति' इत्युपसर्गभावमाख्यायुकः)।

[l]) सप्तम्यर्थोपबृंहणः कप्र. (वैतु. WI. 'अन्तश्√चर्)।

[m]) उत्तरेण √कृ इत्यस्य तिङ्वृत्तेन युयोजयिषया गतीभावः पराभिमतः (तु. WI) नेष्टः । गर्भीकरणे न तु गर्भस्याऽन्तःकरणे श्रुतिस्वारस्याऽनुगमात् । एस्थि. वा. क्रिवि. द्र. ।

१२$; ४८, ५; ५६, ६; ८९, ८; ९६, १४; १२६, १५; १३३, ६$; पै १, ८७, ३; १०४, ४; २, १४, १;१५,५; ३१, ६; ७७, ३; ३, ३, ४; १२, १[२]; २[२]; ७[२]; १५, ४; १८, ४; २५, ५; ३४, ९; ४, २, ४; २५, ७; ३६,४; ३७, ३; ५, १०, ९[a]; १५,३; २२,३; ६, ७, २; ५; १०, ८; १२, ६; २१,१; ७, ३, ११[२]; ११, ५†; ८, १, ८; ९; †१३, ६; ११[२]; †१४, १०; ९, १४, ६; २५, २; ९; १०, ७, १०; ९[b], १; १३, ४, ४; †७, ३; १२; १५, २२, ४; १६, २, १; ९, ३†; १९, १[२]; २२, १०[c]; ३९, ६; ४१, ४; ६२, ४; ६६, ९†; ६८, १०†; †६९, १; २; ७४, ७; ९; ७५, २; ८२, १; ६; ८५, २; ६;१०२,२[a]; १०३,५; १०५, १; १०६, ४; १०९, ५; ८; १२९, १–१०; १५०, ७; १५१, ५; १०; १५३, २; १५४, ४.

अन्तः(<र्)-कोशु[d]– -शम् शौ १, १४, ४; पै १, १५, ४.

अन्तः(<र्)√ख्या[e], अन्तुः… अुख्यत् ऋ ५, ३०, ९; अन्तुः …ख्यः ऋ १, ८१, ९.

¶अन्तः(<र्)-परिधि[f]– -धि काठ ३५, १८; क ४८, १६.

*अन्तः(<र्)-पर्शु[g]-
अन्तःपर्शव्यु[h]– -व्येन मा ३९, ८; का ३९, ६, १.

अन्तः-पात्रु[i]– -त्रे शौ ११, ११, १५.

अन्तः(<र्)√१पा

अन्तः-प्रेयु[j]– -यम् ऋ १०, १०७, ९.

१अन्तुः(<र्)-पार्श्वं[k]– -र्श्वेन तै १, ४, ३७, १.

२*अन्तः(<र्)-पार्श्वु[g]-
अन्तःपार्श्व्यु[l]– -र्श्व्यम् मा ३९, ९; का ३९, ७, १.

¶अन्तर(र्-अ)ग्निं*[g]– -ग्निः काठ ८, ४[m]; क ६, ९.

¶अन्तर(र्-अ)वचारिन्[n]– -णम् तै ५, ४, ३, ४.

¶अन्तरा(र्-आ)त्मन्[o]– -त्मन् मै १, ९, ३; काठ ९, ११.

¶अन्तरा(र्-आ)त्मं*[p]– -त्मम् काठ २८, ५; क ४४, ५.

अन्तर्- आ√धा
¶अन्तुरा(र्-आ)धान[q]– -नाभ्याम् तै ६, ५, ९, २.

---

a) सप्तम्यर्थोपबृहणः कप्र. द्र. ।

b) तुटि. शौ ५, ३०, १६ ।

c) तुटि. शौ ११, ६, २० ।

d) तस. मध्यमपदलोपः सासस्व. च (पा ६,१,२२३)। सा. भाष्येऽसमस्तं पदद्वयमिति प्रतीतिर्मा भूत्। स्वर-विरोधप्रसङ्गात्।

e) गतिरिति वें. PW. प्रभृ. च (वैतु. सा. यन्मते अव्य. क्रिवि. इवाऽन्वितम्)।

f) अस. 'पारे मध्ये' (पा २, १, १८) इत्यत्र पूप. उसं. सासस्व. (पा ६, १, २२३)। पाप्र. अस्माद् अनदन्ताद् अस. यनि. सुवर्हता-चिह्नस्याऽनुपयोगः सुव्-लुग्विषयत्वात्। एवं तावदर्धजरतीयत्वमापतेद् अदन्तस्य अस. सुवर्हत्वं स्यान्नाऽपरस्येति। मा भूदेवम्। इह सर्वस्य अस. सुवर्हत्वं समानमास्थाय क्रिवि. अन्वय इति कृत्वा तस्य न. द्वि१ रू. सम्पाद्यते। तेन यथायथं सुपोऽम्भावश्च लुक् च (पा २, ४, ८२ उउ.) प्रवर्त्तते। एस्थि. अपि यददन्तस्यैव अस. तृ. पं. स. च रूपसम्पत्तिर्भवति नापरस्येति तत् प्राग्वक्तृप्रवृत्त्यधीनं वाचोयुक्तिवैशिष्ट्यं यथोपलम्भं निर्देष्टव्यं न पर्यनुयोज्यम्।

g) सस्व. अन्तः-कोशु- इत्यत्र टि. द्र.।

h) तात्रजातिकेऽर्थे यः प्र. उसं. (पा ४, २, ९४)। प्रत्ययस्वरः।

i) अस. सासस्व.। इह 'तृतीया-' (पा २, ४, ८४) इति सप्तम्या अम्भावाऽभावविकल्पो भवतीति विशेषः द्र.। समासाभावमभिप्रयन्निव यत् सा. विकृतोपलम्भः प्रतीयेत तन्नाऽऽद्रियेत। यथोपलम्भं स्वरत ऐकपद्यस्याध्यवसेयत्वात्।

j) गस. यदन्त-कृत्-प्रस्व. (पा ६,१,२१३;२,१३९)।

k) पाभे.भवति (तु. अन्तःपर्शव्यु-)। यथा अन्तर्-धा-प्रभृ.समासेष्व् अन्तर् इत्यस्य निपात-भावोऽभिनिष्पन्नतमो भवति तथेहापि भवतीत्यभिसन्धाय अन्तर्गतार्थे तत्-प्रयोग इति कृत्वा मध्यमपदलोपः प्रास. वा स्यात् तदभि-निर्वृत्तपदार्थान्तरार्थप्राधान्ये समानाधिकरणः बस. वा स्यात्। एवं चोभयथा पूपप्रस्व. समानमुपपद्येतेति दिक्।

l) निष्पत्त्यर्थं तु. अन्तःपर्शव्यु-।

m) विसर्गरहिते मुपा. शोधोऽपेक्षितः।

n) गस. कृद्-उपप्रस्व. (पा ६, २, १३९)। उप. अव√चर्+ताच्छीलिको णिनिः।

o) अस. सासस्व. (पा ६,१,२२३)। तु. नाउ.।

p) सस्व. नापूटि. द्र.। समासान्ते टचि टेर्लोपः अमादेशश्च (यक्र.पा ५,४,१०८;६,४,१४४;२,४,८३)तु.नापू.।

q) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

¢अन्तरा(र्-आ)हित[a]– -तः ऋ ९. ७०, ५.

अन्तर्-आभर[b]– -रः ऋ ८, ३२, १२.

¶अन्तरि(र् √इ),अन्तरेति तै २, ६, ९, ८; ३, १, ७, २[२]; ३[२]; २, ३, ७; ५, १, १०, ४; २, ८,४; ७, ८, १;२; ६, १,८,५; ४, ६, ३; ६, ३,३; मै ४,८,४; काठ ९, २[२]; १४, ९; २०, ४; २३, ९; २५, ९; २९, ३; ३७, ११; क ८, ५[२]; ३१, ६; ३६, ६; ४०, २; ४५, ४; अन्तर्रेति तै ५, ७, ८, १; ६, १, ५, ५; अन्तरितः तै ३, ५, ९, १; अन्तर्यन्ति तै ६, ४, ११, २; ७, १, ३, १[२]; ३; मै १, ७, ४; काठ २७, ९; ३१, १२; क ४७, ११; अन्त-र्यन्ति तै ५, ३, १, १; ७, १, ३, १[३]; २[२]; ३; मै ३, ७, १; ४, ५, १; अन्तः···यन्ति मै ४, ६, ४; अन्तरायन् तै २, ६, ८, ३; ६, ५, ६, ३; मै ३, ३, ४; अन्तरियात् तै ५, ६, १०, २; ६, १, ४, ५; ५, ४[२]; मै १, ०, ३[२]; ४; ३, ७, २; ४, ६, १; काठ ९, १[४]; २[२]; २२, ४; २३, ९; २६, ३; २७, ५; २८, ८; क ३६, ६; ४२, ५; ४४, ८; अन्तरियात् तै ६, १, ५, ४; मै १, ७, ३[२]; ४; ३, ७, २; अन्तः···इयात् मै ३, ७, १०.

अन्तरेष्यामि तै ५, ७, २६, १; मै ३, ७,८; अन्तरेष्यामि मै ३, ७, ८.

अन्तरय-, अन्तराय[c]- अन्°

§अन्तरि(र्-इ)त,ता[d]– -तम्, -ताः का १,८,३; तै १,१,८,१; [°त- अन्°]

अन्तरि(र्-इ)ति[e]– -त्यै मै ३,७, ८; ८, ८[२]; १०, १[२]; ४, ३, ४. [°ति- अन्°]

अन्तर् √ई[f], †अन्तरीयते ऋ [१,३५,९; १६०,१]; ३, ३,६; ४, ८, ४; ९, ८६, ४२; मा ३४, २५; का ३३, १, १९; काठ १२, १५; अन्तः···ईयते ऋ ३, ३, २; अन्तरीयसे ऋ ४, २, ३; अन्तः···ईयसे ऋ २, ६, ७; अन्तः····ईयसे ऋ ४, २, २;७, ८.

अन्तर् √गा, †अन्तः···जिगाति ऋ ७, ४, १[g]; मै ४, १४, ३; काठ ७, १६.

अन्तः···गात्[h] ऋ ३, ३१, २१; ¶अन्तरगाम् मै ४, ७, ६; काठ ८, १३; २९,७; क ८, १; ४५, ८.

¶अन्तर्-गो(ष्ठ->)ष्ठ्य[i]– -ष्ठ्यासु मै ४, २, ११.

अन्तर्-दाव[j]– -वे शौ ६, ३२, १.

---

[a]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)। गति-द्वययोगः द्र.(वैतु.वें.सा.'अन्तर्···हितः'इति'आ···हर्यते' इति च;GW. 'आ···हितः'इति, अन्तर् अव्य.इति च)।

[b]) प्रथमम् उप. (<गस. कर्तर्य् अचि थाथादि-स्वरः (पा ६,२,१४४) (<आ√भृ) । ततः यनि. पूप. तस. सासस्व. च (तु. सं-भर-; वैतु. अन्तर-आभर- इति पपा. यदनु क्रिवि. पूप. मा भूत् कर्म च पूप. स्यादित्यत्र तु. सजातीयान्तराणि वृष-भर-,वाजं-भर-,सुतं-भर-,सहस्रं-भर-,पुष्टिं-भर-, हरिं-भर-, प्रभृ. [यत्तु सा. एतदनुवादी सन्नप्य् उप. √भृ इतीवाऽऽह, तन्न । अर्थासङ्गतेश्च ऋ २, ९,१ प्रभृ. अन्यत्र तदीयाऽन्यथोक्तेश्च]; अन्तरा-भर- इति PW. प्रभृ. [यत्राऽर्थाभेदे सति यनि. अपेक्षयाऽऽडम्बरायितमिव प्रतीयेत]) ।

[c]) गस. उप. भावे घञ् प्र. ।

[d]) सस्व. द्विपूटि. द्र. ।

[e]) भावे क्तिनि 'तादौ' (पा ६,२,५०) इति पूपप्रस्व. ।

[f]) पाप्र. √ई इति दिवा. आत्म. पृथङ् निरदेशि । √इ इति वा स्यात्, तस्यैव श्यनि सार्वधातुके सत्य् अपि दीर्घः उसं. (पा ७, ४, २५ [तु. WSR]) । √इ इत्यस्य यङ्-वृत्तमिति GW. MW. च, तच्चिन्त्यम् । आद्युदात्तत्वानुपपत्तेः (तु.ऋ १,३०,१८;१४४,२ [यदपीह कर्मणीति, तदपि तत एव हेतोर्दुर्वचम् ];१९७,७;२,६,७; प्रभृ.) । यनि. उपसृष्टत्वे सा. त्व् अव्यभिचरिताऽनभिमति-र्विमृश्या भवति । देशमात्रतो मध्यभवत्वेन √इ(ई) इत्यस्यार्थो न विशेष्येत द्रुतक्रियाप्रकारकत्वेन चासौ विशेष्ये-तेतिदर्शनात् तस्य चार्थविशेषस्योपसर्गधर्मिणैव अन्तर् इत्यनेन सुद्योतितत्वाद् यनि. तूपपन्नं द्र. ।

[g]) तु. नापूटि. ।

[h]) 'कृष्णान्' इत्येतेन पदेनास्याऽऽख्यातस्य शुद्धस्य सतः सकर्मकता द्र. (तु. PW. प्रभृ.; वैतु. सा. णिजर्थ-मन्तर्भावुकश्चाऽन्तर् इत्येतत् पृथग् अव्य. इतीवाभिधायु-कश्च [तदभिमतेऽस्मदनभिमते चाऽन्तर्धानाऽर्थे तथा अव्य. सतोऽस्य सामर्थ्याभावादित्यभिसन्धेः]) ।

[i]) बस. पूपप्रस्व. (पावा २,२, २४; पा ६, २,१) ।

[j]) 'पारे मध्ये' (पा २, १, १८) इत्यत्र पूप. उसं. अस. सासस्व. (पा ६, १, २२३) । उप. यद्र. । इह 'तृतीया-' (पा २, ४, ८४) इति सप्तम्या अम्भावाऽभाव-विकल्पो भवति ।

अन्तर्-देश[a]- -शाः काठ ३३, ४¶; शौ ८, ८, २२; १०, ६, १९; पै १६, ३१, २; ४४, १; -शात् शौ १५, ५, १; २; ४-८; १०-१३; -शान् शौ १५, ६, २४; १४, २३; -शेभ्यः शौ ४, ४०, ८; ५, १०, ७; १५, ५, १४; १५. [°श- स°]

अन्तर्√धा>दधा, ¶अन्तर्धत्ते तै ३, २, ९, १[२]; २; ५, १, १०, ३; ४, ४, ४; ६, ४, ६, १; २; मै १, ४, ६; ३, २, १; ३, ६; ६, ३; ४, ४, ४; ५, ४; काठ १९, ११; २१, ७; २६, १०; २७, २; ३२, ५; क ३१, १; ४१, ८; ४२, २; ४७, ८; ¶अन्तः···धत्ते तै ५, ४, ४, ४[२]; काठ २१, ७[२b]; ¶अन्तः(धत्ते) तै ५, ४, ४, ४; काठ २१, ७; ¶अन्तर्दधाति तै २, ६, ५, ३; ३, ५, ५, २; ६, ५, ६, ४; मै १, ४, १३; ३, ६, २; ९, ३; १०, १; ४, ६, ९; काठ २६, १; २८, ६; क ४०, ४; ४४, ६; ¶अन्तर्दुधाति तै ५, ५, ७, १; मै ३, ८, ६; ४, ४, ४; काठ २८, ६; ¶अन्तर्धत्तः काठ २७, ७; ¶अन्तर्दधति मै ३, ६, १; अन्तर्दधे शौ ८, ५, ६; १७, १, २९; पै १६, २७, ६; अन्तः[२]···दधे मै १, २, १; ३, ६, ३; काठ २, १; क १, १३; अन्तर्दधामि मा ७, ५; का ७, २, २; मै १, ३, ५; काठ ४, १; क ३, १; अन्तः···दधामि मा ७, ५; का ७, २, २; मै १, ३, ५; काट ४, १; क ३, १; अन्तः[२]··· दधामि तै १, ४, ३, १; ६, ४, ६, २; †अन्तः···दधताम् ऋ १०, १८, ४; मा ३५, १५; का ३५, ४, १६; अन्तर्धेहि शौ ११, १२, ४; अन्तः··· धत्तम् पै १, १०९, ४; ¶अन्तर्दधाम काठ ७, १०; क ५, ९; ¶अन्तरधत्त तै ६, ४, ६, १; काठ २३, १; क ३५, ७; [अन्तः··· अदधात् ऋ ६, ४४, २३; अन्तः ····अदधात् ऋ १०, ५४, ६]; ¶अन्तरदधत मै ४, ५, ६; काठ २०, ५; २६, १०; क ४१, ८; ¶अन्तरदधुः काठ २८, ६; क ४४, ६; ¶अन्तर्दधीत तै ६, ४, ९, ४; ¶अन्तर्दध्यात् तै ५, ५, ७, १; काठ ८, १०; २६, १; क ७, ६; ४०, ४. अन्तः····दधिषे ऋ १, ६२, ९. ¶अन्तर्धीयते मै ३, ९, ४; काठ ३४, ५; ¶अन्तर्धीयेत काठ ३५, १६; क ४८, १४.

अन्तर्-दुधान[c]- -नाः शौ ५, २८, ८; पै २, ५९, ६.

अन्तर्-धाँ[d]- -धाः पै १, १०२, ३.

अन्तर्-धि[e]- -धिः मै ४, ९, ४; शौ १२, २, ४४.

अन्तर्-हित, ता[f]- -¶तः तै ६, १, १, १; मै ३, ६, १; ६[२]; काठ २२, १३; २३, ३[२]; पै १३, १२, ३; ४[२]; ६; -तम् ¶काठ ८, ५; ३५, १६; ¶क ७, १; ४८, १४; शौ १९, ४२, १; पै १३, १२, १; ३; ८; १३; -ताः ¶मै १, ८, ३; १०, १७[२]; ¶काठ ३६, १२[२]; शौ ११, ११, १६; पै १३, १२, १; ५[२]; ७[२]; ८; ९[२]; १२[२]; १३; -ते पै ८, ९, ५. [°त- अन्°, संवत्सर°]

¶अन्तर्-हिति[g]- -हित्यै तै ५, २, ४, ४; ६, ६, ३, ५; काठ १०, ५; २०, ५; २३, १; क ३१, ७; ३५, ७. [°ति- अन्°]

¶अन्तर्-मांस[h]- -से काठ २३, ३[i].

अन्तर्मुह्य- ?अ-न्तुर्मुह्य- द्र.

अन्तर्√१यम्>च्छ, अन्तर्यच्छ ऋ १०, १०२, ३; मा ७, ४; का ७, २, १; तै १, ४, ३, १; २, २, १२, ४; मै १, ३, ५; काठ ४, १; २७, २; क ३, १; ४२, २.

अन्तर्-याम[j]- -मः मा १३, ५५; १८, १९; का १४, ७, ४; १९, ७, १; तै ४, ३, २, १; ७, ७, १; ¶६, ४, ६, १; ३; मै २, ७, १९; ११, ५; ¶४, ५, ५; ६; ७, १; काठ १६, १९; १८, ११; ¶२७, २[२]; ३; २८, ७¶; क २५, ९; २८, ११; ¶४२, २[२]; ३; ¶४४, ७; -¶मम् मै २, ७, १२$; ४, ५, ६[२]; काठ २७, १; क ४२, १;

a) तस. मध्यमपदलोपे सासस्व. (पा ६, १, २२३)।

b) पूर्वेण 'कुर्वीत' इत्याख्यातेन संवन्धमिच्छुः प्राकरणिकम् यनि. योगं तिरस्कुर्वन् SIM. उपेक्ष्यः।

c) गस.शानजन्त-कृत्-प्रस्व.(पा ६, १, १८९; २, १३९)।

d) गस. कृत्-प्रस्व. (पा ६, २, १३९)। पूप. उपसर्ग-वद्भावे उप. स्त्रियां भावे अङ् (पावा १, ४, ६५; पा ३, ३, १०६)। प्रत्यय-स्वरः। टापि स्वरेऽविशेषः।

e) उप. किः प्र. (पा ३, ३, ९२)। शेषं नापूटि. गतार्थं द्र.।

f) 'अन्तर्' (पा ३, ४, ६५) इति गतित्वे गस. कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९)।

g) गस. भावे क्तिनि पूपप्रस्व. (पा ६, २, ५०)।

h) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

i) यदर्वाचां केनाप्येतत् स्थलं नोदहारि तच् चिन्त्यम्।

j) गस.उप.करणे घञि थाथादि-स्वरः (पा ६, २, १४४)।

–मस्य तै ३, १, ६,२; ६,४,६, १¶; –मात् मा १३, ५५; का १४, ७,४; तै ४, ३,२,१; मै २, ७,१९; काठ १६, १९; क २५, ९; –मे मा ७,५; का ७, २,२; तै १, ४, ३, १; ६, ४, ६, ३; मै १, ३, ५; काठ ४, १; क ३, १; –¶मेण तै ६,४,६, १; क ४१, ८; –मेन मै ४, ५, ६; काठ २६, १०. [°म- उपांशु°]

¶अन्तर्याम-त्व[a]– -त्वम् तै ६, ४, ६, १.

¶अन्तर्याम-पात्र[b]– -त्रम् मै ४, ८,८; काठ २७, २[२]; २८, १०[२]; क ४२, २[२]; ४५, १[२]; –त्रेण तै ६, ५, ७, १[२]; मै ४, ७, १; काठ २८, ७[२]; क ४४, ७[२].

?¶अन्तर्यात्[c] क ८, ४[४]; ५[२].

¶अन्तर्-लोम[d]– -मम् मै ३, ६,६; काठ २३, ३.

अन्तर्-वत्[e]– -वन्तः मै४,२,१३¶; –वान् मै ४, २,१¶; शौ ९,४, ३; पै १६, २४, ३.

अन्तर्-वती[f]– -¶ती काठ ७, १२; ८, १०; क ७, ६; –†तीः ऋ ३,५५,५; १०,९१,६; कौ २, ११७४; पै १४, १, १७; –तीम् काठ ११, २¶.

अन्तर्-वत्नी[g]– -त्नी मै ४,२,९.

अन्तर् √१वस्

अन्तर्-उष्य- द्रः°

अन्तर् √वा

?*अन्तर्-वा-

?अन्तर्वा-वत्[h]– -वत् ऋ १,४०, ७; ६, ८, ३.

अन्तर् √१विद्

अन्तर्-विद्वस्[i]– -द्वान् ऋ १, ७२, ७.

¶अन्तर् √वृत्

अन्तर्-वर्त[j]– -र्तः काठ २५, १०; क ४०,३; –र्तान् तै ६, २, १०, ७.

---

[a]) भावे त्वः प्रत्ययस्तत्स्वरश्च ।

[b]) षतस. सामान्यः समासस्वरः (पा ६,१,२२३) ।

[c]) मूलतः 'अन्तरियाद्' इत्यस्य रू. सतः (तु. संटि.) 'अन्तर्यायाद्' इत्यस्य वा रू. सतो लिपिविकारमात्रमेतद् इति कृत्वा मुपा. शोधाऽवकाशः ।

[d]) बस. पूपप्रस्व. (पा ६,२,१)। उप. समासान्तस्य अपः (पा ५,४,११७) पित्त्वान्निघाते स्वराऽभेदः । अकारान्तं वेह उप.(तुटि. अज-लोम-) तेन च समासान्ताऽनपेक्षा स्यात् ।

[e]) मतुपः पित्त्वान्निघाते स्वरः पूर्वाऽवस्थः ।

[f]) 'अन्तर्वत्-' (पावाम ४, १, ३२) इति स्त्रियां ङीपि छन्दसि वैकल्पिको नुग्-अभावः ।

[g]) नुग्-विकल्पः । शेषं नापूटि. द्र. ।

[h]) स्पष्टेतरा सती निष्पत्तिर्विमर्शविशेषसापेक्षा द्र. । 'अन्तर्-वावत्-' इति पपा. । तेन तत्र गस. उपप्रस्व. अभिप्रेतः स्यादिति कृत्वा उप.<(√वावद्<√वद्) इति वा (तु. सा. ऋ १, ४०,७),<(√वावा <√वा) इति वा (तु. सा. ऋ ६,८,३) यङ्लुग्-वृत्तं सद् आद्युदात्तं (पा ६,१,१८९) स्यात् । वस्तुतस्त्व् अन्तर्वा-वत्- इत्येवं विभक्तुमर्हं सत् पपा.उक्तप्रकारेण विभक्तं स्यादिति सुवचम् (तु. पपा. यातु-मावत्- इति)। अस्मिंश्च यनि. विभागे अन्तर्वा- इति गत्युत्तर-कृत्-प्रस्व.द्वितीये स्थले √वावद् इत्यस्यार्थसंगतेस्ततो निष्पत्तिर्नाऽऽद्रियेत । एवं √वावा इत्यतोऽपि निष्पन्नस्य सतो ह्रस्वोपधत्वं नोपपद्येतेति कृत्वा मृग्य एव सति मार्गान्तरे विजन्त-कृत्-प्रस्व. सति पित्त्रिहितेन स्वराऽविशेषकेण मतुपा युक्तत्वं द्र. (तु. सा. ऋ १, ४०, ७)। प्रथमस्थलीयं रू. क्रिवि. द्वितीयस्थलीयं च रू. 'तमः' इत्येतत्-समानाधिकरणमिति कृत्वैतत् संगमनीयम् । एतत् प्राति.=अन्तर्-वत्- (यद्र.) इत्येवं कृत्वा यद् उप. प्रकृत्यंशमन्यथासिद्धयित्वेव क्वचिद् व्याख्यानं कर्तुमिष्टं भवति (तु. ORN), एवं च यदन्यत्र क्वचित् (तु. GW. MW. NW.) उप. प्रकृतिप्रत्ययोभयोपेक्षापुरस्सरमिवैतद् अन्तर्- इत्यतो निष्पन्नं सदपि ततोऽभेदेनेव ग्राहयितुमिष्टं भवति, तदरुचिरं भवति । प्रकृतिप्रत्ययोभयसार्थकत्वे सत्येव प्रथमे स्थलेऽन्तःप्रश्वसितगतिमद् यथा स्यात् तथेति कृत्वाऽन्तर्विशालत्वपर्यवसानकस्य स्वारसिकस्याऽर्थस्य च (तु. PG २, २१४) द्वितीये स्थले तथैवान्तर्भिन्नत्वपरिणाम्यर्थस्य च (तु. गपू.) लाभदर्शनात् [(तु. पंजा. वाअंदा- [<*वावन्त] इत्य् अप्रतिबद्धः, विशालः, असंहत इत्याद्यर्थः)] इति दिङ्मात्रमिह समकेति । विस्तरस्तु वैश. अनुसन्धेयः ।

[i]) गस. कृद्-उपप्रस्व. (पा ६, २, १३९) । उप. √१विद्+शतृ→वसुः (पा ७, १, ३६) । यत्तु सा. पूप. 'द्यावापृथिव्योर्मध्ये' इत्येवं व्याचक्षाणः समासं विभजतीव, तच्चिन्त्यम् । उप. आख्यातांऽशस्य कर्माभिसंबन्धशैथिल्यप्रसङ्गाद् द्वि. अनुपयोगात् ।

[j]) गस. उप. कर्त्तर्य् अच् (पा ३, १, १३४) । अन्तरालच्छिद्रपूरकपदार्थवृत्तित्वं द्र. (तु. तै. सा.; वैतु. त. भा. [अन्तर्वर्त्तनप्रयोजककर्तृ-वृत्तित्वं पश्यन् णिजन्तात् प्र. इच्छुः], MW. च [अन्तर्वर्तनभाववृत्तित्वं पश्यन् घञ् प्र. निष्पादुकः । वस्तुतस्त्व् अन्तरालवर्तिपदार्थोपयोगफलमात्रत्वमस्य पराभिमतस्य भावस्य द्र. तु. K.]) । सर्वथाऽपि थाथादि-स्वरः (पा ६, २, १४४) यथायोगं

¶अन्तर्-वेदि[a]– -दि तै १,७,५,३; २,४,९,२; ५,११,२; ६,६,४,१; ७,५,९,४; मै २,२,१; ३,८,९; ९,४[2]; ४,१,९; काठ २८,६[2]; ३१,७; ३४,५; क ४४,६[2]; ४७,७.

अन्तर्-हस्त[a]– -स्तम् शौ ७,५२,२.

अन्त(र्>:>)श्√चक्ष्[b], अन्तः-···चष्टे ऋ १,१९०,७.

अन्त(र्>:>)श्√चर्, अन्तः··· चरति ऋ ३,५५,८.

अन्त(र्>:>)श्√छद्→छादि, अन्तश्छादयसि शौ ९,३,१४; पै १६,४०,१.

¶अन्तः(<र्)-शर[c]– -राः तै ५,२,६,२; ६,१,३,५.

अन्तः(<र्)√श्लिष्

अन्तः-श्लेष[d]– -षः मा १३,२५; १४,६; १५; १६; २७; १५,५७; का १४,२,११; १५,१,५; ४,३[2]; ८,५; १६,७,१; तै ४,४,११,१; मै २,८,१२[2]; ३,३,३; काठ १७,१०[2]; क २६,९[6].

¶अन्तः-श्लेषण[e]– -णम् तै ५,४,२,१; मै ४,६,५; -णाय काठ २७,१०.

¶अन्तः(<र्)-सदस्[f]– -सात्[g] तै ७,३,१,३.

अन्तः(<र्)√स्था>तिष्ठ, अन्तस्तिष्ठाति[h] शौ ६,५३,२; अन्तस्तिष्ठतु[i] शौ १,२,४.

†अन्तःस्थुः[j] ऋ १०,५७,१; शौ १३,१,५९.

अ(न्-तँ)न्तर,रा[k]– -रः ऋ १,३१,१३; ४४,१२; [२,४१,८; ६.६३,२; (८,१८,१४)];

---

चरितार्थयितव्य इति। (तु. समानार्थं सप्रक्रियं च पंजा. पचर-[<*अपि-चर्-])।

a) अस. सासस्व. (पा ६,१,२२३)। वा. क्रिवि. भवति। उप. यद्र.।

b) कर्मान्तश्चक्षणमभिप्रेतं स्यादिति कृत्वा गतिभावः (तु. GW.; वैतु. सा. PW. प्रभृ. च चष्ट-स्थित्यभिप्रायतः अव्य. इति)।

c) तस. मध्यमपदलोपे सासस्व. (पा ६,१,२२३)। उप. १*शर- यद्र.। यत्त्व् अन्तः√शॄ इत्यतः प्र. भा. इच्छति, तन्न। प्रधानखण्डपातनार्थं शरणक्रियायां प्रवृत्तायां मध्येऽनायासेनेव पततां शकलानामभिप्रेतत्वात्तादृग्भिश्च तैः शरैर् अन्तर् इत्यस्य साक्षात्-संबन्धाभावे सति तेषां पतनक्रियायास्तद् वि. स्यादित्येवं सुवचत्वात्। एस्थि. तस. सति मध्यमपदलोप एव न त्विह गस. कश्चिदप्यवसरः स्यादिति। यदपि BW. प्रभृ. इह २शर्- (यद्र.) इत्य् उप. भवतीत्याहुस्तत्र तेषां प्रकरणाऽनवबोधजनितो भ्रम एव बीजम्।

d) गस. उप. भावे घञि थाथादि-स्वरः (पा ६,२,१४४)। यत्त्व् उ. तस. इति कृत्वा उप. < कर्तरि √श्लिष् इत्याह, यच्च म. एतदनुविवदिषन्नप्य् उप. कर्मणि प्र. इति सा. भाष्यांशमनुब्रुवाणः (तु. सा. तै ४,४,११,१) व्यामिश्रणमिव करोति, तन्मन्दम्। इह सासस्व. इति कृत्वा स्वरोपपत्तौ संभवन्त्यामपि नाउ. समानप्रक्रियत्वेन व्याख्यानार्हे प्राति. तदसंगतेर्दर्शनात् (तु. नाउ.)। अर्वाञ्चोऽपीह तस. च गस. च विवेकमकुर्वाणाः समानं चोद्याः स्युः।

e) गस. ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३; २,१३९)। यत्तु भा. बस. इतीव कृत्वा व्याचष्टे, तन्नाऽऽद्रियेत। पूपप्रस्व. दुर्वारत्वप्रसङ्गात् (तु. नापू.)।

f) अस. शरत्प्रभृतिष्व् उसं. समासान्ते टचि चित्स्वरः (पा ५,४,१०७; ६,१,१६३)।

g) 'नाव्ययीभावात्' (पा २,४,८३) इति सुब्लुगभावः पं. अमादेशाऽभावश्च। विवेच्यमानस्य शब्दस्याऽपक्रमणक्रियामपेक्ष्याऽपादानकारकसामान्ये पं. द्र. (तु. पाम.; वैतु. भा. यन्मते ल्यब्लोपे कर्मणि पं. भवति)।

h) 'नः (अस्माकम्) अन्तर्' इति संबन्धमास्थायाऽसंबद्धे इवाऽऽपद्यमाने 'दुरितानि विश्वा' इति पदे 'विनाशयन्' इत्यस्या आक्षिप्तायाः क्रियायाः कर्मीभावयन् सा. चिन्त्यः। परिग्रहणार्थान्तरभूते तिरोधापनार्थे अन्तर् इत्यस्य गतिभावस्य (पा १,४,६५) प्रागनुमतत्वात्।

i) रोगस्य चाऽऽस्रावस्य चोभयस्याऽधःकारकत्वेन मुञ्जस्य तन्मध्यवर्त्तिनी स्थितिराशंसिता भवतीति यत् सा. आचष्टे, तन्न। मध्यवर्त्तिनो मध्यवर्त्तयितव्ययोः परस्परसम्पर्कबाधकरत्वेनैवोपयोग-परिसमाप्तिदर्शनात्तदुभयाधःकारकत्वेनोपयोगासंभवात्। न चेह मुञ्जस्योक्तचरी रोगसामान्यविशेषमध्याऽवस्थितिराशंसिता भवत्य् अपि तु तदुभयश्चान्यतः स्तोतॄंश्चान्यतोऽपेक्ष्य मध्येऽवस्थानमभीष्टं भवति येन मुञ्जप्रभावात् स्तोतॄनपेक्ष्य रोगस्य चाऽऽस्रावस्य च तिरोधापनं संसिध्येत्। एस्थि. 'अस्माकं स्तोतॄणां दशो रोगं चाऽऽस्रावं चाऽन्तःस्थाय तिरोधापय' इति तात्पर्यं द्र.। ततः अन्तर् इत्यस्य गतिभावश्चेति दिक् (तु. W.)।

j) अत्र 'नः' इति द्वि३ न तु ष३ (वैतु. सा.; तु. एपुटि. 'अन्तस्तिष्ठाति')।

k) ३*अन्+आतिशायनिकस् तरप् (=३*अन्[गत]तर- इत्येवं मध्यमपदलोप इव द्र.)। प्र. च पित्त्विहतत्वं द्र.।

६, ५, ४; ८, १८, १९; १०, ५३, १; मा १९, १६; २०, ८२†; का २१, २, ५; २२, ८, ३†; काठ ३५, १४†; क ४८, १३†; पै २, ५८,२;३; ६,२२, २१; २२; –रम् ऋ १, १०, ९; ६, ७५, १९; ७, १०१, ५; १०, ८२, ७; खि ३, १५, १२; ४,५,३७;४०$^{३}$; मा १७, ३१†; १९, ८२; २५, २; का १८, ३, ७†; २१, ६, ३; २७, २, १; तै ४, ६,२,२†; ५, १,१०,३¶; मै २, १०,३†; ३, ११,९; १५,२; ४, ८, ८¶; काठ १८,१†; २०, १५†; ३८, ३; क २८, २†; कौ २, १२२२$^{२}$†; शौ १, १९, ४†; २, ३०, ४$^{२}$; ७, १०५,१; पै १, २०, ४;५८, २;७०,२; २,१७, ४; ७३, ५; ५, १३, ६; ९, ७, १२; –रस्य ऋ [६, १५, ३; १०, ११५, ५; (६, १६, ३३)]; –रा ऋ १०, ९१, १३; मै ४, ३, ५¶; –¶रात् काठ २२, १३; २३, ३; –ंरान् ऋ ३, १८, २; काठ ३५, १४; क ४८, १३; –राम् ऋ १, १०४, ६; तै ५, ७, १४, १; काठ ५३, ४; –¶रे तै ७, २, ९, २; ३; मै ४, ८, ८; काठ २७, ५; ३४, ८$^{२}$; क ४२, ५; –रेण ऋ १०, ३३, १; खि ५, ७, ४, ८; तै ५, ७, १२, १; काठ ६, ७; ५३, २; पै १, ६५, २; –रैः ऋ ६, ६२, १०; –रौ काठ ३४, ८$^{२}$. [°न्तर- अन्°, अव°, माया°]

¶अन्तर-कोश‌ु[a]– -शे तै ३, ४, १, ४; काठ १३, १०.

¶अ‌ुन्तर-त(र>)रा[b]– -रा तै ६,२, २, ७.

¶अन्तर-त‌ुस्(:)[c] तै ६, १,१,३; २, ११, २$^{२}$; ३; ३, ६, ४; ४, ९, ३; ५; ७, २, १०, ४; मै ४, १, १२$^{२}$; ५, ४$^{२}$; काठ २५, ९; १०; २६, १$^{२}$; ८; २७, १$^{२}$; ३४, ११; क ४०, २; ३; ४$^{२}$; ४१, ६; ४२, १$^{२}$.

अन्तर‌ा[d] ऋ ३, ४०, ९; ९, ८६, १३; १०, [८६, १६; १७]; ८८, १५; १३९, २; १६२, ४; मा १३, २५; १४, ६; १५; १६;२७; १५,५७; १७, ५९†; १९, ४१; ४७†; २९, ६; का १४, २, ११; १५, १, ५; ४, ३$^{२}$; ८, ५; १६, ७, १; १८,५, १०†; २१,३,१२; १८†; ३१, १, ६; तै ¶१, ६, ७,१; ७, १, १; ¶२, ५, ११,१$^{२}$; ६, २, २; ४; ३, ५, ४, २; ४,४, ११, २; ६,३,४†; ५,१,११,२¶; ७,२, ३; ¶६,१,१,५; २, ६,२$^{२}$; ३$^{२}$; ७,१;३; ८, ४; ३, १०, ३;५, १, ४; ५; ¶मै १, ४, ८; १०; १२$^{a}$; ५, ११; ६, ७; ८,६;७$^{३}$; ९; ९, ८; १०, १७; ११, ९; २, १, ११; २, ५; ३, ६$^{३}$; ८†; ५, ९; ८, १२$^{२}$\$; १०, ५\$; ३, २, ७; ३, ४;६,३; ७, १०; ८, ४$^{३}$;५$^{२}$; ८$^{२}$; १०; ९,४; १०,४; ६; ११, १०\$; १६,२\$; ४, ५, ६; ६, ३$^{२}$; ५$^{४}$; ८,३; १२,३†; काठ ७,७; १०,५$^{f}$;७$^{२}$; ११,१; १२,२$^{२g}$; १३, १०; १५; १४, ४$^{२}$; १६, २१; १७,१०$^{२}$; १९; १८, ३; २०, ८; २१, ६; २४, १$^{२}$;६$^{२}$; २५, २;६$^{2h}$;९$^{२}$; २६, ९; २७, १०$^{२}$; २८, ४; ८; ३२, ६$^{२}$; ७; ३३, ७; ३४,१६; ३६, १२; ३८, २$^{२}$; ४६, २; ¶क ४,६; २६, ९$^{२}$\$; २८,३†; ३१, १०; २१; ३७, २$^{२}$; ७; ३८, ५; ३९, ३$^{२}$; ४०, २$^{२}$; ४१, ७; ४४,८; शौ ३, १५,२: ४,१६,५; ५. २०, ७; ६, ५५, १; ७, ११४, ३; ८, ६, ३; ९, ३, १५; १३, ९; १०, ७, २८; ८, ३९; ११, ६, १४; ७, ११; १०, ३४$^{२}$; १२, २, ४४; १३, १, ५७; ५८; ३, ६; १४, २, ३४; १९,५६, ४; †२०, ६,९;

व्यु. तु. *अ‌ुव-तर-, उ‌ुत्-तर-, प्र‌ु*-तर-, *वि‌ु-तर-; यत्तु. GW. अ‌ुन्त-+(तरप्>)र इत्येवं व्यु. आह, तच्चिन्त्यम् । तत्र तत्र श्रुतौ तेनोपदिदर्शयिषितस्य अन्तगतत्व-परिणत-समीपवर्तित्वस्वरूपस्याऽर्थस्याऽपेक्षयाऽन्तरङ्गभावाऽनुरञ्जितस्याऽर्थस्य प्राकरणिकतरत्वेन प्रतीतेरिति यावत् । वा. वि. द्र. ।

[a]) तस. मध्यमपदलोपे सासस्व. (पा ६, १, २२३) । तु. अन्तः-कोश‌ु- ।

[b]) आतिशायनिकस्य तरपः पित्त्वान्निघाते स्वरेऽविशेषः।

[c]) तसिः प्र. उसं. (पावा ५,४,४४) । प्रत्यय-स्वरः ।

[d]) तुटि. अन्त‌ुर्* इति (पाप्र. त्व् अस्तातेरर्थे आच् प्र. उसं. । चित्स्वरः [पा ५,३, ३६; ६, १, १६३]) ।

[e]) 'अन्तर‌ाऽऽह्रुति-' इति पदमेकमुद्दिश्य संदिहानः SBW. चिन्त्यः (यनि. तु. मै १, ४, १०; ५,११) । तु. नाउउ. टि. ।

[f]) वैतु. SIM 'अन्तरे‌ु(रा-इ)ष्टि-' इति (तुटि. नापू. नाउ. च)।

[g]) वैतु. एकतरत्र 'अन्तर‌ाऽऽह्रुति-' इत्येकं पदं कुर्वन् SIM. (तुटि. एपू. नापू. च) ।

[h]) 'अन्तराऽतिष्ठत्' इत्येवं योगं ब्रुवाणः SIM. नितरां चिन्त्यः (तु. स एव काठ १०,७$^{२}$ इत्यत्र) ।

¶अन्वव(नु-अ)व√स्था>तिष्ठ,अन्वुवातिष्ठत् मै ३, ९, ४.

¶अन्वव(नु-अ)व√स्नु→स्नावि,अन्वुवस्नावयति तै ५, ६, ३, २; ६, २, १०, ५; क ४०, ३.

अन्वव(नु-अ)वार्(व√ऋ)>च्छ, अन्वुवार्च्छति मै ३, ९, ६.

¶अन्वव(नु-अ)वा(व√२अ)स्, अन्वुवास्यति तै ६, ६, ७, ४; काठ २९, ४; क ४५, ५; अन्ववुास्यति मै ४, ८, ६.

¶अन्ववे(नु-अव√इ), अन्वुवैति तै ६,६, ३, १; मै ३, ८,१; अन्ववुैति मै ४, ८, ५; अन्वुवैत् मै ४, ८, ५; अन्वुवैताम् तै २,४, ४, १; २; अन्वुवायन् तै ३,२, २, ३; ५, ३, ३, १; मै १, ९, ८; ३, ६, १०; ८, १; ४, ९, ११$; काठ १३, ५; २०, ६; १३; २४,१०; क ३१, ८;१५; ३८, ३; अन्ववुायन् तै ६, ३, १, २.

अन्ववा(व-अ)युँ[a]– -याय काठ २५, ८. [°वाय- अन्°]

अन्ववा(व-आ)यिन्[b]– -यिनः खि ३, १६, ५$.

अन्ववे(व-इ)त्य काठ २२, ७; २५, ८[२]; क ३५, १; ४०, १[२].

अन्ववै(व-ए)तुम् काठ २४, १०; क ३८, ३.

†अन्व(नु√१अ)श्, अुन्वश्नोति ऋ २, १६, ३; अुन्वश्नुवन्ति ऋ ७, ९९, १; मै ४, १४, ५.

अन्वानशे शौ ४, २५, २$; अुनु···आनशे ऋ १, ८४, ६[c]; कौ २, ३००; जै ३, २४, १६; पै ४, ३४,२; अुनु···आनशुः ऋ १, ५२, १४[d]; अुनु···आुनट्[e]; अुनु···अष्ट ऋ ८, ७०, ५; तै २, ४, १४, ३; काठ १२, १५; कौ १, २७८; २, २१२; जै १, २९, ८; ३, १९, ७; शौ २०, ८१, १; ९२, २०.

१अन्व(नु√१अ)स्, अुनुष्टन[f] मै २, १३, १; काठ ३९, २; शौ ३, १३, २; पै ३, ४, २; अुनुस्थन तै ५, ६, १, ३; अुनु··· आसन् ऋ १०, २७, १७; अुनुष्यात् ऋ १, १६७, १०[g]; १८२,८; ३,३९,८[h]; अनुष्युात् काठ ३५, १४‡[i]; कौ १, ८२[j]; जै १, ९, २; अुनुष्याम ऋ १, १८५, ४.

¶२अन्व(नु√२अ)स्, अुन्वस्यति, अन्वुस्यति तै ७, २, ४, २.

¶अन्व(नु-अ)हु[k]– -हम् खि २, ६[२], १६$; तै २,४,१०,१; ५,५,६, २; मै २, ४,८; काठ ११, १०.

¶अन्वा(नु-आ)√कृ, अन्वाकुर्वन् काठ २४, ७; क ३७, ८.

¶अन्वा(नु-आ)√क्रम्, अन्वुाक्रमत तै ६, ५, ६, ३.

¶अन्वा(नु-आ)√क्षा

अन्वा-क्षुायम्[l] मै १, ९, ८.

अन्वा(नु-आ)√२क्षि, अनु···आक्षियति पै १६, १३२, ७.

अन्वा(नु-आ)√गम्>च्छ, ¶अन्वुागच्छत् काठ ८, १०; १०, २[२]; ११,३; क ७,६; ¶अन्वागच्छन् काठ ८, ७[३]; क ७, ४[३]. ¶अन्वुाग्मन् तै ७, ३, ५, १; अनु···आगन् पै १६, ७१,८.

---

[a]) गस. भावे अचि थाथादि-स्वरः (पा ३, ३, ५६; ६, २, १४४)।

[b]) उस. णिन्यन्त-कृद्-उपप्रस्व. (पा ६, २,१३९)। '-वा-' इति मुपा. स्वरो भ्रष्टः।

[c]) सा.सादृश्ये कप्र.इति कृत्वा √१अस् इतीममाक्षिप्य तृतीयचरणान्तेन प्रथमं वाक्यमाह, तुरीयचरणस्थे वाक्यान्तरे च केवलं 'त्वा'इति पदमनुवर्तयति न तु 'त्वा । अुनु' इति पदद्वयम्। तच्चिन्त्यम्। तथाहि, सादृश्यार्थः खलु अनोर् अस. गतित्वेनाऽऽख्यातयोगे च प्रसिद्धो भवति न तु तथा तस्य लक्षणाद्यर्थवतः कप्र. सतः। अतोऽध्याहारमुखेनाऽपि गतित्व एव पर्यवसानाद् वरमेव ततः 'आनशे' इत्यस्योभयोरपि वाक्ययोरन्वयस्तेन चाऽनोर्गतित्वेन योगः (तु. ऋ २,१६,३ यत्रत्या सकृत्त्वा श्रुतिरिममेवाभिसन्धिं निःसन्देहतामापादयति)। एवमपि GW. अनोर् गतित्वमदर्शुकश्चिन्त्यः।

[d]) अनेवंदर्शी GW. अन्यथाऽर्थवादी भवति गतित्वभिन्नगतेरभावाद् अनोर् इति यावत्।

[e]) एतद् रू. अनु √१नश् इत्यत्र द्र.।

[f]) नतिः उसं. (वैतु. पा ८, ३, ८७)। शाखाभेदेन व्यवस्था स्यात्। पाप्र. चेह शाखाविशेषमात्रानुसारिणीति तु तत्त्वदृक् (तु. नाउ. रू.)।

[g]) गतित्वमूला नतिः (पा ८, ३, ८७)। कप्र. इतीव सा. अभिप्रयंस्तां नतिं प्रति पर्यनुयोक्तव्यः।

[h]) गतित्वमपश्यन् GW. मन्त्रस्थां नतिं प्रति चोद्यो भवति (तु. नापूटि.)।

[i]) 'वनुष्यात्' इति वाह्वृचः (६,५,४) पाभे.।

[j]) पादपूर्तिकरः अनुर् इत्यभिप्रायी विव. गतिमूलां नतिं प्रति चोद्यः।

[k]) अस. समासान्ते टचि चित्स्वरः (पा ५,४,१०८;६, १, १६३)। उप. अुहन्- यद्र.। वा. क्रिवि. भवति।

[l]) गस. णमुलन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)। '-क्षा-' इत्यप्येकस्मिन् मूको. पा.। स तु

अन्वा-गन्तृ[a]- -न्ता मा १८, ५९; का २०, ४, २; तै ५, ७, ७, १; काठ ४०, १३; शौ ६, १२३, १; २.

अन्वा (नु-आ) √गा, अनु॰॰॰आ-(आ-अ)गुः तै ४, ३, ११, १[b].

¶अन्वा(नु-आ)√चक्ष्, अन्वाचष्टे मै १, १०, १८; ४, ४, ७; काठ ३६, १३.

अन्वा(नु-आ)√तन्, अन्वाततान मा ८, ६२; शौ १८, २, ३२; पै ११, ५, ३; अन्वातांसीत् मा १५, ५३; का १६, ६, ५; तै ४, ७, १३, ५; काठ १८, १८; क २९, ६; अन्वातांसुः मै २, १२, ४.

अन्वा(नु-आ)√तप्, अन्वातपन्ति पै ५, ३१, ७?[c].

¶अन्वा(नु-आ)त्म[d]- -त्मम् काठ २३, १; क ३५, ७.

¶अन्वा(नु-आ)√धा

अन्वा-धाय[e] काठ ३५, १७[2]; क ४८, १५[2].

¶अन्वा(नु-आ)√धाव्, अन्वाधावन्ति काठ १३, ४.

अन्वा(नु-आ)√(ध्यै>)धी>दीधी, अनु॰॰॰आदीधीथाम्[f] शौ २, १२, ५; अनु॰॰॰आदीध्याथाम् पै २, ५, ५?[g].

*अन्वा(नु-आ)न्त्र[h]-

?अन्वान्त्र्य[i]- शौ २, ३१, ४; पै २, १५, ४.

¶अन्वा(नु-आ)√प्यै>प्याय्, अन्वाप्यायते, अन्वाप्यायत मै २, २, ७.

¶अन्वा(नु-आ)√प्री, अन्वाप्रीणाति क ४१, ७.

अन्वा(नु-आ)√भज्, ¶अन्वाभजति तै ६, १, ९, ६; ४, ६, ३; ५, १, ३; ¶अनु॰॰॰आभज तै ६, ४, ६, २; ¶अन्वाभजत् तै ६, ४, ६, ३; अनु(आभजन्)[j] ऋ ३, ४७, ३.

अन्वा(नु-आ)√भू, अन्वाभवत् काठ ३५, १५; ४३, ४; क ४८, १३. ¶अन्वाभविष्यन्ति तै ६, ३, ४, ७; १०, २; ५, ३, १.

अन्वा॑-भूति[k]- -तिः काठ ३५, १५.

¶अन्वा(नु-आ)√यत्

अन्वा-यत्त[l]- -त्तः, -त्तम् तै १, ६, ११, १; मै १, ४, ११.

अन्वा(नु-आ)√रक्ष्, अन्वारक्षत् पै १६, ६३, ३.

अन्वा(नु-आ)√रभ्>रम्भि, ¶अन्वारभते तै ३, १, १, ४; ६, २, १, १;

---

ख्या<>क्शा<>क्षा इत्येवं वर्णसंकरजः परिणामः द्र.।

[a]) गस. तृजन्त-कृत्-प्रस्व. (पा ६,१,१६३;२,१३९)। अस्य व्याख्यानं द्विवर्णकं भवति। यनि. कृदन्तमिति प्रथमं वर्णकं (तु. उ. WI. च)। लुटि प्रपु१ इत्यपरं (तु. भा. सा. म. PW. प्रभृ.)। इह 'न लुट्' (पा ८, १, २९) इति तिङो निघाताऽभावे सति गतिद्वयस्यानुदात्तत्वं द्र. (पा ८,१,७०;७१; तु. भा.)। ननु किमिति नेह भूयोमतमन्वमानीति। उच्यते। लुड्-वृत्तमपि मूलतः √१अस् इत्येतल्-लड्वृत्ताऽनुप्रयुक्तात् तृजन्त-कृतोऽनर्थान्तरमित्यभिसन्धेरल्पीयोऽभिमतपद्यत्वमेवोरीकृतमिति दिक्।

[b]) अत्र 'आगुः' इत्येकं पदम्। यनि. अपरं पदमिति विवेकः द्र.। तुटि. '२अनु' तै ४,३,११,१[2]।

[c]) '-तीः' (=शत्रन्तस्य ङीपि द्वि३) इति मुपा. शोधमर्हति। अन्यथा हि वाक्यासम्भवत्वप्रसङ्गः स्यात्। नाउ. पदं च मूलतः 'ईर्मम्' इति सदेव 'ईरिमम्' इति मध्य इकारोपजनवत्तया मूको. व्यकारीति संभाव्येत (तु. ईर्मसस्थ. टि.)।

[d]) अस. समासान्ते टचि चित्-स्वरः (पा ५,४,१०८; ६, १, १६३)। उप. आत्मन्- यद्र.। वा क्रिवि.।

[e]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[f]) 'अपक्रामस्य कर्त्ता माऽभिभूद् माम् इत्यस्य कृते द्यावापृथिव्यौ मम विस्मरणमकुर्वाणे ममाऽन्वालम्भनं नाम पृष्ठपोषणं वितन्वीयाताम्' इत्यस्य मन्त्रस्वारस्यस्याऽतिरोहितत्वेऽपि यत् सा. W. च 'मा अनु' इत्यन्वयमिच्छतस्तन्निःसारं द्र.। तदभिमतस्य √२दीधी इत्यस्य च √दीदी इत्यस्य पर्यायभावस्याऽप्रामाणिकत्वादिति दिक् (तु. सस्थ. अनु॰॰॰आरभध्वम् इति)।

[g]) मुपा. चिन्त्यः। 'दीध्यताम्' इति मूको. हि पर. लिङि मपु२ रू. दीधी-यातम्>दीध्यातम्' इति संकेतयेत्।

[h]) प्रास. पूपप्रस्व. (पा ६, २, २)। उप. यद्र.।

[i]) तत्रभवार्थे यति प्र. तित्स्वरः (पा ४, ३,५५; ६,१, १८५; [तु. सा. यत्त्वसाव् आन्त्र- इत्यतः यत् इत्याह, तन्न। तथा सत्य् अनुना प्रास. पूपप्रस्व. हि स्यात्। अर्थतोऽस्य प्रास. असंगतेश्च। सा. समये स्वरितस्वरः मूको. बभूवेत्यस्य तत्प्रमाणतः सुवचत्वाच्च नापू. इह मूलभूतस्य प्राति. सद्भावः सूहः द्र.। एस्थि. संप्रत्याद्युदात्ततया यदस्य प्राति. मूको. उपलम्भो भवति तत्र समाधानं मृग्यम्])।

[j]) सामर्थ्याच्छ्रुतचरी क्रिया पुरुषवचनपरिणामपूर्वकमध्याहृता द्र. (तु. सा. [अनु-मात्रमुपसर्जुकः]; वैतु. PW. प्रभृ. 'स्वानु' इति योगतः अनुः कप्र. इत्यभिप्रायुकाः)।

[k]) गस. क्तिनि 'तादौ-' (पा ६,२,५०) इत्यनु स्वरशोधे सति °भूति- इति मुपा. चिन्त्यः।

[l]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।

३,८,२;९,४; मै ३,६,६[२];८,९; ९,१; ४,६,८; काठ १०,५; ११,४[२]; १३,७; २४,८; ३०,३; क ३८,१; ४६,६; ¶अन्वारभते तै ६,३,९,४; मै ३,९,७[२]; ¶अन्वारभन्ते मै ४,६,३[२]; अनु···आरभे तै ३,२,१,१[३]; ७,५,१९,१[२]; २; काठ ३५,२; ६; ९; ३८,१२; ४५,१५[३]; क ४८,३; ७; १०; शौ ६,४८,१-३; ‡अन्वारभामहे[a] मा ९,२६; ३५,१३$; का १०,५,५; ३५,४,१२$; तै १,७,१०,३; मै १,११,४; काठ १४,२; २१,१४$; कौ १,९१; जै १,१०,१; अनु-···आरभामहे[b] शौ ५,८,९; पै ७,१८,८; ?अन्वारप्स्व[c] पै ४,१८,६; अन्वारभेथाम् शौ ६,१२२,३; १२,३,२०;४७; पै १६,५१,७; अन्वारभध्वम् १२,२,४७;४८; अनु···आरभध्वम् काठ ३५,२; ६; ९; क ४८,३;७;१०; शौ २,१२,५[d]; पै २,५,५;१५,९,६; ¶अन्वारभन्त काठ ७,६; क ५,५; ¶अन्वारभेत तै ३,१,५,१; ६,३,८,१; २.

¶अन्वारम्भयति तै २,६,२,५; मै २,१,२; ४,१,१२.

¶अन्वा-रब्ध[e]- -ब्धम् तै ६,३,८,२. [°ब्ध- अन्°]

¶अन्वा-रभ्य[f] तै २,२,५,५;३,११,४;५,३,५,२; ६,१,११,१; ७,३,१,१; काठ २४,८; क ३८,१. [°भ्य अन्°]

¶अन्वा-रभ्य[g]- -भ्यः, -भ्या३ः[h] तै ६,३,८,१.

¶अन्वा-रम्भ[i]- -म्भः तै ६,१,११,५; २,१,२; ९,२; मै १,४,८; ११,८; ३,७,९; ८,७; ४,१,१२; ४,५; ८,२; काठ १४,८; २४,४; ८; २५,८; ३१,९; ३२,४; क ३७,५; ३८,१; ४०,१; ४७,९; -म्भाय मै ३,७,९; ८,७.

¶अन्वा-रम्भयित्वा[j] काठ ११,१०; १२,२; २४,८; क ३८,१.

¶अन्वा(नु-आ)√रुह् > रोहि, अन्वारोहति तै ५,४,१०,२; ६,८,१; मै १,८,६; ३,५,५; अनु-···आरोहति तै ३,२,१,१; २; अन्वारोहन्ति तै ७,२,१,२; ४; ६,२; ४,३,२; ७,२; मै ३,९,४; $अन्वारोहामि मै २,७,१६[२]; काठ ३९,३[२]; शौ ६,१२२,४; पै २,६०,१; अन्वारोहत् मै ४,३,४; अन्वारोहेत् तै ५,६,८,१.

अन्वारोक्ष्यन्ति मै ३,९,४; १०,२; ४,७,५; $अन्वारुहन् खि १,११,४[k].

अन्वारोहयति मै ३,१०,४; अन्वारोहयेत् तै ३,४,१०,४; अन्वारोहयेयुः मै ३,९,४.

φअन्वा-रू(ढ>)ढा- -$ढाः पै ८,१६,१[l];२;३.

अन्वा-रोह[i]- -हः तै ५,६,८,१; मै ३,८,१; -हाः तै ३,२,१,२; -हान् तै ३,२,१,१; मै ३,५,५.

अन्वा-रोहयितव्य[m]- -व्यम् मै ३,१०,४.

†अन्वा(नु-१आ)√लभ्, अन्वालेभिरे ऋ १०,१३०,७; मा ३४,४९; का ३३,२,१२.

†अन्वा(नु-आ)√१वह्, अनु···आवहत[n] ऋ १०,२९,२; शौ २०,७६,२.

अन्वा(नु-आ)√वृत्, ¶अन्वावर्तते काठ ३२,५; अन्वावर्ते[o] तै १,६,६,२; ७,६,३; काठ ५,५; ३२,५; शौ १०,५,३७; पै १०,१०,३; १६,१३२,२;

---

a) 'गीर्भिर्हवामहे' इति ऋ (१०,१४१,३) पाभे.।

b) वैतु. WI. अनुः कप्र. इति ।

c) 'अन्वारम्भि' इत्यस्य वा 'अन्वारब्धः' इत्यस्य वा मूलतः सतो विकारः स्यादिति विमर्श-सापेक्षो विषयः।

d) तु. PW.; वैतु. सा. WI. च अनुः कप्र. इति (तु. अन्वा√दीधी>°थाम् इत्यत्रत्यं सस्थ. टि.)।

e) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।

f) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३; २,१३९)।

g) गस. यदन्त-कृत्-प्रस्व. (पा ३,१,९८; ६,१,२१३; २,१३९)।

h) प्लुतत्वं द्र. (पा ८,२,९७)।

i) गस. भावे घञि थाथादि-स्वरः (पा ६,२,१४४)।

j) गस. छन्दसि ल्यब्-अभावः पाक्षिकः।

k) मुपा. सन्नपि स्वरो भ्रेषात्मकत्वादुपेक्षितः द्र.।

l) मूको. आङश् छर्दनं प्रमादजमभूदित्यनीक्षित्वा तदभावतः प्रवर्त्तितः मुपा. चिन्त्यः (तु. उत्तरौ मन्त्रौ)।

m) गस. तव्यदन्त-कृत्-प्रस्व. (पा ६,१,१८५; २,१३९)। इत्येव मौलिकः स्वरः स्यात्। यत्तु मूको. मुपा. च गत्यंशेऽपि स्वरो भवति तदनुपदं श्रूयमाणेन 'अन्वारोहयति' इत्यनेन दृग्दोषतः कारितः स्यादिति शोधो यथावत् सावसरः द्र.।

n) तु. वें. PW. प्रभृ. च; वैतु. सा. यः अनुं निपातमात्रमनुचरपरतया व्याचक्षाणोऽसमर्थमिव बभाषे।

o) तुटि. २अनु मा २,२६।

अनु(आवर्ते) पै १६, १३२, २.

†अनु···आववर्त ऋ ५, ६२, २; मै ४, १४, १०.

¶अन्वावरीवर्ति मै ३, २, ९.

अन्वा(नु-आ)√शी, अन्वाशये शौ १०, ७, ९.

¶अन्वा(नु√आ)स्, अन्वास्ते तै ५, ३, ७, ३; मै १,४, ८; काठ २१, २; क ३१, १७; अन्वास्ते मै ३, ३, १; अन्वासीत मै १, ४, ८.

अन्वा(नु-आ)√सृप्[a], आ···अनुसर्पत मै ४, २, ५.

अन्वा(नु-आ)√स्था>तिष्ठ, अन्वातिष्ठथ काठ ३, ९; अन्वातिष्ठत मै १, ३, १; क २, १६; अनु···आतिष्ठत[b] मा ८, १९; का ९,३,५; मै १,३,३८; काठ ४, १२; क ३, १०.

¶अन्वा(नु√आ)ह्[c], अन्वाह तै २, ३, ६, २; ७,४; ५, ७, १; २[३]; ३[२]; ४; ८, २; ४; ५; ११, १[२]; २; ५, १, ८, ५[३]; ६; २, १, २; २, ३; ४, ७, २; ६, १, ५, ३; ३, ५, ३; ४; ७, १[२]; ४,३, २; मै १, १०, १५; १८[५]; ११, ७; २, ४, ४; ५; ३, २, ५; ३, ७; ४, ६[३]; ८, ७; ९, ५[३]; ४, ५, ३[३]; काठ १४, ७; २०, ५[४]; २६, ८[३]; २९, ६; ३६, ९; १२[६]; १३; १४; क ३१, ७[४]; ४१, ६[३]; ४५, ७; §पै १, १०, १[d]; अन्वाह तै १, ५, ८, ३; २, ४, ११, १; ५, ८, १; २; ५; ११, १; ५, ४, ६, ४; ६, १, ५, ३; मै १, १०, १८[२]; २, ४, ४; ३, १०, २[२]; ४, ५, ३[३]; अन्वाहुः मै ४, ५, ३; अन्वाहुः मै ३, २, ५.

¶अन्वा(नु-आ)√हृ, अन्वाहरति तै १, ७, ३, २; अन्वाहरति मै १, ४, ६; अन्वाहरन्त तै १, ७, ३, ३; अन्वाहरेयुः मै १, ५, १३; अन्वाहरेयुः मै १, ५, १३.

अन्वा-हर्तवै[e] मै १, ५, १३.

अन्वा-हार्य[f]– -र्यः तै १, ७, ३, २[२]; ३[२]; –र्यम् तै १, ७, ३,१; २[२]; ३; मै १, ४, ६; काठ ८, १३; क ८, १; –र्यस्य तै १, ७, ३, २; –र्येण तै १, ७, ३, १; काठ ८, १३; क ८, १.

अन्वाहार्य-त्व[g]– -त्वम् तै १, ७, ३, २.

अन्वाहार्य-पचन[h]– -नः तै १, ६, ७, १; काठ ३२, ७.

अन्वि(नु√इ), अन्वेति ऋ १, ११३, ८; [१२४, ३; (१०, ६६, १३)]; ५, ८०, ४; ७, ६३, ५; [१०, २७, १३; (१४२, ५)]; ¶तै ५, १, २, ३; ५, १, २; ६, ४, ५; ६, ३, ९, ५; ५, १, ४; ¶मै ३, १, ३; १०; ४, ४, ५[२]; १४, १४; ¶काठ १४, ७; १९, २; ८[२]; २२,९; ¶क २९, ८; ३५, ३; शौ १०, २, १९; पै १२, ६, १३‡[i]; अन्वेति मै ४, ६, ५¶; कौ १, ६४‡[j]; जै १, ७, २‡[j]; ¶अन्वेती३[k] तै ७, १, ७, ४; ¶अनुयन्ति तै ६, ५, १, ४; मै ४, ६, ५; काठ २७, १०; †अनु···यन्ति ऋ १, १६३, १२; ४, १३, २; ८, ४०, ८; १०, ८५, ३१; १३६, २; मा २९, २३; का ३१, ३, १२; तै ४, ६, ७, ५; काठ ४६, ३; अन्वेषि तै ४, २, ५, ४; शौ १२, २, ४९; १७, १, १६; अन्वेषि ऋ १०, [(२७, १३) १४२,५]; अन्वेमि ऋ १०,[(१, १२४,३; ५, ८०, ४); १३,३]; ६६, १३; मा १, ७; ११; ७, २; ३८, ५; का १, ३, ३; ७, १, २; २, २; ३८, १, ५; मै ४, १, ५[२]; शौ ११, ११, ४; अन्वयः[l] पै ४, २२, ६; †अन्वेतु ऋ ६, ५४, ५; तै ४, १, ११, २; मै ४, १०, ३; ११, १; काठ ४, १५; २०, १५; §शौ ६, ८९, २; १९,

---

[a]) आङोऽनोरपेक्षयाऽर्थतो धातुना नेदीय इवाभिसंबद्धत्वमुपजीवुकः यनि. श्रुतिक्रमव्यत्यासः द्र. ।

[b]) अनु लक्षणे कप्र. आतिष्ठमानः म. तं क्रियया समनुगमयतीति चित्रम् ।

[c]) यथा दीर्घादिरयं धातुरिष्येत न तु पराभिमतदिशा ह्रस्वादिरित्यस्य कृते तु. टि. √आह् ।

[d]) 'अध्याह' इति शौ (१,१६,२) पाभे. ।

[e]) तवै-प्रत्ययान्तस्य द्वैस्वर्यं भवति (पा ६,२,५१)।

[f]) गस.ण्यदन्त-कृत्-प्रस्व. (पा ६,१,१८५;२,१३९)।

[g]) भावे त्वः प्र. (पा ५,१,११९) । तत्-स्वरः ।

[h]) कास. अधिकरणीय-ल्युडन्त-कृत्-प्रस्व. (पा ६,१, १९३; २, १३९) ।

[i]) 'अभियन्तु' इति ऋ (४, ५७, ८) पाभे. ।

[j]) 'अप्येति' इति ऋ (१०, ११५, १) पाभे. ।

[k]) वाक्यस्य टेर् उदात्तप्लुतः (पा ८, २, ८२; ९७) पदस्वरात् पृथग्भूतः द्र. ।

[l]) सांशयिकत्वेन संकेतयन् सं. चिन्त्यः । लेटः मपु१ रू. इत्येवं सुवचत्वात् ।

४, ४[a]; §पै २, २२, ३; ५, ६, १; अनुयन्तु कौ २, १२१४; शौ ३, १७, ५; अनु····यन्तु खि ६, ३, २; पै ५, ३८, २‡[b]; अन्विहि ऋ १०, ५३, ६; मा १२, ६२; २२, १९; का १३, ५, १; २४, ६, १; तै १, १, २, २; ४, २; २, ८, १; ३, ९, २; ४, २, १; ३, १; †३, ४, २, २; ३, ६; ४, १, २, २; ६, ३, ९, ४; ४, ५, ५; ७, १, १२, १; मै २, ७, १२; ३, १२, ४; काठ †१३, ११; १२; १६, १२; क २५, ३; अनु····इहि मै ४, ९, ११; ¶अन्वैत् तै २, १, २, १; ३, ५, १; ५, २, १, २; काठ १०, ११; ¶अन्वैताम् मै २, २, ४; काठ १०, ११; अन्वायन् ¶तै १, ५, १, १; ७, ३, ५, १[2]; ¶मै ३, ८, ६; ¶काठ २४, ६; २६, १; ¶क ३७, ७; ४०, ४; शौ ११, ७, २; पै ३, ३८, ७; ¶अन्वायन् मै ३, ८, १०; अनु···आयन् ऋ [४, २६, २; १०, ६, ७]; अनु····आयम् ऋ ५, ३०, २; १०, ९५, ५;

¶अन्वियात् तै ७, १, ७, ४. †अन्वियाय ऋ ४, ४, ११; तै १, २, १४, ५; मै ४, ११, ५; काठ ६, ११; †अनु···ईयतुः ऋ ८, ९९, ६; मा ३३, ६७; का ३२, ५, १३; कौ २, ९८८; शौ २०, १०५, २; †अनु···ईयुः ऋ १, १६३, ८[c]; मा २९, १९; का ३१, ३, ८; तै ४, ६, ७, ३; काठ ४६, ३.

अन्वय- स°>सा

¶१अन्वि(तु-इ)त[d]– -तम् मै ३, १०, ४.

?२अन्वि(तु-इ)त[e]– -तम् मै १, २, १५.

अन्वि(तु-इ)ति[f]– -तिः तै ३, ५, २, २; ४, ४, १, १; ५, ३, ६, १¶; काठ १७, ७; ३७, १७; क २६, ६; –त्या मा १५, ६; का १६, २, १; मै २, ८, ८.

¶अन्वि(तु-इ)त्य[g] तै ६, २, ९, २; ६, ३, १.

अन्वे(तु-ए)तवे[h] ऋ ७, ३३, ८.

†अन्वे(तु-ए)तवै[i] ऋ [१, २४, ८; ७, ४४, ५]; मा ८, २३; का ९, ४, १; तै १, ४, ४५, १; मै १, ३, ३९; काठ ४, १३; क ३, ११.

अन्वि(तु√इ)न्ध्, अन्वैन्द्ध शौ १०, २, १६; पै १६, ६०, ९; ?अन्विये[j] पै १३, ५, १५.

अन्वि(तु√२इ)ष्→च्छ्, ¶अन्विच्छति तै १, ५, ९, ७; अन्विच्छे तै ४, ३, ११, ३; अन्विच्छ शौ ६, १३४, ३; पै ५, ३३, ६; १३, १, ९; ¶ अन्वैच्छत् मै १, ८, २; अन्वैच्छत् शौ १२, १, ६०; ¶अन्वैच्छन् मै १, ७, २; ४, २, ६; ४, ७[12]; काठ ८, १५; २५, २; क ८, ३; ३८, ५.

अन्वि(तु-इ)च्छत्[k]– -च्छन् शौ ६, ३७, १.

अन्विच्छती[*l]– -ती खि ४, ५, २१.

¶अन्वे(तु-ए)ष्टुम्[m] काठ २४, ७; ३०, ४; क ३७, ८; ४६, ७.

अन्वी(तु√ई), अनु····ईयते ऋ ५, ३४, १.

¶अन्वी(तु√ई)क्ष्, अन्वैक्षत काठ ७, ९; §अन्वैक्षन्त मै १, २, १५; ३, ९, ७; काठ ३०, ८; शौ २, ३४, ३; पै ३, ३२, ४; अन्वीक्षेत तै ६, ५, ६, ५; काठ ७, ९; ¶अन्वीक्षेत तै ६, ५, ६, ५.

अन्वीक्ष्य[n]– -क्ष्यः तै ६, ५, ६, ५.

---

[a]) 'अभ्येतु' इति सा.।

[b]) 'अनु···यन्ति' इति ऋ (१०, १३६, २) पाभे.।

[c]) 'अनु त्वा' इत्यनुवर्तयन् सा. पर्यनुयोक्तव्यो भवति। वैयर्थ्याद् वैपरीत्याच्च। विस्तरस्तु वैश द्र.।

[d]) वा. अनुबद्धं तृतीयान्तं पदं कर्त्तरीति कृत्वा यनि.धा. सकर्मकात् सतः कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९)। सहार्थस्य वा निपातस्याऽनोर् गतित्वकर्मप्रवचनीयत्वोभयोदासीनस्य सतोऽनुपसृष्टेन इत्- इत्यनेन कर्तरि क्तान्तेन 'अनुगत इतः' इति कृत्वा प्रास. अव्ययपूपप्रस्व. (पा ६, २, २)। एस्थि. उपसृष्टेभ्यो गत्यर्थेभ्यः क्ते प्र.उभयीयं विधा संभवन्ती यस्थ. प्रकरणतोऽनुसंधेयेति।

[e]) मूको. भ्रष्टः प्रतीयेत, तु. समानप्रकरणम् 'इन्वितम्' तै ३, १, ४, ४ (तु. नापूटि. यदनु, उभयथापि संभवत्यन्वयेऽन्यथाऽऽद्युदात्तत्वेन भाव्यम्)।

[f]) गस.भावे क्तिन्य् अनन्तरगतिस्वरः (पा ६, २, ५०)।

[g]) गस.ल्यबन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)।

[h]) गस.तुमर्थीयस् तवेन् प्र.पूपप्रस्व.च (पा ६, २, ५०)।

[i]) 'तवै' (पा ६, २, ५१) इति द्विस्वरी द्र.।

[j]) मूको. शोध-सापेक्षः। '····अन्वयी ब्रह्मा' इति वा '···अन्वये ब्रह्मणाम्' इति वाऽध्यक्षरः पादः स्यादिति।

[k]) गस. शत्रन्त-कृद्-विकरण-स्वरः (पा ६, १, १८६)।

[l]) -न्वि-° इति मुपा.स्वरो नितरामुत्तन्त्रः। 'शतुरनुमः' (पा ६, १, १७३) इति नदीस्वरस्यानिवार्यत्वात्।

[m]) गस. उप. तुमुन् प्र. द्र.।

[n]) गस. कृद्-उपप्रस्व. (पा ६, १, २१३; २, १३९)। उप. यत् प्र. डसं. (पा ३, १, ९७)।

¶अन्वीप्[a]– -पम् तै ६, ४, २, २; मै ४, ४, १[२]; काठ २८, ७; क ४४, १.
अन्वृ(नु√१ऋ), अनु···अर्त[b] ऋ ५, ५२, ६.
¶अन्वृ(नु√ऋ)ज्, अन्वृजेयुः तै ७, ५, ३, २[२]; काठ ३३, ५.
अन्वृ(नु-ऋ)जु[c]– -जवे तै २, २, ८, १; मै २, २, १०; काठ १०, ९; –जुम् तै २, २, ८, १; –जून् मै २, २, १०; काठ १०, ९.
अन्वृ(नु√ऋ)त्[d], ?अन्वर्तिष्ये[e] शौ १४, १, ५६.
†अन्व(नु-ऋ)र्तितृ[f]– -र्तिता ऋ १०, १०९, २; शौ ५, १७, २; पै ९, १५, २.
*अन्वृ(नु-२*ऋ)ति[g]-
√*अन्वृतीय्, अन्वृतीयामहे[h] मै ३, ७, ३; *अन्वार्तीयन्त मै ३, ७, ३[i]; काठ २४, १; क ३७, २.
अन्वृ(नु√ऋ)घ्, अन्वानृधुः पै ५, २९, ७; अनु···ऋध्याः ऋ ८, ४८, २[j].
ϕअन्वृ(नु-ऋ)घत्[k]– -घन्तः ऋ ७, ८७, ७.
अन्वे(नु-आ√इ), ¶अन्वायन्ति तै ६, ५, १, ४; मै १, ६, ११; ३, ७, ९; काठ २४, ८[२]; २७, १०; क ३८, १[२]; अन्वायुन्ति मै ३, ७, ९; ४, ६, ५; अन्वायसि पै २, ९, २; अन्वेहि[l] काठ ४१, ३; अन्वेत पै ५, १३, ९; अनु···एत[m] शौ ३, ८, ६; ६, ९४, २.
¶अन्वे(न्वा-इ)त्य[n] मै २, १, ३.
अन्वेतवे, अन्वेतवै √अन्वि द्र.
अन्वेष्टुम् √अन्विष् द्र.
?अन्वैतत्[o] शौ १८, ३, ४०.
√*अप्[p], अप्सन्त[q] ऋ १, १००, ८. [नि°]

---

a) 'अनूप' इत्यत्र टि. द्र.।

b) उत्तरार्धमात्रैकवाक्यत्वे सति यनि. भानु-कर्तृको-ऽन्वयः सुलभः स्वारसिकश्च द्र.। एस्थि. यत् सा. 'अनु-गच्छन्ति' इत्याक्षेपेण क्रियान्तरं चिकीर्षति 'विद्युतः' इति द्वि३ रू. 'मरुतः' इत्येतत्-समानाधिकरणं सत् प्र३ इति कृत्वा तत्-कर्तृतया च युयोजयिषति, तदसत्। तथाऽन्व-यस्य हि तस्याऽवशिष्टैः पदैर्वाक्यान्तरं चिकीर्षतस्तदर्थं च 'दिवः' इति पं१ सत् ष१ इत्येवं मन्त्रस्वारस्य-विरुद्धमनुजिगमयिषोर्नितरां दयनीयत्वप्रसङ्गात् (तु. PW. प्रमृ.)।

c) प्रास. अव्यय-पूपप्रस्व. (पा ६, २, २)। अनु (=सन्ततम्) ऋजु- (=प्रापणशील-) इत्येवं तात्पर्यं च द्र. (वैतु. भा. गस. इति वा बस. इति वा ब्रुवाणः। [तथा हि व्याख्यायमानं सदेतत् काममिन्द्रपरतया साध्व-न्वितं स्यान्न तु शाखान्तरोपस्थापित- सजात-परतया (तु. नाउ. यनि. मै. काठ. स्थले)। न हि कोऽपि यजमानः सजातानभिभावुकः संस्तानेवाऽऽत्मविधेयीकरणसमर्थत्वा-ऽऽत्मकविपरीतार्थप्रतीतिकरत्वेनेच्छेत्। अत इन्द्र-सजा-तोभय-सम्यगन्वयः प्रास. एव सुवचतर इति दिक्])।

d) यनि. √ऋत्=√१ऋ>*अर्त->√अर्त् यद्र.।

e) यनि. पपा. अनुवर्त्तत इव (वैतु. नाउ. टि. BW. प्रमृ.)।

f) गस. तृजन्त-कृत्-प्रस्व. (पा ६, १, १६३; २, १३९)। वें. सा. चैतत् प्राति. <अनु√ऋति इतीका-रान्तधातुमूलतां प्रतिपन्नौ भवतः (वैतु. BW. प्रमृ. एतद् रू. <अनु√वृत् इति कृत्वा मध्यतो वर्णलोपमास्थिताः [तु. ORN. २, ३३२])।

g) बस. पूपप्रस्व. (पा ६, २, १)। उप. <√२ऋ यद्र.।

h) मूको. शोधितो भवति (तु. संटि.)।

i) शोधनप्रवणः सुपा. स्वरतः स्वयं शोध-सापेक्षः द्र.। अन्यथा ह्य अनुपपन्नद्वैस्वर्यं प्रसज्येतेति (तु. तत्रैव 'व्युद्ध्यन्त' इति)।

j) अनेवंपश्यन्तौ PW. MW. च यथार्थदर्शिनौ न भवतः, अनोर्गतित्वभिन्नगतेरसम्भवात्।

k) अन्विच्छत्- इत्यत्र टि. द्र.।

l) 'अन्विहि' इति मा (२२, १९) पाभे.।

m) कप्र. इति WI.। यत्तु 'अनुचित्तेभिः' इति सा. संबन्धमैक्षत, तदसाधु। अपलक्षणद्वैस्वर्यप्रसङ्गाद् असंबद्धार्थप्रतीतिप्रसङ्गाच्च। परस्य स्वचित्तानुसारणं विवक्षितं स्यान्न तु स्वचित्तं प्रत्य् आगमनमिति।

n) तु. 'अन्वित्य' इत्यत्रत्यं टि.।

o) सा. अपि पूर्वतः मूको. विकृत इति संभाव्यते (तु. पाण्डु. टि.)। 'अनु ऐत् तद्' इत्येषा मौलिकी पदस्थितिः स्यादिति कृत्वा मध्यमतकारपुनरावर्त्तनपुरस्सरः 'अन्वैत्तत्' इत्येष शोध-जः पा. सुधीविमर्शसापेक्षः द्र.।

p) नाउउ. व्यु. औपयिकः धा. (मूलतः [√१ऋ> अर्-+प्-[<√२पा]>*अर्प्->√*अर्प्>√*अप्प्= √*अप्प्>√ अप्; √आप् यद्र. [तु. √जल्प्>[पंजा. √जप्प्>]√जप्])।

q) लेटि सिब्-अटौ (पा ३, १, ३४; ४, ९४)। अन्ये त्व् √आप् इत्येतस्य सगोत्रस्य सतो हसिता-ऽच्कत्वे सतीदं रू. इत्याहुः। तद् यथा। लङि क्सः

१अप्[a]- अपः[b] ऋ १, १५१,४.

अप्-तुर्[c]- -रः ऋ १, ३, ८; ११८, ४; २, २१,५; ९, ६३, ५; -†रम् ऋ ३, २७, ११; ५१, २; ९, ६१, १३; ६३, २१; १०८, ७; कौ १, ४८७; ५८०, २, ११२; ६८५; ७४४; जै १, ५१, १; ५९, ३; ३, ११, ८; २०, ४; ५६, १३.

†अप्-तुर्य[d]- -र्यम् क ३,१२,८; कौ २, ९२८; १०४५; जै ४, २, ७; -र्ये ऋ ३, ५१, ९; खि ५, ५, २.

*अप्-स[e]-

√*अप्स[f]

अप्सस्[g]- -प्सः क [१, १२४,७; ५, ८०,६];८,४५,५; मा १४, ४; १५, ३; का १५, १, ४; १६, १, ३; तै ४, ३, १२, २; मै १, १०, २; २, ८, १;७; काठ ९, ४; १७, १; ६; क ८, ७; २५, १०; २६, ५; शौ ६,४९,२; -प्ससा शौ ६, ४९,२. [°प्सस्- दीर्घ°, सहस्र°]

२अप[h]-, >*अध्>द्-, आप्-

इति सा., सन्नन्तप्रकारकमिति च PW. प्रभृ. (भूयसेऽपि विकल्पाय तु. √*अप्स)।

[a]) व्याप्तिविशिष्टकर्माऽऽख्यायां क्विपि निष्पन्नं सद् यनि. सद्भावतः संदिह्येत। एतदभिसंबन्धेन व्याचिख्यासितानां निगमानां परैः प्रायेण प्रागर्वाक्सामान्येन (वैतु. BW. MW.) नाउ. २अप्- इत्येतदभिसंबद्धतयैवाऽनुगमयितुमिष्टत्वात् (तु. NW.)। एस्थि. अपि सर्वेषां तेषां निगमानां भूयोविमर्शसहत्वाऽभ्युपगमत्वाद् यनि. प्राति. पृथग् उपपद्येत। वस्तुतश्च २अप्- इत्येतद्वाच्यभूतोऽर्थः १अप्- इत्येतदीयवाच्यभूतार्थवैशिष्ट्यमात्रतां संश्रयमाणो मूलतः २अप्- इत्यस्य सिद्ध्यपेक्षयाऽपि १अप्- इत्येतत् तत्पूर्वजभूतं प्राति. उपकल्पयेदित्यपि मौलिकशब्दप्रवृत्तिगवेषणासह्कारिणी दिक्।

[b]) यनि. रू. द्वि३ इति कृत्वा 'युवं बृहतो दिवो (धुरि गां न, अपः उप) आभुवं दक्षं युञ्जाथे' इति वा. द्र. (वैतु. सा. अपः=१अपस्- इत्येवं स्वरविवेकाभावाद् नितरां भ्रान्तः सन् वर्णकवैविध्येन पदान्तराण्यप्येतत्-सामानाधिकरण्यं निनीषुर्व्यर्थभूरिप्रयासः)। यनि॰ त्व् उप इति कप्र. इति कृत्वा 'यथा गामनड्वाहं शकटस्य धुरि युञ्जीरंस्तद्द्वारा साध्यं कर्मजातं च साध्नुयुः, एवं मित्रावरुणौ बृहतो दिवः (पुं. पं१ तत आगत्येत्यर्थः) यजमानमनोरथसंसिसाधयिषयेव तेन क्रियमाणेषु कर्मस्व् आभुवं नाम सर्वसाधकं दक्षमुत्साहं युञ्जाते इत्यहो सत्कर्मप्रवृत्तिषु दैवोऽनुग्रहः' इत्येवं व्याख्यानं सुवचं द्र.।

[c]) उस. उप.√तुर् + क्विप् कृत्-प्रस्व. च (पा ६, २, १३९)। निर्देश-याथार्थ्यस्य भूयोविमृश्यत्वं एपूटि. गतम् (एवं तु. WN ३,१६६ यत्र २अप्- इति पूप. आस्थायि)।

[d]) कास. कृत्-प्रस्व. (पा ६, २,१३९)। उप. √तुर् (>तूर्)+भावे क्यप् उसं. (पा ३, १, १०७)। तस्य च पित्त्वान्निघाते स्वरेऽविशेषः। सा. तु ऋ ३ ५१, ९ २अप्- तूर्य- (<√तूर्+भावे यत्) इति कृत्वा षतस. कर्मणि ष. कारकभावादप्रच्युता भवतीति दर्शनादिव कृत्-प्रस्व. आह (तु. द्विपूटि.)।

[e]) उस. उप.√सन्+डः प्र. उसं.(पावा ३,२,४८)। स्वरो नापू.द्र.(तु.नाउउ. च यस्थ.अप्सरस्-,अप्स(र>)रा- च यदीयायां व्यु. अस्यौपयिकता स्यात्)।

[f]) नाउ. व्यु. औपयिक इति सुकल्पो नाधा. (तु. √*अप्>अप्सन्त यस्मिन् रू. अयमवान्तरभूतः धा. अपि विकल्प्येत)।

[g]) असुन् प्र. (पाउ ४, १८९)। नित्स्वरः (पा ६, १, १९७)। √*अप् (<√आप्)+ससुन् प्र. (तु. या. ५, १३ [यस्थ. स्क. दु., दे. ३, ७ च]) इतीव प्राचामध्वा दवीयानित्युपेक्षि। एतत्-सरूपं भिन्ननिष्पत्तिकम् (<६अ+√प्सा) अपरमपि प्राति. प्रागभिमतं भवति (तु. गपू. या. [मै १,१०,२; काठ ९, ४; क ८, ७]; म. [मा १५, ३])। तत्रापि यनि. प्राति. एव स्यादिति तु संभाव्येत। विशिष्टार्थवृत्तित्वे सत्य् अत्याचरणप्रकारकपापपर्यायित्वपर्यवसानादिति दिङ्मात्रमिह स्याद् विस्तरश्च वैश. द्र.। एस्थि. भक्ष्याऽभक्ष्यप्रसङ्गाऽकल्पनायां √प्सा इत्यस्माद् व्यु. विकल्पस्याऽनवसरः। यच्चापि मा १४, ४ इत्यत्र उ. म. च २अप्- इत्युपपदे सति √सन् इत्यस्य कर्त्रर्थे कृद्वृत्तमातस्थाते, तन्न। स्वरानुपपत्तेः। तथात्वे हि कृद्-उपप्रस्व. स्यात्। किञ्च यद् मा १५,३ इत्यत्र म. अकारान्तमेतत् प्राति.इतीव प्रतीतिं कारयेत्, तदपि सकारान्तत्वविनिगमकरूपान्तरसंगमनाभावफलमित्युपेक्ष्यम्।

[h]) १अप्- इत्येतत्-समाना व्यु. द्र. (वैतु. √आप् [>√*अप्]+क्विप्[पाउ २,५८])। यथा तूभावप्य् √आप् इति च √*अप् इति च <√*अप्प् इति सगोत्रौ सन्तौ स्वाधीनावेव धा.भवत इत्यर्थम् √*अप् इत्यत्र संकेतितपूर्वोऽर्थः द्र.। अथ पाप्र. यदस्य प्राति. सुब्-वृत्ते सर्वनामस्थानीये रू. आपः प्र.३ इत्यत्र दीर्घत्वमनुशिष्यते (पा ६, ४, ११) तद् भूयोविमर्शसहं द्र.। असर्वनामस्थानविष-

*अधु्>द्- अद्भिः[a] ऋ १, ९५, ८; १२२, ६; १६१, १४; ४, ५४, ६; ६, ४९, १४; ८, ३५, ३; ९, ६५, ६; ६८, ९; ७४, ९; ९१, २; ९३, २; ९७, ४५; १०९, १७; १०, १४, ९; ६१, २६; मा ६, २८; १८, ३५; का ६, ७, ६; २०, १, ६; तै १, १, ८, १[२]; २, ४, ८, २; १०, ३; ¶६, ५, १[२]; ८, ३; ७; ¶५, ६, २, २; ७, ९, २[२]; ३; ६, ६, ३, ४¶; ७, ५, २३, २; ¶मै १, ४, ६; ८, ३[२]; २, ४, ७$; ८; १२, १$; ३, ७, १०; १०, १[२]; ४, ३, १०; ५, ५; काठ ६, ३[२]; ११, ७; ९; १०; १८, १३; २१, ७; २२, १३; २५, ५; ७; ९; २६, ८; २९, ६; ३०, १; ३२, ५; ३५, १५; ४३, ४; ४५, २०; ¶क ४, २[२]; २९, २$; ३९, २; ५; ४०, २; ४१, ६; ४५, ७; ४६, ४; †कौ २, १३५; ५११; ७६९; †जै ३, १३, ११; ४०, ७; शौ २, १०, २; ४, २७, ४; ५; १२, ३, ३०; १५, १४, ६; १८, १, ५५†; पै २, ३, २; ४, १०, ४; ५; १४, ७; ३५, ४; ५; ५, ३४, ५; ७; ८, ८, ५; १४, ८†; १४, १, ८; १४;

अद्भ्यः[a] ऋ १, ३४, ६; ८०, २; ११२, ५; २, १, १; ३८, ११; ५, ३१, ९; ७६, ४; ६, ६२, ६; ९, ५९, २; १०, ३९, ४; ६३, २; ८०, ३; मा ६, ८; ७, २१; ११, २७†; १७, १; १९, ७३; ७४; २२, २५; २९; २४, २१; ३१, १७; ३९, २; का ६, २, ३; ७, ८, ४; १२, २, १६†; १८, १, १; २१, ५, २[२]; २४, ११, १; १६, १; २६, ५, १; ३५, २, १; ३९, १, १; तै १, १, ८, १; ३, ८, १; ९, १; ११, १; ५, १, ४¶; ८, १३, ३; २, ४, ९, ३[२]¶; ३, ३, ¶६, २; ३[२]; ५, ८, १; ४, १, २, ५†; ६, १, १; ६, १, ७, १¶; ३, ६, ३; ४¶; ७, १, ११, १; ४, १४, १; ५, २३, १; मै १, २, १५; १६; ३, ३५; ७, २¶; २, ७, २†; १५; १०[२], १; ३, ९, ६[२]; १०, १[२]; ¶; ११, ६[२]; १२, १०; १४, २; ¶४, १, ९; ५, १; ३[२]; काठ ३, ५; ६; ८, ८; १५; ११, १०[२]; १५, ३; १६, २; १७, १७; १९; २१, ४; २६, ६[२]; ८[३]; ३०, ५[४]; ३१, ७; ३८, १[२]; ३९, २; ४१, २; ४४, ३; ४५, २०; ¶क $२, १२; १३; ७, ३; ८, ३; २८, १$; ४१, ४[२]; ६[३]; $; ४७, ७; शौ ३, ३, ३; १०, ५, ३३; १३, ७, ९; १५, २, १७; १९, ४३, ७; पै २, ७४, ३; १६, १२४, ८.

?*अप(:?) शौ २, ३, ६[b];

---

यत्वेऽपि द्वि३ दीर्घत्वस्योपलम्भात् (तु. ऋ १, २३, २३; शौ १०, ७, १०) । एस्थि. मूलतः *आप्- इत्येतद् दीर्घादेर् √आप् इत्यतो निष्पन्नं स्वाधीनं प्राति. सदपि कालेन २अप्- इत्येतेनाऽर्थाभेदवशात् समभित्तेति कृत्वा स्वतन्त्रानुक्रमणार्हस्य सतोऽपि तस्य यदिहैवाऽवान्तरस्य प्राति. इव निर्देशो भवति तत्र पूर्वागत-प्रसिद्धिमात्रानुरोधो बीजं द्र. । एवमप्य् २अप्- इत्यस्यैव भादौ प्र. परे तकारादेशो (पा ७,४,४८) भवतीति यदुक्तं भवति तदपि नेव रुचिरम् । भकारे परतः सति प्>ब् इत्यस्य वर्णसंक्रमस्य स्वाभाविकत्वेऽपि प्>त् इत्यस्याऽतथात्वात् (तु. अब्-द्-, अब्-भ्र- प्रमृ.) । तदेवं सर्वथाऽप्य् √अध्>*अधु्- इत्यस्य भिन्नव्युत्पत्तिकत्वेन संभाव्यमानस्य सतोऽपि समानप्रवृत्तिकत्वाद् २अप्- इत्यनेन संभिद्यमानस्येहावान्तरभावेन निर्देशः द्र. ।

[a]) पाप्र. सुप्-स्वरार्थम् 'ऊठ्-' (पा ६,१,१७१) इत्यत्र २अप्- इत्यनुरुध्य *अधु्- इत्यस्याऽपि उसं. द्र. ।

[b]) यनि. प्र३ (=आपः तु. सा. [यस्य पा. '''भवन्त्वाप ओष°''' इति संभाव्येत तु. पाएड.]; W., L. ४८१ d उउ.) । एस्थि. सौवरो विरोधस्त्वपरिहार्यः स्यात् । सर्वनामस्थानविभक्तिस्वरानुपपत्तेरिति यावत् । स्यादेतद् यथा सुपा. विकृत इति । तथाहि 'शं नः' इति 'इन्द्रस्य वज्रः' इति च जागतपादद्वयात्मके पूर्वार्धर्चे सति 'आरात्' इत्यारभ्य गायत्रपादद्वयतया मूलतः संभाव्यमान उत्तरार्धर्चे 'पतन्तु' इत्यतः पूर्वम् 'अस्मत्' इत्यस्य (तु. शौ १, १९, १ प्रमृ.) वा 'परः' इत्यस्य वा (तु. शौ ८, २, १२) च्युतस्येव सतः पदस्य सुपूरता द्र. । अथ प्रथमस्य जागतस्य पादस्य यतिभङ्गभङ्गार्थं 'शं नो भवन्तु, *अपौषधयः शिवाः' इति वा 'शं नो भवन्तु, *अप ओषधीः शिवाः' (तु. नाउ. टि.) इति वा मौलिकी स्थितिः स्यात् । प्रथमे कल्पे 'अप' इत्युपसर्गश्रुतेः '*घ्नन्तु' इति क्रिप. 'हन्तु' इत्यतः परिणमय्याध्याहार्य्यम् । 'ओषधयः' इत्येतत्-कर्तृ-शिरस्कं 'शं भवन्तु' इति च 'रक्षसोऽप घ्नन्तु' इति च वाक्यद्वयं क्रियेत । द्वितीयेऽपि कल्पे तावद् वाक्यद्वयान्तरं भवति । '(२अप्- >) *अपः(प्र३) शं नो भवन्तु' इति च 'ओषधीः शिवाः (भवन्तु)' इति च ।

६, २३, ३$^{a}$; अपः ऋ **१**, [१०, ८; ८, ४०, १०; ११]; २३, १८; ३२, १; ३६, ८; ५१, ११; ५२, ६; ८; १२; ५५, ६; ५६, ६; ५७, ६; ६४, १; ६; ८०, ३–५; ९१, २२; ९६, २; १००, १८; १०३, २; ५; १०५, ११; १२२, ९; १३१, ४$^{२}$; १५७, ५; १६१, ११; १६४, ४७; १६५, ८; १७४, २; [९; **६**, २०, १२]; १८०, ४; ५; **२**, ११, ५; १३, १; १४, २; २०, ७; २२, ४; २७, १३; ३६, १; **३**, ६, ७; ९, २; ३१, १६; ३२, ५; ६; ३४, ८; **४**, १६, ६–८; २६, २; २८, १; [३८, १०; **१०**, १७८, ३]; ४२, ४; **५**, २, ११; १४, ४; २९, २; ३०, ५; ६; ३१, ६; ८; ४१, १४; [४६, ३; **७**, ४४, १; **१०**, ३६, १]; ४८, १; ८३, ६; **६**, २०, २; २२, ८; २८, ७; ३०, ४; ५; ३२, ५; ३९, ५; ४७, १४; ५७, ४; ६०, २$^{२}$; ११; ६२, २; ६४, ४; [६८, ८; **७**, ६५, ३]; ७२, ३; ७३, ३; **७**, ९, ५; [(**२**, ११, २); २१, ३]; ३२, २७; ५६, २४; ६८, ८; ९५, १; **८**, ३, १०; ६, १३; १६; ७, २२; २८; १२, ३; १५, २; ६; २६, २५; [३२, २; **९**, १०९, २२]; ७६, ३; ८३, ३; ९६, १८; ९७, १५; **९**, २, ३; ३, ६; [७, २; ९९, ७]; १६, २; ४२, १; ६१, २२; ६२, २६; ६३, ७; ६८, ४; ७०, २; ७८, १; ८५, ४; [(**९**, ८३, ५) ८६, ४०]; ९०, ४; ९१, ६; ९४, १; ९६, ३; १३; १०७, ४; १८; १०९, २१; **१०**, ९, ५; १६, ३; ३०, १–५; १०; ३६, १; ४३, ८; ५१, १; ५८, ७; ६१, १६; ६४, ८; ६५, ७; ११; ६६, ८; ७६, ३; ८९, ४; ९५, १०; ९८, ५; १०४, ९; ११३, ६; १२१, ९; १२४, ७; १३८, १; १४७, १; खि **५**, ५, २; ७; १४, ३; मा **४**, १३; **६**, २२; **८**, २४; **१०**, १; **११**, ३८; **१२**, ३८; ३९; १०२†; **१४**, ८; **१८**, ५५; **२०**, २२‡$^{b}$; **२३**, ७; १७$^{३}$; **२५**, १; २; ७; ९; **३३**, ४९†; **३४**, २२†; **४०**, ४; का **४**, ५, ५; **६**, ५, ३; **९**, ४, २; **११**, २, १; **१२**, ४, १; **१३**, ३, ९; १०; ७, १†; **१५**, २, ३; **२०**, ३, ५; **२२**, १, ७†; **२५**, ३, ३; ४, ६$^{३}$; **२७**, १, १; २, २; ७, १; ९, १; **२९**, ४, ४†; **३२**, ४, ६†; **३३**, १, १६†; **४०**, १, ४; तै **१**, ४, ४५, १; ३‡$^{b}$; ४६, ‡$^{b}$२$^{c}$; ५, ११, ४†; ¶६, ७, ४; ८, १; ८, ११, १; १८, १¶; ¶**२**, १, ११, ४†; ३, १२, २; १४, ६$; ४, १०, ३; ६, ५, १$^{२}$; २; ६, १; **३**, १, ११, ७$^{२}$†; ३, ४, ३¶; ११, ५†; ५, ६, १; **४**, १, २, ४; २, ३, ३$^{२}$; ७, १†; ३, ४, ३; ७, १२, २; ¶**५**, १, ३, १$^{२}$; ५, १; ६, ५; २, ३, २; ३, १, ३; ६, २, १; ४$^{२}$; $**७**, १२, १; २०, १; ¶**६**, १, १, ३; ७; २, ६, १; १०, ३; ११, २; ३, ४, १; ४, १, ५; २, ३; ४$^{२}$; ३, २; ३$^{२}$; ५, ८, ६; ६, ३, १; **७**, १, २०, १; ४, २०, १; मै ¶**१**, ३, ३९$^{२}$‡$^{b}$; ४, ४$; १०$^{२}$; ६, ३$^{३}$; ७, २; ८, २; ३; ९; ९, २$; १०, ५, १९; **२**, १, ५¶; २, १३$^{२}$¶; ४, ७$^{३}$; ८¶; ६, ८; ७, ४; १०$^{२}$; १४†; ८, २; १२, ३; ¶**३**, १, ५$^{२}$; $; ६$^{२}$; २, ४; ९; ३, ५; ६, २; ७; ९$^{२}$; ७, ७; ८, ४; ९, ३; १०, १; ७; १२, १८$; $१५, १; २; ८; ९; ¶**४**, १, १†; ३; ४$^{२}$; ९$^{४}$; २, २$^{२}$; ३, ४;

$^{a}$) नापूटिदि. शं नो भवन्तु, '*अप ओषधीः शिवाः' इति मौलिक्यां स्थितौ संभाव्यमानायाम् '*अपः' इति कर्तृपदस्याऽऽर्थसंनिकर्षानुरोधतो यतेः पूर्वं पाठप्रवृत्तेराविर्भावाद् यतेः (५,७>७,५) इत्युत्तरसंक्रमः समजनि, तज्जः '*अप>अप' इति स्वरपरिणामश्च । एस्थि. अपि 'भवन्तु' इत्यत्रान्ते यण्-सन्धिरनिष्टः स्यात् । गायत्रेणार्धर्चेन जागतपादस्यैव सुयोजत्वप्रसिद्धेः (तु. शौ **२**, ३, ६ [यत्र द्वितीये कल्पे (तु. टि.) जागतपादपूर्त्यर्थंकतयैव 'ओषधीः>ओषधयः' इति पा. परिणामः सुवचः]) । एस्थि. नेह 'अपः>अपः' इत्येवं परिणामो निर्देश्यः (तु. W., गपू. L. च) किं तर्हि '*अप'>अॅप' इत्येवमविसर्जनीयान्तं च सयतिकं चेति (यतिमात्राधीनतया परिणामस्य पर्यवसेयत्वादिति दिक्) ।

$^{b}$) 'आपः' (=आप्->द्वि३)इति ऋ(**१**,२३,२३)पाभे. (यत्र 'सौ' (पा **६**, १,१६८) इत्यस्य च 'ऊड्' (पा **६**, १,१७१) इत्यस्य च समानः प्रवृत्त्यभावः द्र. ) ।

$^{c}$) अत्र भा. 'कर्माणि' इत्येवं व्याचक्षाणश्चिन्त्यः । कर्मवाचिनो हि १अपस्- इत्यस्य भिन्नस्वरत्वाद् बहुषु रूपान्यथाऽऽपत्तेश्च । एव चेदनिष्टः कर्मार्थाभिसंबन्धस्तर्हि १अप्- इत्यस्यैतद् रू. गृहाणेति । न ह्येतदपि सुवचं भवेत् । तदर्थं समग्रवाक्छचप्रकरणसंगमनसापेक्षता द्र. । ततो ह्येतत् स्पष्टं भवितुमर्हति यथा कथमत्र २अप्-

४, १; ३; ५, १[६]; २[६]; $[२]; ३; ४[३]; ७,७; ८, ५[५];९; ९, २७†; †१०, २; ६; †११,२;३; १२, ३$; ५[२]†;$; †१४,१;७; ११; १३;१४[२];१८; काठ ४,१३[३]‡[a]; १५[२]; १६; ५, ६; ६, २; ३; ८, २; ९[२]; १५; ९, १०; १८; १९; ११,५; ९; १३[२]; १२, १४; १३, १५; १५, ६; १६, ४; १०[२]; १४; १७, १; १९, ५[३]; २०, १०; २१, १४; २३, १; ६; ११; २४, १; ४[२]; २५, २; ३; ७[३]; २६, १[२]; ८; २७, ४; २९, ३[२]; ५; ३१, ३[२]; ७[२]; ३२, ५; ७[२]; ३४, १८; ३६, १; १३; ३७, १२; ३८, ५;७; ४०, ११; ४१, ११; ४४, ९; ५३,२;१०; ¶क ३,११$[a]; ४, १;२; ६, ७; ७,५[३]; ८,३; २५, १[२]$;५†;१०$; २९,४$; ३०, ३[२];$; ३१, २$;१०;१२; ३५, ७; ३७, २; ५; ३८, ५; ६[२]; ३९, ५[२]; ४०, ४[२]; ४१, ६; ४२, ४; ४५,४$;६[२]; ४७,३[२]; ७; †कौ १, ५३; १४८; ३३९; ३७१; ४१३; ४६६; ४७८‡[b]; ४९३; ४९४; ५११; ५३२; ५३९; २, २५; ११४‡[b]; १२६; २३२; ३६२‡[c]; ३८९; ४७९; ५००; ५६६; ६०७; ७६०; ७७४; ८०७; ३, ३, ३; ११; †जै १, ५, ९; १६, ४; ३५, ८; ३९, २; ४०, ५; ४८,६;५०,२‡[b];५१,७̊;८;५३, १; ५४, ८; ५५, ८; २, १, ३; ३,१; ३, ३,४; १२,१‡[b]; १३,

२; २०,१६; ३०,५‡[b]; ३१,९; ३६, ४; ४४, ६; ४९, ९; ५७, १२; ४, २८, ५; २९, १; ३०, ७; शौ †१, ४, ३; ५, ४; २, ५,५; ४, १५, १२[२]†; २१,७†; २७, ४; ६, २२, १†; २; २३, १; ७, ४२, १; ७९, १; ९४, १‡[a]; ११४,२; ८, ९,२३; ११, ८; १०; ९, ६, ४; १५, २२; १०, २, ७; ५, ३३; ४६; ९, २७; १०, ८; ११, १, १५; १८; ७, ७; ८, ११; १०, २८; १३, १, २; २१†; ३, ९†; १४, १, ३७†; २, ६९; १५, १४, ५; ११, ४; १८, २, ७†; १९, २, ५[३]; १८, ६; †२०, ९, ४; ११, ८; १५, ६; १७, ८; ३६, ८; ४९,७; ६१, ३;५; ६२,९; ६३, ९; ७५,२[२]; ७७,६–८; ७९,२; ९०,३; १२८, १४$; पै १,८४, ९; २,८३,१; ३,३१,१–८; ४, ९, ३; २४, १; ३५,४; ५, २, ८; ७, १०; ११; ६, ३, १;१०, २; ७, १७, ६; ८, ८, ४; ५; ११[३]; १०,८; १३,६, १†;१४, १,१;६;८; ३,९; १५, १४, ४; १६, २०, २; ५९, ८; ६०, ३; ९; ६९, १३†; ८७, ९; ९०, ५; ८; ९१, ७; १०७, ८; १११, ४; ११२, ८; १३१, १–१०[c]; १३३, ११; १३८, ८; १५०, ९; १५३, ७; †अपा ऋ ८,४,३; कौ १,२५२; २, १०७१; जै १, २६, १०; अपा३:[d] तै ६, ४, ३, ४; अपाम् ऋ १, २३, १९; ३२,

११;४६,४; ५१, ४; ५४,१०; ⌊५६,५; ८५,९⌋; ५७, १; ६१, १२; ६७, ५; ७०, २; ⌊१००, ११; ६, ४४, १८⌋; १२२, ३; १३४, ५; १४४, २; १४९, ४; १५८, ६; ⌊१६४, ५२; ३, १, १३⌋; १६८, २; १८१, १; १८७, ८; २, ⌊४, २; १०, ४६, २⌋; १२, ७; १७, ५; १९, ३; २३, १८; ३०, १; ३, १, ५; १२; ५, ३; २५, ५; ४५, २; ४, २१, ८; ४०, १; ५८, ११; ५, ४६, ७; ६, ८, ४; १३, ९; १७, १२; ४७, २७; ५२, १५; ६४, १; ७, ९, ३; ८२, ३; ८८, ३; ८९, ४; १०१,२; १०३,४; ८,१४,१०; १३; १६, २; ⌊१८, १६; (३१, १०)⌋;१९,४;२५,१४;४४,१६; ९३, २२; ९, ३३, १; ४९, १; ⌊७२, ७; ८६,८; (२१)⌋; ७४, ३; ७६, ५; २५; ३६; ९५, ३; ९६, १९; ९७, ४१; ५७;१०८, ५; १०; १०९, १३; १०, ८, ⌊१; ४५,३⌋;५; १७, १४; ३६, ८; ४६, १; ४९, २; ५१, ८; ७७, ४; ८९, १०; ९३, ५; ९८, १२; १२३, १; १२४, ९; १४२, ७; १६८, ३; खि ४, ७, १, ७; २, ६; ५, ५, ३[२]; ११; मा ३, १२†; ६, १०; ७, १६†; ९, ३[२]; ६†; १०, ३[४]; ७; ११, २९; ४६; १२, २०; ३७; १३, २; १४†; १७; ३०; ३१; ५३[१२]; १४, ५; १५, २०†; १७, ६; ७; ३२; ८७;

इत्येतदेव प्राति. सावकाशं न किमप्यन्यत् कर्मवाचीति दिक्। भूयांस्तु विस्तरः वैश. द्र.।

a) पाभे. कृते मा २०, २२ टि. गतं द्र.।

b) 'अपाम्' इति यक. ऋ (९, ३३,१; १०८,१०) पाभे.।

c) अपाम् इति मूको. शोध-सापेक्षो भवति (तु. सस्थ. टि. अप√क्रम्>अपक्राम)।

d) प्रश्नान्त उदात्तस्यापि प्लुतिः उसं. (पा८,२,१००)।

९९†; १८, ५४; १९, ७१†;
९४; २२, ६; २४, ३७; २५,
५; २९, ५३†; का ३, ३,२†;
६, २, ४; ७, ७, १†; १०, १,
४$^{२}$; २,३†; ११, २,३$^{४}$; ४,३;
१२, ३, २; ४, १०; १३, २,
३†;३,८; १४, १,२;१४†; २,
२; ३, ४; ५; ६, १$^{१२}$; १५,१,
५; १६, ५,१†; १८, १, ७;८;
३, ८; १९, १, १;१२†; २०,
३, ४; २१, ४, २१†; ६, १५;
२४, २, १; २६, ८, २; २७,
४, १; तै १, ३, ८, १; १०,
२; १३, २; ४, ८, १†; †५,
५, १; १०, ३; ७, ७, २†;
१२, २$^{२}$; ८, ११, १$^{२}$; १२,
१; २, १, ¶९, २$^{२}$; ३; ११,
१†; ४, ७, १; ९, ३¶; ३,
१, ११,३†; ३, १,२; ४,१$^{२}$¶;
५, १;३¶; ९,१; ४, ५, १; ४,
१, ३, १; ४, ३; २, ३, ३; ८,
१; ३, १,१$^{१२}$; ४,३; ११,५;४,
४,१†; ६, १, २;३†; २,४; ६,
६†; ७, १३, २; ५, १, ४,१;
२¶; ५,७;८¶; २,६,५$^{२}$¶; ४,
४,२$^{२}$¶; ५, १०, ६;७; २०,१;
२१, १; ¶६, २, १; ४; ४, ३;
५; ७, २१, १; ¶६, १, ९, ३;
३, ६, ४$^{२}$$; ४, ३, ३; ४, २;
६, ५, ४$^{२}$; ७, १, १४, १;
१६, १; मै १, २,१५; १७; ३,
१०†; †५,१; ५; ११, १†;४$^{२}$;
२, ४, ८$^{३}$¶; ५, १०; ६, ३¶;
७$^{२}$; ८; ७, ३; ४; १०; १६$^{२}$;
१८$^{१२}$;८,१; १०,१$^{२}$;†;३; १२,
३;१३, १०; ३,१,५$^{२}$; ६$^{२}$; ३,
६$^{६}$¶;६,२$^{२}$;¶; ७,२$^{२}$¶; ९,६$^{२}$;
११, ६; ९; १२, २; १४, १८;
१५, ४; १६, ३†; ¶४, ३ ४$^{२}$;
१०$^{८}$; ४, १$^{४}$; ५, २$^{६}$; ४$^{४}$; ७,

७; ९,१०$; ११,२†;१२,३†;
१३, १०†; काठ २,१;१५; ३,
५; ७; ४, ३; ६, ९; ८, ५;११;
१६; ११, ९; १०$^{२}$; १३, ९;
१४; १५; १४, ३$^{२}$; १५, ६$^{३}$;
१६, ३; ४; १०; १५; १८$^{१२}$;
१७, १: १७$^{२}$: १८, १; १५:
१९. ४$^{२}$; ५$^{२}$: १४; २०. ५:
७$^{२}$; २१, ७$^{२}$; २२, ९$^{४}$: १३;
२३, १; ११; २४, २; २६,८;
२९, ३; ५; ३०, ७; १०$^{२}$;
३५, ४; ३६, १५$^{८}$; ३७, १$^{२}$;
३८, ३; ३९, १; ३$^{२}$; १०;
४०, ६–८; ११: ४१, ५; ७;
४६, १; ४७, १०; ११; ५३,
११; क १, १३; २, १२; १४;
३, ३†; ४, ८†; ¶७, १; ८;
२५, १;६; ९$^{१२}$; १०; २८, १$^{२}$;
२; २९,४; ३०, २$^{२}$; ३$^{२}$; ३१,
७$^{२}$; ९$^{२}$¶; ¶३५, ३$^{३}$; ६;
७; ¶३७, ३; ४१, ६; ४५,
६¶; ४६, ८$^{२}$¶; ४८, ५†;
†कौ १, २७; ७१; ७७;
२११; ३३७$; ४३१; ५४२;
५४४; ५८४; २, ५२७; ६०५;
७८५; ८८२; १०६९; ११=५;
†जै १, ३, ७; ७, ९; ८, ५;
२२, ८; ३५, ६$; ४२,
५; ५५, ९; १०; ५९, ७;
३, ४०, १; ४१, ३; ४९, २;
४, २२, ६; शौ १, ४, ४$^{२}$†;
३५, ३; ४, ४, ५; ८,५; १५,
२; ३; १०; १२; ३७, ३; ५,
५, ७; १९, १३; १४; २४, ४;
२८, ६; २९, ८; ६,१०६,२†;
१२४, १; १२५,२†; †७,४०,
१; ५१, १; ८, ७, ८; ९,
४, २; ५; १०, ५, ७–२१;
५०; ८, ३४; ३५; ११, १,१३;
६, २६; १५, २, १८; १६, १,

१; ६; १८, ३, ५; ५६†;
६५†; १९, २, ४$^{२}$; ३३, १;
४५, ३; †२०, १५, १; २८,
४; २९, ३; ३४, ७; ३५, १२;
३९, ५; ४४, २; पै १, ८३, ३;
१०७, ४; २, ३२, ३; ३६, ३;
५९, ४; ७६, १; ८७, ३; ३,
२१, ४; ४, २, ६; ५, ५; ५,७,
२; ४; ८; ११; १०, ५; ६, ४,
६; १६, ९†; ८, ८, १०$^{२}$; १३,
११†; ९, १६,५; २२,१०;२३,
१९; ११, १, १०; १२, ३,१०;
५,१; ७,१४$^{२}$; १३,३,७;४,३;
६, ११†; ७, ७†; ९, ७; १५,
४, ३;७, २; ११, ६†; १६,
१२, ८; १३, १; २३, ६;
२४, २; ४; ९०, ३; १२४,
८$^{२}$; १२८, १–९; १२९,
१–१०; १३१, १–१०; १३२;
११; १५०, ९; १५२, १; २,
**अप्सु ऋ** १, २३, १९$^{२}$; [२०;
१०,९, ६]; [५९, ३; ९१, ४];
६५, ५; ९५, ३; १०४, ६;
१०५, १; १०८, ११; १०९,
४; ११६, २४; ११७, ४;१३५,
६; १५१, १; १६३, ४; १८२,
६; १८४, ३: २, [११, ५; ३,
३९, ६; १०, १४८, २]; ३५,
४; ५; ७; ८; ३८, ७; ३, १,
३; ९, ४; १३, ४: २२, २;
४, १३, ४; ५, ४४, ६;
४५, ११; ८५, २; ६, १९,
१२; [२५, ४; ६६, ८];
२९, ५; ३१, १; ४६, ४;
७, १८, १२; ७०, ४; १०३,
५; ८, १, १७; ९, ५; ४३, ९;
६८, ९; ८२, ८; ९, २, ५;
१६, ३; २०, ६; [२४, १; ६५,
२६; (६७, ७; १०१, ८)]; ३०,
५; ४२, १; ६२, ४; ५; ७१, ३;

७९, ४; ८०, ५; ८५, १०; ८९, २; ९६, १०; २४; ९७, ४७; ४८; १०७, १; २; १०, १०, ४; २७, १७; ३०, ४; ३२, ६; ४५, १; ३; ५; ५०, २; ३; ५१, ३; ६३, १५; ६५, ९; ७३, ९; १०४, २; १२५, ७; खि १, १२, २; २, १४, ९; मा ८, २५; ९, ६[२]†; २३; †१२, १८; २०; २२; ३५$; ३६; ४८; १३, ८; १८, ५५; १९, २; ९४; २०, १९; २३, १४; २९, १५†; ३३, ९०†; का २, ३, ५; ९, ४, ३; १०, २, ३[२]†; ५, १; †१३, २, १; ३; ५; ३, ६$; ७; ४, ४; १४, १, ८; २०, ३, ५; २१, १, २; ६, १५; २२, १, ४; २५, ४, ३; ३१, ३, ४†; त १, ३, १४, ५†; ४, ४५, २; ७, †७, १; २; १०, १; २, ३, १२, २¶; १३, १; १४, १†; ५, १, ६¶; १२, २†; ३, २, ५, ७; ४, ३, ८[२]¶; †४, २, २, १[२]; ३; ३, २; ४, ३; ८, ३; ११, ३; ६, ७, २; ¶५, २, २, ४; ५[२]; ३, १०, १; ५, ९, ३$; ¶६, १, १, २[२]; ४, १, ५; २, १; ४, २; ९, २; ६, ३, १; ४$; ¶७, १, ६, २–४; मै १, ३, ३९[२]; ८, २[२]¶; ११, १[२]†; ४; ६[२]†; २, १, ९; ३, १; ७, ९[२]; १०[२?a]; †; ११†; १५; १३, १०; १३; ¶३, २, २; ६; ६, २[३]; ३; १०; ७, ४; ११, ७†; ९$; ४, ¶२, ३; ९; ¶६, २[२]; ८, ५; ९, ६; †१०, ३; ४[२]; †१२, ४; ५; काठ २, ४[२]; ४, १३[२]; ६, २; ७, १३[२]; १४[२]; ८, ८; ९[२]; १०, ११[४]; ११, १०; ११; १३; १३, १२; १४[२]; १५; १४, २; ६[२]; १६, ९[३]; १०; ११; १५; १९, १२[२]; २२, १३; २३, १; ६; २७, ४; २९, ३; ३५, ३; ४; १२; १४; ३७, ९; १८; ३८, ३; ५; ३९, ५; ४०, ३; ५; ६; क ३, ११[२]; ४, १¶; ६, ३[२]; ¶७, ३; ५[२]; २५, १†; २; ६; ३१, २[२]¶; ३५, ७¶; ४२, ४¶; ४८, ४†; ५; १२; †कौ १, ३३१; ४१७; ४७३; ५१२; ५६४‡[b]; २, ३११; ३२३; ३५८; ३५९; ३९१; ६६३; ६६४; ९६४‡[b]; ११९४; †जै १, ३४, ९; ४०, ९; ४९, ७; ५३, २; ५७, ११‡[b]; ३, २५, ७; २६, ९; ३०, १; २; ३१, ११; ५५, ४; ५; ४, १९, ८; २०, ८‡[b]; शौ १, ४, ४[२]†; ६, २†; ३०, ३; २, ३१, ५; ३, २१, १; २२, ३; ४, ८, ७; १०, ७; ३०, ७†; ३७, १०; ६, ३८, २; ८०, ३; १३२, १–५; ७, ८८, १; ९२, १; ८, १, ११; १०, ५, १५–२१; ८, ४०; ११, २, २४; ४, १२; ७, १३; ८, २३; १०, ३४; १२, १, ३७; १३, १, १; २; ५०; २, ३०; ३, १५; १४, १, ३७†; १६, १, ७; १७, १, ८; १३; १८, १, ४†; ३, ६०‡[c]; ४, ८९†; १९, ३, २[२]; ८, १; २७, १०; †२०, २३, १; १३९, ५; पै १, १४, ३; ७०, २; ९१, २; १०४, ४; २, १५, ५; ३१, ६; ३४, ३; ३, १२, १; ४, २, ४; २५, ७; ८, १०, ७; १४, ३†; ९, ३, ४; १०, ७, १०; ९, १; १३, ४, ४; १५, २१, ९; २२, ४; १६, २, १; १९, १; ५६, १३; १०६, ४; १२९, १–१०; १५०, ७; १५१, ५; १५४, ४.

अ॒प्- ॒आपः ऋ [१, २३, २१; १०, ९, ७; (५७, ४)]; ३, ३३, १३; ७, ४७, १; १०, ९, १; ८; मा ४, ७; १०, ३[२]; ४; †११, ५०; ५२; १२, ३५; †३६, १४; १६; का ४, ३, १; †१२, ५, १; ३; १३, ३, ६; †३६, १, १४; १६; तै १, १, ५, १; ८, १; २, १, २; २, १; ८, १; २; ११, १; १३, १; ४, १, ५, १[२]†; २, ३, २; ६, १, २, २; ३; ३, ६, ४¶; ८, ४; ७, ४, १९, ४[२]†; मै १, १, ३; २, १; २[२]; १८; २, ७, ५[२]†; १०[d]; १३, १[२]; †; ३, १, ६†; ६, ४; कौ २, ११८९†; काठ १, ३; ३, ८; १२, १५[२]; १६, ४[२]; १०; ३५, ३[२]; शौ १, ५, १; ३; ६, ३; २, २३, १–५; ७, ८८, २; ११, ८, २३; १२, ३, ४[e]; १४, २, १६; १८, ४, ४०; १९, ४०, २; ०आपः ऋ [१, २३, २२; १०, ९, ८]; ६, ५०, ७; ७, ४७, २; ८, ७४, १५; १०, ३०, ७; ८; ११; १२; ७५, १; मा १, १२; ४, १२; ६, १३; १७†; २७; ८, २६; ९, ६; का १, ४, २; ४, ५, ४; ६, ३, २; ५, ५†; ७, ४; ९, ४, ४; १०, २, २; तै १, २, ३, ३; ३, १३, २; ४, ४५, ३; ८, १२, १; ६, १, ४, ९; ४, ३, ३; ६, ३, ४; मै १, १, ४; ११; २, ३[२]; १६; ३, १; २, ६, ७[२]; ८; १३, १; ३, ६, ९; १०, १; ४, १, ४; ४, २; काठ १, ११;

a) 'बिभृता सु' इति मुपा. मध्यतः पकारश्लेष इव द्र. (तु. पपा., मा १२, ३५ च) ।

b) 'आसु' इति ऋ (९, ८६, ४३) विशिष्टः पाभे. ।

c) इह ऋ (१०, १६, १४) विशिष्टः पाभे. ।

d) स्वररहितो मुपा. चिन्त्यः ।

e) तु.सस्थ.टि.अभि-समे(मू-आ√इ)>···समे॒त्य ।

२, २$^{२}$; ४; ३, ६; ९; ४, १३;
१५, ६$^{२}$; १९, ५; १२; २३,
२; ६; २९, ३; ३१, २; १०;
३८, ५; ३९, १; २; ४४, ८;
क १, ११; १४$^{२}$: १६; २, १३;
१५; १६; ३, ११; २५, १; ३०,
३†; ३१, २; ३५. ८; ४७, २;
१०; ४८, ४†; शौ १, ३३, ४;
३, १३, २; ७; ७, ९४, ३;
१०, ५, ६–२१; १२, ३, १३;
२७; २९; १६, १, ८; १२; ४,
६; पै २, ४०, ५; ३, ४, २;
६, ३, ६; ७; १२; ८, ८, १;
१४, १, ५; १५, ३, ९;
१६, ७०, १०; १२७, १–५;
१२८, १–९; १२९, १–१०;
आपः ऋ १, ८, ७; २३, २०;
[२३; १०, ९, ९]; २४, ६;
३२, २; ८; १०; ११; ३३,
११; ५७, २; ६३, ८; ६५, २;
८३, १; २; ९६, १; [१००,
१५; (१६७, ९)]; ११६, ९;
१२५, ५; १५३, ४; १६१, ९;
१६९, ३; १७३, ८; [१७५, ६;
१७६, ६]; १७८, १; २; १९०,
७; २, २४, १२; ३०, १; ३५,
३; ४; १४; ३८, २; ३, १,
११; ५, ८; २२, ३; ३०, ९;
३३, ७; ३५, ८; ३६, ६; ५१,
५; ५४, १९; ५६, ४; ७; ४,
३, १२; १७, २; ३; १८, ६–८;
३३, ७; ३८, ४; [४७, २; (५,
५१, ६) ८, ३२, २३]; ५७,
३; ५, ३४, ९; ४१, ११;
१२; ४५, १०; ४७, ५; ५३,
१४; ५४, २; ५८, ६; ६०,
३; ६, २४, ६; ३४, ४; ४०, २;
४८, ५; ६६, ११; ७, १८, १५;
२३, ४; ३४, २; ३; २३; [२५;
५६, २५; १०, ६६, ९]; ३५,
८; ४९, [१–४]; २; ८५, ३;
९०, ४; १०१, ४; १०३, २;
१०४, ८; ८, [६, ३४; १३, ८;
९, ६, ४; २४, २]; १५, ८; ३३,
१; ३९, १०; ४९, ३; ५०, ३;
५४, ४; ५९, २; ६९, ११; ८९,
४; ९४, ७; ९६, १; १०२, १४; ९,
[२, ४; ६६, १३]; ८२, ३;
५; ८८, ७; ११३, ८; १०, २,
७; ४, ५; ९, ३; ४; १२, ४; १७,
१०; २७, २०; ३०, ६; १३;
१५; ३७, २; ६; ४३, ७; ४६,
९; ६४, ९; ६५, १३; ६६, १०;
७८, ५; ८२, ५; ८५, ४७; ८८,
२; ८; १८; ८९, १३; ९१, ६;
९५, १३; ९८, ६; १०४, ८;
१०९, १; १११, ८$^{२}$; १२१, ७;
८; १३७, ६$^{३}$; १३९, ४; खि १,
६, २; २, ६, १, १२; १५, १; ३, १,
३; २, ३; ६, ४; ९, १; १०, २, ९;
४, ५, २७; २९; मा १, २१; ४,
१; २†; ६, १०; १७†; १८;
२२; २३; २६; २८; ८, २५;
१०, ७; १२, ४९†; १३, २५;
१४, ६; १५; १६; २७; १५,
१८; ५७; †१७, २९; ३०; १८,
१४; ४१; २०, १८; १९$^{२}$; २०;
२६, १; †२७, २५; २६;
३२, १; ७$^{२}$; ३३, १८†; ३४,
५५; ३५, ९; १२; ३६, १२;
१७; २३; ३८, २३; का १, ८,
१; ३, ९, ३; ४, १, २$^{२}$; †; ६, २,
४; ४, १; ५, ४; ६, १; ७, ३;
६; ९, ४, ३; ११, २, ३$^{२}$; ४,
३; १३, ४, ५†; १४, २, ११;
१५, १, ५; ४, ३$^{२}$; ८, ५; १६,
४, ७; ७, १; †१८, ३, ५; ६;
१९, ५, २; २०, २, ४; २२,
१, ४$^{३}$; ५; २८, १, १; †२९, ४,
३–४; ३२, २, १†; ३३, २, १८†;
३५, ३, १; ४, ८; ११; ३६, १,
१२; १७; २३; ३८, ५, ६; तै
१, १, १३, १; २, १, १$^{२}$; †; ३,
१०, १; १२, १; ४, ४५, २$^{२}$;
८, १¶; ७, ¶५, २; ३$^{२}$; १३, १†;
¶२, १, ५, ४$^{३}$; ९, २; २, १२, १†;
३, २, ८; १३, ३; ५, १२, २$^{२}$†;
६, ४, ४; ८, ३; ७; ३, १, १, २¶;
११, ३†; ६†; ८; ३, ४, ३¶; ४,
७, २; ४, १, †८, ५; ६; २, ४,
२†; ४, ३, २; १०, २; ११, १;
६, २, ३$^{२}$†; ७, ५, १; ¶५, १, ३,
१; ५, १; ६, १; ३, १०, २; ४,
४, ३; ८, ३$; ५, ४, १; १०, ४;
६, $१, १$^{२}$; २$^{२}$; ३$^{४}$; ४$^{२}$; २, १$^{२}$:
२$^{३}$; ४; ४, २; ५; ७, ५, ३; ९, २;
३; ¶६, १, १, ७$^{२?a}$; २, ३$^{२}$; ४, २,
३; ४$^{२}$; $; ३, २; ४; ६, ३, ४$;
७, १, ५, १¶; ३, १३, १; मै १,
१, ९$^{२}$; २, १$^{२}$; ¶; १५; १७; १८;
३, १$^{२}$; ३९; ४, २; ६¶; १०¶;
६, २; ३¶; ७, २¶; ८, ३$^{५}$¶;
२, ¶१, ५; ९; ¶५, ४$^{२}$; ६$^{२}$; ७,
११†; ८, १०; १२$^{२}$; १०, ३$^{२}$†;
११, ५; १२, २; १३, १$^{७}$; †$^{२}$; १५;
२०; २३†; ¶३, १, ६; २, २; ३$^{३}$;
४, १; १०$^{३}$; ६, २$^{२}$; †; ३$^{२}$; ४;
९$^{३}$; $; ७, ४; ८, ४$^{४}$; ६; ९; ९,
३; ६$; १०, १; ¶४, १, २$; ३;
४$^{७}$; ९$^{५}$; $; १३; २, ३; १०;
३, ४; ९$^{२}$; १०$^{२}$; ४, १$^{५}$; २;
३; ४; ५, १$^{६}$; $; २$^{३}$; †; ३; ४; ८,
५$^{२}$; ९; ९, ११$; २७$^{३}$†; $; १०,
१$; ४‡; ६†; ११, १†; †१२, ३;
४; ५; ४; १४, १२†; १३†; १७;
काठ १, ८; २, १$^{४}$; ३, ७;
८; ९$^{२}$; ४, १३; ५, ५; ६, २; ३$^{५}$;

a) एकतरत्र तु. टि. सस्थ. अपोत् √क्रम् > । ?अपोदक्रामत् ।

७, १४; ८, २; ५; ८; १०;
१५; १६; ११, २; ५; १३, २;
४[२]; १६[२]; १६, ११; १७, ९; १०[२];
१८, १[२]: १०; १४; १९,
५; १२; १४; २०, १०; २१,
७[२]; ११; २२, ९[२]; ११; २३,
२; ५[२]; ६[४]; ८[२]; २४, ९[२]; २५,
२[२]; ३[७]; ५; ७; ९: २६, ८[२];
२८, १; २९, ३[२] ५[२]; ६; ९;
३०, १; ३१, २[२]; ३[५]; ७[३]; १०;
३२, २; ७; ३४, ८; १८; ३५,
३[४]; ४; ११; १५; १६[२]; ३७,
९[२]; ३८, ५[३]; १२; १३; ३९,
१३; ४०, १; ६; १४; ४३, ३;
४५, १२; ¶क $१, ८; १३[३]; †[२];
$२, १४; १५; १६[२]; ३, ११[२]$;
४, १; २[५]; ६, ३$; ७[२]; ७, १; ३;
६; ८, ३; २५, २†; $२६, ८; ९[२];
२८, २[२]†; १०$; २९, ३$; ३०,
३: ३१, २; १२; ३५, ३[२]; ५; ८;
३८, २[२]; ५[२]; ६[६]; ३९, २; ५;
४०, २; ४१, ६[२]; ४४, १; ४५,
४[२]; ६; ७; ४६, ४; ४७, २[२];
३[५]; १०; ४८, ४$; ११$; १४[२];
†कौ १, ६८; २६१; २, २१४;
३१२; ३९०; ६६७; ८२३;
९२१; ९७९; ९९६; ११७४;
११८७; ३, ३, ६; ४, १२$;
†जै १, ७, ६; २७, ९; २,
१, ६; ८; ३, १९, ९; २५, ८;
३१, १०; ५५, ८; ४, ४, ४;
६, ६; २३, ३; १०; २८,
१०; २९, २; शौ १, ६, १†;
४[२]; २५, १; ३३, १–४; २,
५, ६; ७, १; २९, ५; ३, ७,
५[३]†; १२, ९; १३, ५[३]; २१,
१०; २६, ३: ३१, ३; ४, २,
६†; ८; ८, ४–६; १५, १; ५;
९; ११; ५, १७, १†; २८,
२; ६, २३, २; २४, १; २;
५१, २†; ५८, २; ६१, १; ६८,
२; ८५, ३; ९१, ३[३]†; १२४,
२; ७, १९, २; ४१, १; ६६, १;
११२, १; ११७, १; ८, १, ५;
२, १४; ४, ८; ७, ३; ९, १,
९[२]; २, २०; ३, २२; ६, ५;
१६; १०, २, ११; १६; ५,
२२; २३; ६, ३; १४; ७, ६;
१०; ११; ३७; १०, ४; २९;
११, १, १७; २, ८; २४; ७,
१३; ९, २; २०; १०, २९; ३०;
१२, १, ३; ९; १९; २३; ३०;
५३; २, ४०; १३, १, ४५;
३, ६; ७, ९; १४, १, ३९;
४०[२]; २, ४५; १५, २, १६; ७, २;
३; १५, ७; १६, १, १०; १८,
१, १७; ३, ११; ४, ३९[२]; १९,
२, १[२]; २[२]; ३; ९, १; १४;
१०, ८†; १७, ६; २७, ३; ९;
४३, ७; ४४, १; ९; ५४, १;
†२०, १२, ४; १५, २; १७, ७;
२५, १; २; ५२, १; ५७, १४;
७१, ३; ९२, ८; १०६, २;
१४३, ८; पै १, १३, २; २५,
१–३; ४[२]; ३२, १; ३३, १;
३–५; ४०, ३; ४७, २; २, ४०,
४; ५६, २; ७५, ४; ८५, ४;
३, २, ७[३]; ४, ५[३]; ११, २; १७,
६; २३, ४; ४, १, ७†; ८; २, ५;
६; ३, ३; १८, ७; २०, ४;
२७, ५; ४०, ७; ५, ७, १;
१०; १४, २; १८, ६; ९[३]†; ६,
३, ३†; ४; ५; ८–१०; १८, ९;
७, ३, ९; ११, १; १६, ६;
८, ८, २; ४; ६; ७[२]; ८[२]; ९;
१८, ३; ९, ३, १; ११, ५;
१५, १†; २१, ८; २३, ३; १०,
४, ७; ७, ३; ९; ९, ४; ९; ११,
७, १०; १२, २, ११; ७,
१[२]–१४[२]; १३, ३, ८†; †६, २;
८; १०; ११; ८, ८†; १०, १०;
१४, ४; १४, १, १–१७; १५, ३,
१; १५, ५; १६, १, ५; ४, ४;
९, ८†; १२, ३; ३२, ९[२]; ४१,
३; ४; ४२, ३; ४३, ८; ७०, १;
७१, ३; ७२, ७[२]; ७८, २; ४;
८२, २; ८३, १०; ८७, १०; ८८,
१; ९०, ७[२]; १०३, ११; १०४,
८; १०६, ४; १०७, ४; १०९,
९; १११, ५; ११२, ३; १३०,
१; २; १४९, ९. [°प्- रीति°]

**आप[a]–** -पस्य कौ २, १००६; जै ४, १७, ११.

**¶आपीँय[b]–** -यानाम् काठ ३१, ७.

**¶आपीय-त्वँ[c]–** -त्वम् काठ ३१, ७.

**¶आपेय[d]–** -यानाम् मै ४, १, ९; क ४७, ७.

**¶आपेय-त्व[c]–** -त्वम् मै ४, १, ९; क ४७, ७.

**१*अप[e]-**

---

[a]) समूहार्थे अञि ञित्-स्वरः (पा ४, २, ३७; ६, १, १९७ [तु. लोके 'आप-गा-']) ।

[b]) शैषिकश् छण्->ईयः प्र. उसं. (पा ४, २, १३८)। प्रत्यय-स्वरः । मै. क. च सश्रु. आपेय- (यद्र.) इति पाभे. एउ. द्र. (तु. आत्मीँय-) ।

[c]) भावे त्वः प्र. (पा ५, १, ११९) । तत्-स्वरः ।

[d]) शैषिकः ढक्>एयः प्र. उसं. । कित्-स्वरः (पा ४, २, ९७; ६, १, १६५) । काठ. सश्रु. आपीँय- (यद्र.) इति पाभे. एपू. द्र. (तु. आत्मेय-) ।

[e]) कृत्तद्धितोभयविलक्षणमुच्चारणसौकर्यसहकृतच्छन्दोमानापेक्षाप्रयोजित-स्वरभक्त्यवसानमिव सदिदं प्राति.ऐतिहासिक्या दृशा नाउ.प्रकृतिमद् द्र.(=*अव्-वत्->नाउ.) ।

अुप-वत्[a]- -वान् शौ १८, ४, २४.

अपां-योग[b]- -गः पै १६, १२७, ५.

अपां(नुपात्-)[c] ऋ १,२२,६; १२२, ४; १४३, १; १८६, ५; २, ३१, ६; ३५, १–३; ७; ९; १०; १३; [३, ९, १; (८, १९, ४)]; ५, ४१, १०; ६, ५०, १३; ५२, १४; ७, ३४, १५; ३५, १३; ४७, २; १०, ८, ५; ३०, ३; ९२, १३; मा ८, २४; का ९, ४, २; तै १,६,१२,४†; २,५,१२,१; २†; मै १,३,३९; २, १३, १[२]†; ४, ५, २; १२, ४[२]†; काठ २,४; ३,९; ४,१३; ११, ९; १२, १५[२]; १३, १४; १४, ६; १५, ६; २२, २; ३५, ३[३]; क ३, ११; ४८, ४[२]†; †कौ १,६२;२,७६४; ३, ३, ६; †जै १, ६, ८; २, १, ६; २, ४; शौ १९, ११, ३†; ४२, ४; पै १३, ८, १३†; ०अपां(नपात्) ऋ १०, ३०, ४; १४९, २; तै १, ४, ४५, १; ७, ७, २; २, ४, ८, १; मै १, ११, १; ६; २, ४, ७; शौ ६, ३, १; ३; १४, १, ३७†; ०अपां(नपात्) मा ६, २७; का ६, ७,४; १०, २, २; तै १, २, ३,३;३, १३,२; ६, १,४,९;४, ३,३; मै १,२,३;३,१;२,६,७[२]; ३, ६, ९; काठ ३, ९; २३, ६; क १,१६;२,१६; पै ३, ३१,५.

१अपुां(नुप्तृ-[c]) ऋ २, ३५, ११;६,१३,३; १०,३०,१४; तै १, ८, १६, २; ५, ५, १३, १; मै २, ६, १३; ४,४, ७; काठ १५, ८; ४७, ३.

२*अपां-नप्तृ[d]-

¶अपांनप्त्रीयु[e]- -यः काठ १२, ६.

१*अ(पः>)पो-(नप्तृ-)[f]

२*अ(पः>)पो-(नप्तृ)[d]-

¶अपोनप्त्रीय[e]- -यः मै २, ३, ३; -यम् तै २, ३, १२,२; -याभ्याम् मै २, ३, ३.

अप्सु[g]-

अप्सव्य[h]- -¶व्यः मै २,३,३; -व्याः काठ ३५, १५; -व्यौ काठ १२, ६¶.

†अप्सु-क्षित्[i]- -क्षितः ऋ १, १३९, ११; मा ७, १९; का ७, ८, १; मै १, ३, १३; ४, ६, ४.

अप्सु-च(र->)रा[j]- -रा पै १६, ७३, १.

अप्सु-जु[k]- -जः तै ५, ३, १२, २¶; पै १, ४५, २; -जम् पै १, ४५, १.

[a]) 'अपूप-वत्-' इतीव प्राति. पुनरावर्त्य पिपठिषुः सा. चिन्त्यः । यावदुपलभ्येषु तद्भिन्नेषु मूको. यनि. एवोपलब्धेश्च (तु.टि. पाएडु.) छन्दोऽनुरोधदृष्टेश्चेति । ननु कथं यनि. छन्दोऽनुरुद्धं भवति सा. च तद्विरुद्धमिति । उच्यते । इह स्थ. षोडशाद् मन्त्रात् प्रभृति नवसु मन्त्रेषु पूर्वार्धे निचृतोऽनुष्टुभो मानमिव भवति । द्वितीयपादस्थ-सन्धिभावाभावविवेकतश् चतुर्दशानां पञ्चदशानां वाऽक्षराणां सद्भावादिति यावत् । सस्थ. एतद्भिन्ने-ष्वष्टास्वपि मन्त्रेषु सर्वत्र प्रथमे पादेऽव्यभिचारेण सप्ता-नामक्षराणां श्रवणात् तद्वदिहापि प्रथमे पादे सप्ताना-मेवाक्षराणां श्रवणस्य मौलिकत्वेन प्रतिपत्तेः, सा. च कल्पनायामष्टानामक्षराणां श्रवणप्रसङ्गादुक्तमौलिकस्थिति-विघातापत्तेः । अथ यनि. कथं स्वर इति । मतुपि प्रकृतिभूतस्य प्राति. मूलतो हलन्तत्वे सत्य् अहस्वा-न्तत्वाच्च स्वरभक्त्यन्तत्वे सत्यप्यन्तोदात्तत्वाभावाच्च न 'ह्रस्व-' (पा ६,१,१७६) इत्यस्य प्रवृत्त्यवसर इति दिक्।

[b]) किमत्रैकपद्ये ज्ञापकं भवतीति । पूर्वमन्त्रेष्वसकृद् योगोत्तरपदस्य समस्तस्य प्राति. श्रुतेः शाखान्तरीये (तु. शौ १०, ५, ५) प्रस्तुत एव च मन्त्रे किञ्चिन्मात्रभिन्नस्य अप्सु-योगु- इत्यस्य समस्तस्य (यद्र.) प्राति. श्रुतेश्चेति ।

[c]) द्वैपद्ये सत्यप्यार्थस्य संबन्धस्यैक्यवृत्तिकत्वप्रद-र्शनार्थमेव सामासिक इव निर्देशः ।

[d]) नापू. अभिन्नं सदपि नाउ. तद्धितोत्पत्तौ प्रकृति-भूतमिति कृत्वाऽभिनिर्वृत्तसमासतयाऽयं पृथङ् निर्देशः सुकल्पः द्र. । षतस. सासस्व. च ।

[e]) साऽस्यदेवतीयश् छ->ईयः प्र. (पा ४, २,२८) । प्रत्यय-स्वरः ।

[f]) एवंविधायाः श्रुतेरभावेऽपि द्विपू. सकृत्तया नाउउ. च मूलतया सुकल्पमेतत् स्वरूपतो द्वित्वविभक्तं सदप्यर्थत ऐक्यमापन्नमिव प्राति. द्र. । एस्थि. २अुप्-इत्यस्य लोकविलक्षणतयैकवदप्युपचारो वेदानुमतो भवति।

[g]) स३ सद् नाउउ. सुब्-अलुक्तया पूप. भवतीति कृत्वा पृथङ् निर्देशः (तु. पा ६, ३, १४ उउ.)।

[h]) तत्रभवीये यति तित्स्वरः सुब्-अलुक् च (पा ४, ३, ५४; ६, १, १८५; पावा ६, ३, १८) ।

[i]) उस.उप.√२क्षि + क्विप्,कृत्-प्रस्व.(पा६,२,१३९)।

[j]) उस. उप. स्त्रियां ङीपोऽदर्शनाद् ट-प्रत्ययान्ताच्च टिदनुबन्धाद् अच्-प्रत्ययान्ताच्चान्यत् प्राति. उसं. (पा ३, १, १३४; २, १६) ।

[k]) उस. उप. √जन्+डः प्र. । स्वरः एपूदि. द्र. ।

का १८, १, १५; तै ४, ६,१,५; ५, ४, ५, ३; मै २, १०,१;१३, १६; ३, ३, ६; काठ १७, १७; २१, ७; ३९, ९; क २८, १.

अपान-दृह्[a]- -धृक् तै ७, ५, १९, २; काठ ४५, १५.

अपान-पा[b]- -पाः मा २०,३४; का २२, ३,३; तै ३,२,१०,२.

अपा(प-अ)नत्[c]- -†नतः[d] मै १, ६, १; शौ ६, ३१,२; २०,४८, ५; -नता[e] मै ४, ७,७¶; -नते शौ ११, ६, ८; पै १६, २१, ७.

अपानती[f]- -†ती ऋ १०, १८९, २; मा ३, ७; का ३,१,७; तै १, ५, ३, १; काठ ७, १३[g]; क ६, ४; कौ २, ७२७; ३, ५, ५; जै २, ६, ४; ३, ५९, १९; -¶तीः तै ५, ३, ६, २.

¶अपा(प-अ)न्य[h] मै ४, ७, ७; काठ २७, ३[२]; क ६, १[२]; ४२, ३.

अ-पापकाश(न्>)नी- -नी पै १४, २, ८.

अ-पापकाशि(न्>)नी[i]- -नी मा १६, २; का १७, १, २; तै ४, ५,१, १; मै २, ९,२; काठ १७, ११.

अ-पापत[j]- -ताः पै १३, १२, ५.

अ-पापविद्ध[k]- -द्धम् मा ४०, ८; का ४०, १, ८.

¶अ-पामंभविष्णु[l]- -ष्णवः मै ३, ६, ८.

अपा-मार्ग अप√मृज् द्र.

अपा(प-आ)√मे>मि[m]

अपा-मित्य[n]- -त्यम् मै १, १०, २; काठ ९, ५.

अपा(प-आ)√१यम्

¶अपा-यति[o]- -तिः काठ २८, ३; क ४४, ३.

अपायिन्- अपे(प√इ) द्र.

अपार(प√१ऋ), †अप···ऋण्वन्ति ऋ ९, १०, ६; कौ २, ४७४; जै ३, ३५, ९; अप···ऋणुत ऋ ५, ४५, ६; अप···ऋणोः ऋ ९, १०२, ८.

अ-पार,रा[p]- -रः ऋ ५, ८७, ६; ८, ६, २६; -रम् ऋ ४, १७, ८; तै ७, ५, ३, २¶; काठ ३३, ५¶; कौ १, ३३५†; †जै १, ३५, ४; ४, ११, १; पै १६, ५२, ३; -राम् ऋ ३, ३०, ९; -रे ऋ ३, १, १४; ३०, ५; ४, ४२, ६; ९, ६८, ३; -†रेण ऋ १०, ४४,१; शौ २०,९४,१.

*अपार्ष्टि- अयोपार्ष्टि- टि. द्र.

*अपाष्ठ- अपाष्ठ- टि. द्र.

†अ-पा(ल>)ला[q]- -लाम् ऋ ८,९१, ७; शौ १४, १, ४१; पै ४, २६, ७.

अपावः अप√२वृ द्र.

?अपावकीय[r] पै १५, १७, ८.

?अपाव(न्>)री[s]- -रीः पै १,८९,३.

अपा(प-आ)√वृज्

अपा-वृक्त[t]- -क्ताः ऋ ८, ८०,८.

अपा(प-आ)√वृत्>वर्ति, ¶अपा-वर्तयेत् काठ ३५, १७; १८[२]; क ४८, १५; १६[२].

---

[a]) सस्व. नाउ. द्र. । उप. √दृह्+क्विप् प्र. । पदान्ते घत्वं भष्त्वञ्च (पा ८, २,३२; ३७) ।

[b]) उस. विजन्त-कृत्-प्रस्व. (पा ६,२,१३९) ।

[c]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९) । शसाद्यजादिर्विभक्तिरुदात्ता (पा ६, १, १७३) ।

[d]) 'अपानती' इति ऋ (१०, १८९, २) पाभे. । इह तसिः प्र. इति कृत्वा 'अपान-तः' इत्येवमवग्रहे सति 'अग्नेः प्राणाऽपानाभ्यां, सूर्योऽर्णवेऽन्तश्चरति' इत्यन्वयस्य सुशकत्वेऽपि यनि. एवाऽऽदरः । बाह्वृचमूलसंवादनौचित्यात् (तु. यस्था.) पपा. तथातवाच (तु. संटि) । एस्थि. अपि शाखाद्वयीयौ वा. अन्योन्यतो नितरां विविक्तौ भवत इति यथायथमाकरत एवाऽनुसन्धेयमिति दिक् ।

[e]) मुपा. स्वरोऽपतन्त्रत्वात्सुत्यजः ।

[f]) स्त्रियां ङीप् प्र. स चोदात्तः(पा४,१,६;६,१,१७३)।

[g]) आख्यातिकं रूपमिति मन्वानः SIM. चिन्त्यः ।

[h]) गस. ल्यबन्त-कृत्-प्रस्व.(पा६,१,१९३;२,१३९)।

[i]) तस. नञ्-स्वरः (पा ६, २, २) । उप. पाप-+√काश्+ताच्छीलिकः णिनिः ।

[j]) तस. उप. √१पत् > √पापत्+कर्तर्य् अच् प्र. । यस्थ. वा. प्र३ सत् 'साध्याः' इत्येतदीयं वि. द्र. ।

[k]) तस. नञ्-स्वरः (पा ६, २, २) । उप. तृतस. यद्र.।

[l]) सस्व. कृते तु. टि. अ-क्षोधुक- । उप. पाम-√१भू+खिष्णुच् प्र. द्र. ।

[m]) अप√मे>मि इत्यत्रत्यं टि. द्र. ।

[n]) यदेतत् प्राति. =अप-मित्य- इतीव प्रत्ययादि (तु. MW. SBW.), तत् प्रकरण-संगतस्य मध्यस्थस्याऽऽङः सदर्थाऽग्रहनिदानमित्युपेक्ष्यम् । भूयस्तु वैश. एव द्र. ।

[o]) क्तिनि 'अनुदात्त' (पा६,४,३७) इत्यनुनासिकलोपः।

[p]) बस. अन्तोदात्तः (पा ६, २, १७२) । उप. यद्र. ।

[q]) स्त्रियाम् अत्रिदुहितृनामतया निगमा भवन्ति ।

[r]) संदिग्धस्थलीयः संस्करणान्तर-सापेक्षः पा. द्र. ।

[s]) मुपा. अस्पष्टो भवति । तेन व्यु. निर्णेया द्र. । वनिबन्तस्य प्राति. ओषधीनां वि. सतः स्त्री. सं३ रू. स्यादिति तावत् संभाव्येत ।

[t]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९) ।

¶अपा-वृत्त[a]– -त्तः मै ३, ९, २.

अपा-वृत्य[b] शौ १२, २, ३४.

अपा-वृत-, अपा-वृति- अप√२वृ द्र.

¶?अ-पाव्य[c]– -व्यानाम् काठ ३०, ९.

¶अपाव्य-त्व– -त्वम् काठ ३०, ९.

अपाष्टि- अयस् (>यो)°

अपाष्ठ[d]– -ष्ठात् शौ ४, ६, ५; पै ५, ८, ४; ११, २, ४. [°ष्ठ-शत°]

†अपाष्ठ-वत्[e]– -वत् ऋ १०, ८५, ३४; शौ १४, १, २९.

१†अपा(प√१अ)स्, अप····अस्मि[f] ऋ १०, ८३, ५; पै ४, ३२, ५.

२†अपा(प√२अ)स्, अपास्यति तै ६, ३, ९, २¶; अपास्य ऋ ३, २४, १; मा ९, ३७; का ११, १, ३; जै ४, २५, १; अप··· अस्य ऋ ६, ५१, १३; कौ १, १०५; जै १, ११, ९.

¶अपा(प-आ)संग– -गः काठ २५, २; क ३८, ५.

¶अपा(प-आ)√हृ, अपाहरन्ति, अपाहरत् काठ ३४, ३.

अपि ऋ १, १६४, ६; २, ५, ८; ३४, १०; ३, [१, २१; ५९, ४; ६, ४७, १३; १०, १४, ६; १३१, ७][g]; ३८, ६; ५, ३१, ९; ४६, ७; ६, ५९, ९; ७, १६, ८; १८, ६; ३१, ५; ३८, ३[h]; ८, १९, ८[i]; ४४, २४[j]; ४५, १९; ५६, ४; ९१, १; ९७, १२; १०, २, ३[k]; १९, ४[l]; ५; ४४, ४; ७१, ५[m]; ६[n];

---

[a]) प्राप. उप. कर्तरि क्तः। पूप. अपाऽऽङोः अव्य. सतोः समस्तीभावे सासस्व. भवति, स एव चेह शिष्यते (पा ६, १, २२३; २, २)।

[b]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[c]) सांशयिकोऽवग्रहः। प्रकृतायां श्रुतावेव व्यु. द्वैध-दर्शनात्। तथा हि। अपाव्यानाम् अपूतपावनत्ववचनात् तावत् ६अ+पाव्य-(<√पू) इति संकेतो गृह्येत (तेन च पावकाऽन्तरेणाऽपाव्यत्वे सति स्वतः पूतत्वे च तात्पर्यं स्यात् तु. भा. तैव्रा.)। अथाऽनुपदमेवाऽऽव्याऽपजय-वचनाद् 'अपगतम् आव्यम् (<१आव्य- यद्र.) एभ्यः' इति कृत्वा संकेताऽन्तरं च गृह्येत (बस. आव्याऽपकारकत्वे च तात्पर्यं स्यात्)। अथ सा. (तैव्रा.) ?अव्य- इति उप. इत्याह। तदेवं पूप. च उप. चोभयत्राऽपि भूयान् विमर्शः साऽवसरः द्र.।

[d]) व्यु. ?। अप√ऋप्+थः प्र. थाथीयः स्वरश्च (पा ६, २, १४४)। √नैप्र.*अपार्ष्ठ->यनि. इति कृत्वा रेफ-लोपः [तु., टि. अयोपाष्टि-, ऋष्टि- (<√ऋष्); वैतु. सा. प्रभृ. अपष्ठ- (?पा ८,३,९७) इत्यतोऽपसंकेत्यमाना इव सन्तः यनि. <अ(प>)पा√स्था इति प्रतिपादुकाः]।

[e]) स्वरस्य कृते तु. टि. आदित्य-वत्-।

[f]) तु. GW.; वैतु. वें. सा. च 'अपपरैतः' इति योगं वदन्तौ चोदयौ (ऐकपद्ये द्वैस्वर्याऽनुपयोगात्, तद्वैपरीत्येन यनि. नाशार्थे तात्पर्यात् प्रकरणे संगतत्वात्)।

[g]) संभावनायां समुच्चये वा कप्र. [तु. ऋ १, ९८, १; ३, ५९, ३; ७, १८, ३; २०, ८; ४१, ४ प्रभृ. यत्र प्रकरणसाम्ये सत्यनुपसृष्ट एव √१अस् इति श्रूयते; वैतु. GW. प्रभृ. 'अपि····स्याम' इत्येवं योजुकाः सन्तश्चिन्त्याः। न ह्याराधको देवतायाः सुमतावात्मनोऽन्तर्भावं वष्टि, किन्तर्हि तस्या विषयभावमिति]।

[h]) अन्ववसर्गे कप्र. 'स्तूयेतैव' इत्यर्थः (वैतु. सा. समुच्चय इति; PW. प्रभृ. 'अपि···अस्तु' इति च)।

[i]) 'यतस्त्वं रयीणां राजाऽतः संभाव्यते यथा त्वयि साधवः क्षेमासः स्युः' इत्येवं वा. सांभावनिकः कप्र.। नाउ. √१अस्>'सन्ति' इत्यत्र यच्-परे सत्यपि (पा ८, ३, ८७) षत्वाऽभावोऽप्यत्र लिङ्गं स्यात् (वैतु. GW. 'अपिसन्ति' इति)।

[j]) सांभावनिकः कप्र. (वैतु. PW. प्रभृ. 'अपि··· स्याम' इति)।

[k]) 'दुर्गमत्वेन प्रसिद्धमपि सन्तम्' इत्येवं देवानां पथोऽप्रयुक्तेनापि सता पदार्थेन विशेषणार्थको यद्वा भिन्नक्रमः सन् द्वितीयपादगतस्य पदार्थस्य संभावनया विशेषणाऽर्थकः कप्र.। यत्तु सा. (शौ.) GW. च अपिः ग. इति कृत्वा 'पथोऽप्यागमनम्' गमयांचक्रतुस्तन्मन्दम्। पथो गत्यागतिविषयत्वे सति प्रवेशविषयत्वाऽभावात् तद्गमकाऽपिंगमनार्थयोगाऽयोग्यत्वात्। न हि लोकः पन्थानं प्रविशति, किन्तर्हि गच्छति वाऽऽगच्छति वेत्यभिसन्धिः। एस्थि. यत PW. WI. NW. चाऽऽङं पृथग् मर्यादार्थकं कप्र. मन्यमाना इव 'अपि····अगन्म' इत्येकोपसृष्टं क्रिप. आहुस् तन्नितरां मन्दायताम्। पथो मर्यादीभावेन समाप्तशक्तित्वे सति कर्मान्तराऽभावात् सकर्मकस्य अपि√गम् इत्यस्य साकाङ्क्षत्वाऽऽपत्तेरिति यावत्।

[l]) यच्छब्देन प्रसह्य प्रत्युपस्थापितस्य तच्छब्दवाच्यस्य संभावनविषयत्वेन युक्ततरत्वात् कप्र. [तु. WI. (शौ ६, ७७, २); वैतु. PW. 'अपि···हुवे' इति]।

[m]) सा. अन्वर्थे गतित्वमपि विकल्पेनाऽऽह, तद्विमर्शसापेक्षमिव भवति।

[n]) तु. सा.; वैतु. PW. प्रभृ. 'अपि···अस्ति' इति

७७,७[a];८६,४;९५,१८;१०४, १०; १६७,४; खि १, ११,४; ६; १२, ३; २, १, ९; १०, ५; ३, ८, ४; १०$^{2}$, १;३; १७$^{2}$,४; ५$^{2}$; ४, ४, ३; ५, १४; ३२; ११, १३; ५, ७, ३, ३; ७, १, १; †मा १९, ५०; २०, ५२; २३, ५०§[b]; का २२, ५, ६†; २५, ९, ६[b]; ¶तै १, १, ७, २§; १४, ३†; ४, ४६, २†; ५, १०, ४§; ७, १, २; १३, ५†; २, ४, १२, २; ६, ३, १; ७, १; १२, ६†; ३, ४, ३, १; ५, १, ५, ५; २, ५, ६; ३, १२,१; ७,९, १; ६, १, ६, ६; ९, ६; २, ४, ४; ३, ३, २; ५, ६, ३; ७, ३; ८, २; ४; ६, २, १[c]; ८, २; ११, ४; ७, १, ६,१;२,१०,४$^{2}$; ¶मै १,१,८§; २,१५§;६,९; १०, २$^{2}$§; १५; २०; २, १, ४;७$^{2}$; ८–१०; २, १; २; ४; ५[d]; ३, १$^{2}$; ७[e]; ५, ७; ३, ४, ४[f]; ५; ७, ९; १०; ९, १; ५; ७$^{2}$; १०, १; ४; ४, १, ८§; ३, ६; ४, १०; ५, ८; †१०, २; १२, ५†; १३, ८§; १०†; १४, १२†; ¶काठ १, ७§; २, १५†; ७, ८; ११; …१२[g]§; ८, १; १६†; ९, ४§; १०, ७; ११$^{3}$; ११, १; ५$^{2}$; ६; १०; १२, ३; ४; ५$^{2}$; १९, १३; २१, १२; २२, १[f]; २३, ३; २४, ५; २५, ४; २६, १; २; २७, ३$^{4}$; २८, ३$^{3}$; ३०, ४[h]; ७; ३१, ६§; ७; ३२, २; ४; ३४, ५; ३५, १३[i]§; ३६, ९; १४; ३७, ४;६;११[j]; ३८, १३§; ¶क ६, २§; ६; ८,७; ३१,५; ३६,१; ३७, ६; ३९, १; ४०, ४: ५; ४२, ३$^{4}$; ४४, ३$^{3}$; ४६, ७[h]; ४८, १३§[i]; कौ १, ३६१; २, २८१†; जै १, ३८, २; ३, २३,१३†; शौ ६,४५,३‡[k];५५, ३†; ७७,२†; †७,५१,१;९७, १; ९, ५, १४; १४,७†; १०, १०, ३३; ११, ९, ३; १२;१२, १, ४; २५; २, ९; ५३; ४, ३८; ३९; १३, ५, ३–५; १४, २, २९; †१८, १, ५८; १९, ३८, २; ५९, ३†; †२०, १८, ५; ५४, ३; ९४, ४;१२५, ७; १२६, ४; १२७, १२; पै १, ५१, १; ५९, ४; ६०, ४; ६६, १; ३, २५, ७; ४, २६, १†; ५, १५, ४; ९, ६, २; २२, १०; २२; २५, ७; ११, ५, ९; १३, १०, ३; ८; १६, २४, २; ५२,५; ६६, ६†; ८२, ३; ८३, २; ९६, १; ९७,५[l]; ९८,४; ११०, ३; १४५,११; १४९, १२.

**अपि-त्व**[m]– -त्वम् मै १, ११,५¶; काठ १४, ५¶; शौ १०, ८, ५; पै १६, १०१, ४.

†**अपि-कक्ष**[n]– -क्षे ऋ ४, ४०, ४;

---

गतित्वपक्षपातिनः । 'यो ज्ञानं त्यक्तवानस्ति, तस्य ज्ञानेऽभागता स्वतः सिद्धा सती तस्य वाच्यप्यभागतां प्रयोजयेत्' इत्यर्थः सामुच्चयनिकं कप्र. आकाङ्क्षेदिति कृत्वा यनि. उपपन्नतरत्वं द्र. । अपि च भाग-शब्दस्य साक्षाच् श्रुतत्वात् तं तासमर्पकत्वेनेष्यमाणे गतित्वे चमत्काराऽभावः स्यात् (वैतु. ऋ १, १६२, ८ यत्र भागात्मकस्याऽर्थस्य गम्यत्वे सति गतित्वमास्थायीति) ।

[a]) भागतया न तु भागवत्तया संभाव्यमानस्यैव 'अपि-भावः' इष्ट इति कृत्वा गतित्वाऽप्रसङ्गः द्र. (अपि तु.नापूटि.)।

[b]) यदिह सांभावनिकं सन्तं कप्र. गतितयापि PW. विकल्पयेत्, तदनध्यवसायत इत्युपेक्ष्यम् (तु. नापू. च एपू. च टि.) ।

[c]) समुच्चयमात्रद्योतकः कप्र. [तु. पपा. भा.; वैतु.PW. MW. 'अपिकरोति' इति (द्वैस्वर्यदोषाच् चिन्त्यौ)] ।

[d]) तु. टि. अपि√कृ > अपिकुर्यात् (मै ३, २, ५) यदुक्तदिशा 'अपिः' इह गतिर्न भवति ।

[e]) नञर्थ-पुष्टिप्रदानम् अव्य. ।

[f]) अन्ववसर्गे कप्र. (वैतु. SIM. 'अपि√युज्>अपियुनक्ति' इति चिन्त्ययोगः)।

[g]) अन्तरर्थे स. युक्तः कप्र. उसं. (पा १, ४,९६) ।

[h]) संभावने कप्र. (वैतु. SIM. 'अपि···वर्षति इति)।

[i]) संभावनायां कप्र. (वैतु. SIM. 'अप्येति' इति) ।

[j]) 'अपि-कार्यम्' इत्यैकपद्यमिति यत् SIM. आह, तत् स्वरतश्चाऽर्थतश्च चिन्त्यम् ।

[k]) 'अभिद्रोहं चरामसि' (ऋ १०, १६४, ४) इति पाभे. विज्ञापयेद् यथा प्रकृतेऽपि 'मृषा चरणम्' एवाभिप्रेतं स्यान्न 'मृषाऽपिचरणम्' इति । एस्थि. गर्हाविशिष्टसंभावनायामयं कप्र. इति तत्त्वं (तु. सा. w.; वैतु. WI. अपि√चर् इति) ।

[l]) अन्ववसर्गे कप्र. द्र. । अधि (शौ ९, ५, ६) इति पञ्चमीवचनः कप्र. पाभे. गतः ।

[m]) समुच्चयाऽर्थस्य द्योतकाद् भावे त्वः प्र. तत्स्वरश्च ।

[n]) कक्षस्याऽवयविनः सततस्तदपिगतप्रदेशविशेषे वृत्तिरिति कृत्वा नायं प्रास. वा बस. वा अस.

मा ९, १४; का १०, ३, ७; तै १, ७, ८, ३; काठ १३, १४; २१, ५[२]¶; क ३१, २०[२]¶; -क्षेभिः ऋ १०, १३४, ७.

अपिकक्ष्य[a]- -क्ष्यम् ऋ १, ११७, २२.

अपि-कर्ण[b]- -र्णे ऋ ६, ४८, १६.

अपि√कृ, अपि⋯कृणोतु शौ ९, ४,२; ¶अपिकुर्यात् मै ३,२,५[c].

अपि√१कृत्, ¶अपिकृन्तति[d] काठ २४, ४; २५, ९; १०; २६, ५; क ३७, ५; ४०, २; ३; ४१,३; अपिकृन्तामि मा ५, २२; २६; ६, १; का ५, ६, १; ७, १; ६, १, १; तै १, २, ५, १; २; ३, १, १[२]; ६, १, ८, ४; २, १०, २; मै १, २, १०[२]; ३, ८, ८[२]; काठ २, ५[२]; ९[२]; ११[२]; १२[२]; ३, ३[२]; २४, ४; २५, ९[२]; १०; २६, ५; क १, १८; २, ३; ५[२]; ६; १०; ३७, ५; ४० २[२]; ३; ४१, ३; अपिकृन्त पै १६, १४६, ११.

अपिकर्त्स्यामि शौ १०, १,२१; पै १६, ३६, १०.

?अपि√क्षै→[a]क्षापि, अपिक्षापयति, शौ १२, ९, ६; ?अपिक्षापयतु पै १६, १४५, ६; अपिक्षापय शौ १२,१०,५; पै १६,१४६,१.

अपि√गम्>च्छ्, अपिगच्छति शौ १२, ४, ३१; अपिगच्छन्ति मा ४०,३; अपिगच्छतु शौ २, १२, ८[e]; ९, ५, १; पै १४, ३, ३; १६, ९७, १; अपि⋯गच्छतु शौ १२, २, ४; अपिगच्छन्तु शौ १२, २, ४५; अपिगच्छ शौ १२, ३, ५३; †अपिगच्छतात् ऋ १०, १५४, [१-५]; शौ १८, २, १४-१८.

अपि⋯जगम्युः[f] ऋ १,१७९,१.

अपिग्मन् ऋ ५, ३३, १०; †अपि⋯अगन्महि[f] ऋ ६,५१, १६; मै १, २, ५; काठ २, ६; २४, ६; क १, १९; ३७, ७; ‡अपि⋯अगस्महि[g] तै १, २, ९, १.

अपि√गा, अप्यगात् शौ २, ९, २; पै २, १०, ४; अप्यगुः शौ १०, ३, ९; पै १६, ६३, ८; अपिगुः ऋ ७, २१, ५.

¶अपि√ग्रह्, अपिगृह्यते तै ६, ५, ८, ५; अपिगृह्यताम् तै ६, ४, ९, १; काठ २७, ३[३]; क ४२, ३[३]; अपिगृह्येताम् तै ६, ४, १०, १.

अपि-गृह्य[h] तै ६, १, ३, ८; ४, १०, २; काठ २७, ८.

अपि-गृह्य[i]- -ह्यम् काठ २७, ३; क ४२, ३.

?अपि√घस्[j], अपिग्ध ऋ १, १५८, ५.

?अपिच्छंनेवशंगुणी[k] पै ३, २८, ५.

वा किन्तु तस. एव सुप्सुपीयः प्रकारविशेषः सासस्व. सन् पाप्र. निरुदकादिषु (पा ६, २, १८४) उसं. [तु. भा. (तै १, ७, ८, ३); वैतु. पक्षे भा. (गपू.) समुच्चयेऽपिं कप्र. च तस्य समासान्तःप्रवेशं च युगपदभिसंदधानः सन्नसमर्थमिव पदयोगं ब्रुवाणः, उ. (मा ९, १४) एकस्वरत्वेन स्पष्टं संकेतितेऽप्येकसमस्तपदत्वे 'अपि' इति 'कुक्षे' इति च पृथगिव सती द्वे पदे ब्रुवाणः, म. (गपू.) सामीप्यार्थे अस. इति ब्रुवाणः (स्वरतः साधुत्वेप्यर्थतः सूक्ष्मेवानुपपत्तिस्त्विह द्र.। कक्ष्यावन्धनाभिकरणतया कक्षाऽपिगतत्व-विशिष्टस्य कक्षाऽवयवस्यैव न तु यस्य कस्यचित् तत्समीपवर्तिनः शरीरावयवान्तरस्याभिप्रेतत्वादिति दिक्)]।

[a]) तात्रभविके यति प्र. तित्-स्वरः (पा ६,१,१८५)।

[b]) 'कुर्णे' इत्यनेन सप्तम्यन्तेन कर्मप्रवचनीयतयाऽभिसंबन्धप्रवणात् (तु. ऋ ५, ३१, ९; ८, ९७, १२; १०, ८६, ४) समासे अपेर् उत्तरवर्तिनोऽन्तोदात्तः एपू. उक्तयौपसंख्यानिकया दिशा सुसाधः द्र.। अथवा स. विभक्तेरर्थे अस. द्र. तेन च सासस्व. स्यादिति कोऽपि विवेकः स्यात्।

[c]) अन्तर्भावयेदित्यर्थः (वैतु. मै २, २, ५ यत्राऽन्तर्भाव्यानां बल्वजानां प्रविवक्षिततया तत्समुच्चायकः कप्र. अपिर् भवति न तु 'अपि⋯स्युः' इतीव गतिरिति)।

[d]) अपिर् इति यनि. निगमेषु ग. स्यादुत पदार्थसंभावनाद्यर्थेषु कप्र. इति भूयोविमर्शसहत्वमनाहतं द्र.।

[e]) तु. PW.; वैतु. सा. समुच्चये कप्र. अपिर् इति।

[f]) संभावनार्थः कप्र. इति सा.। गतिरित्यर्वाक्तनाः (तु. ऋगुत्तरा यत्र समानयोगः सम् इत्युपसर्गो विनिगमयन्निव भवति)।

[g]) =नापू. रू. विगतनासिक्यं च रक्षितसिच्कं च। अपिः कप्र. चार्थे इति भा.। तद् विमृश्यं (तु. नापूटि.)।

[h]) गस.ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[i]) गस. उप. क्यप् प्र. (पा ३, १, ११८)।

[j]) यनि. निगम एकमुपसृष्टं पदं भवति (तु. PW. प्रभृ.) यद्वा पृथग्भूतपदद्वयं (तु. वें. सा.) इत्यस्य विषयस्य भूयोविमर्शसहत्वं प्रश्नितं भवति। तिङपि <√घस् इति यनि. PW. प्रभृ. आहुः; <√हन् इति वें. सा. च।

[k]) 'अपृच्छं नेव शं गुणी' इति शोधः विमृश्यः।

अपि √जन्
अपि-जु[a]- -जः तै १, ७, ९, १; ४, ७, ११, २; काठ १८, १२; क २९, १; -जाय मा ९, २०; १८, २८; २२, ३२; का १०, ४, १; १९, ९, १; २४, १९, १; मै १, ११, ३; काठ १४, १.

अपि √जू
अ(पि>)पी-जू[b]- -जुवा ऋ २, ३१, ५.

अ-पित्[c]- -तः ऋ ७, ८२, ३.

¶अ-पितृदेवत्य- -त्यम् काठ २४, ८; क ३८, १.

अपि-त्व- अपि द्र.

¶अपि √दह्, अपिदहति तै २, १, ४, ७; ५, ४, ५, ४; अप्यदहत् तै २, १, ४, ६; ५, ४, ५, ४. अपिधक्ष्यति काठ १०, १०.

अपि-दुह्य[d] मै २, ५, ३[2]; ३, ३, ७[2]; काठ १३, ४[2]; २१, ८[2].

¶अपि √दुह्, अपिदुदुह्रे मै ३, ३,४; ४, ७, ४.

अपि √धा, ¶अपिदधाति तै १, ७, ३, १; २, २, १०, ४; ५, १, ९, ५; १०, १; २, ७, ३; ८, १; ९, २; ३, ४, १; ४, ६, १; ५, १०, ७; ७,४,२; ६, ३, ५, ४; १०, १; मै १, ६, ३; ५; ९; ८, ९; २, १, ६; १०; ६, १; ३, १, ९; ३, १०; ७, ६; ९, ५; १०, ४[2]; ४, १, ३; ३, १; ५, ५[2]; ७, ४[2]; काठ ६, ६; १०, ६; ११, ५; १५, १; १९, १०[4]; २०, ६; २१, १; ८[2]; ९[3]; १०; २४, ७; २६, २; ७; २७, ६; २८, ६; ९; ३१, २[2]; ३७, १४[4]; क ४, ५[2]; ३०. ८[4]; ३१, ८; ३७, ८; ४०, ५; ४१, ५; ४२, ६; ४४, ६; ९; ४७, २[2]; ¶अपिदुधाति मै १, ८, ६; अपिदधामि मा ११, ७७; का १२, ७, १२; तै ४, १, १०, २; मै २, ६, १; ७,७; ४, ३, १; ५, ५; काठ १५, १; १६, ७; ३७, १३; शौ ४, ३६, २; १६, ७, ३; पै १, ४२, १; १०, १२, ७; अपिदध्मः मै १, ७,१; ८,९; पै १६,१५१, ६; †अपिधत्स्व ऋ १०,८७,२; शौ ८, ३, २; पै १६, ६, २; अपि⋯धेहि[e] ऋ १०, ९८,११; पै १३, ९, १०; ¶अप्यदधुः मै ३, १०, ४; अपि⋯अदधुः[f] ऋ १०, ५६, ४; ¶अपिदध्यात् तै २, ६, ६, ६; ८, २; ५, २, ५, ३; ७, २: ३, ७, ४; ४, १, ४; ६, ६, २; ६, ३, ५, २; मै १, ४, १३; ६, ९; १०, २०; २, ३, ७; ३, ३, १; ९, १; १०, १[2]; ३; ४, १, ३[2]; २, १०; ५, ५[3]; ७, ७; काठ ८,८; १२, ५; २०, ३; २३, ६; २४, ६; २६, २; ३; ३१, २[2]; क ७, ३; ३१, ५; ३७, ७; ४०, ५; ४७, २[2]; ¶अपिदध्युात् मै ४, ५, ५; ¶अपिदध्याम् मै २, १, १०.

¶अप्यधात् मै २,१, २; ३, ३, ९; अप्यधाम् शौ ७, ३६, २. ¶अपिधीयते मै ३, १०, ५; ¶अपिधीयुते मै १, ८, ९; अपिधायि शौ ५, ३०, १५; पै ९, १४, ५.

१अपि-धान[g]- -नम् शौ ७, ३६, ३; ११, ३, ११; १८, ४,५३; पै १६, ५४, १; -†ना ऋ १, ५१, ४; १६२, १३; मा २५, ३६; का २७,१३,५; तै ४, ६, ९,१; मै ३,१६,१; काठ ४६,४.

अपिधान-वत्[h]- -वन्तम् ऋ ५, २९, १२.

¶२अपि-धान[i]- -नः काठ ११, १; ४.

¶अपि-धाय[d] मै २, ६, ६; ४, ६, ३[3]; ९; काठ १५, ५; २०, ८; क ३१, १०. [°धाय अन्°]

अपि-धि[j]- -धीन् ऋ १, १२७,७.

¶अपि-धेय[k]- -यः मै ४, ५, ५.

अपि-हित[l]- -तः पै ८, २०, ११; -तम् ऋ १, ३२, ११; ५, ६२, १; १०, १२९, ३; मा ४०,१७; का ४०, १, १५; पै १३, ६, ११†; १६, ३९, ८; -†ता

a) गस. डान्त-कृत्-प्रस्व. (पा ३,२,१०१; ६,२,१३९)।

b) गस. क्विबन्त-कृत्-प्रस्व. पूप. दीर्घत्वं च उसं. (पा ३,२,१७७; ६, २,१३९; ३, ११६)। पाप्र. ह्रस्वाच्कमात्रत्वपक्षः यस्था. आलोच्यमानः द्र.।

c) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. √पि <√प्यै + भावे वा कर्मणि वा क्विप् प्र.। यत्तु MW. तस. इतीवाह, तन्न। तथात्वे ह्य आद्युदात्तत्वप्रसंगात्।

d) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३; २,१३९)।

e) तु. GW.; वैतु. समुच्चयार्थस्याऽप्राकरणिकत्वात् तद्वादिनौ वें. सा. च चिन्त्यौ।

f) देवेषु क्रतोर्निधानस्य श्राविते अपिः गतिः द्र. (तु. PW. प्रभृ.; वैतु. सा.)।

g) गस. ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३; २,१३९)।

h) म(>व)तुपः पित्वान्निघाते स्वरः पूर्वावस्थ एव।

i) गस. उप. कर्तरि ल्यु > अनः प्र. (पा ३,१,१३४)।

j) सस्व. नापू. द्र.। उप. भावे किः प्र. (पा ३,३,९२)।

k) गस. यदन्त-कृत्-प्रस्व. (पा ६,१,२१३; २,१३९)।

l) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।

ऋ ४, २८, १; मै ४, ११, २; काठ ९, १९; -तानि ऋ ४, २८, ५. [°त- अपूप°]

¶अपि-हिति[a]- -त्यै मै २, ४,२;३, ८, ७; १०, २; काठ १२, १२.

अपि √१धाव्, अपिधाव पै ५,२८,३.

¶अपि-धिष्ण्य[b]- -ष्ण्यम् मै ३,९,३.

अपि √नह्, अपिनह्यते[c] पै ९, ६, ४; अपिनह्यसि पै ५, ३२, ९; अपिनह्यामि ऋ १०, १६६, ३; शौ १, १४, ४; ७, ७३, ४; ५[2]; १००, ३; पै १, १५, ४; ९४, १; २; ५, २०, ५; १३, १३, १; २[2]; अपिनह्यन्तु पै १३, १०, १०; अपिनह्य>ह्या शौ १०, ९, १; पै १६, १३६, १; अपिनह्यतम् शौ ६, ५०, १; अपिनह्यत शौ ५, ८, ४; पै ५, ९, ८; २०, ६; ¶अपिनह्येयुः काठ ३३, ७.

अपि-नद्ध[d]- -द्धम् ऋ १०, ६८, ८; शौ ९, ३, १८; २०, १६, ८†; पै ९, ६, ५; १६, ३९, ८; ४०, ९. [°द्ध- अन्°]

¶अपिनद्धा(द्ध-अ)क्ष[e]- -क्षः मै २, १, ६.

अपि-नह्यमान[f]- -ने शौ १२, ७, १४; पै १६, १४३, ५.

¶अपि-नि √धा

अपिनि-धाय[g] मै ३, ६, ६.

अपि-नि √ष्ठा←स्था

अपिनि-ष्ठि(त→)ता- -ता पै १६, ३९, १०.

अपि √नी, ¶अपिनयति तै २, २, २, १; मै १, ८, ९; २, १, १०; ४, ८, ३; काठ १०, ५; २६, २[h]; अपिनयामः पै १६,३६,५.

¶अपि-नीय[g] तै २, २, ८, २.

अपि-पक्ष[i]- -क्षम् तै ५, ५, ८, २¶; -‡क्षे[j] मै १, ११, २; ३, ३,५[2].

¶अपि √पद्>पादि, अपिपद्यते मै १, १०, १७[k]; काठ ३६, ११[k].

अपिपादयति मै १, १०, १७; काठ २८,४; ३२, ३; ३६,११; क ४४, ४.

अपि-पद्यमान[l]- -नान् मै १, १०, १७; काठ ३६, ११.

अपि √पृच्>न्च्, ‡अपिपृञ्चन्ति[m] शौ ५, २, ३; २०, १०७, ६. अपि···अप्राक् शौ १०, ४,२६; पै १६, १७, ७.

अपि √प्रा

अपि-प्रा(ण>)णी[n]- -णी ऋ १, १८६, ११.

अपि √बन्ध्, अपिबध्नामि पै ६, ६, ९.

¶अपि-भाग[o]- -गः मै २, ५, ११[4]; काठ १३, १३[4].

अपि √भू, ¶अपिभवति काठ ११,२; १२, ६; १०; ३४, ८; ¶अपिभवतः काठ १२,६; ¶अपिभवन्ति काठ १०, १०[2].

अपि···भूतु ऋ ८, ४४, २८[p];

---

[a]) गस. भावे क्तिनि 'तादौ' (पा ६,२,५०) इत्युक्तः स्वरः।

[b]) अस सास्व. (पा २, १, ६; ६, १, २२३)।

[c]) 'अपिनह्यन्ते' इत्यस्य रू. मूलतः सतः स्थाने विकृतं रू. सु-शोधं द्र.।

[d]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।

[e]) वस. २अक्ष- इति उप.। 'उपसर्गात्' (पा ६, २, १७७) इत्यत्रोपसर्गशब्देन सामर्थ्यादुत्सृज्यमानेन धातुजेन सहितस्याप्युपसर्गस्य ग्रहणादन्तोदात्तः उसं. द्र.। भवतु वा अक्षन्- इति उप.। तदा समासान्त-षजन्तत्वे सति चित्स्वरः स्यात् (पा ५, ४, ११३; ६, १, १६३)।

[f]) गस. कर्मणि शानजन्त-कृत्-प्रस्व. (पा ६,१,१८६; २,१३९)।

[g]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[h]) तु. टि. सस्थ. अति √नी>···नयति।

[i]) सस्व. कृते तु. अपि-कक्ष-। यत्तु भा. (तै ५,५,८,२) अ-वि-पक्ष- इति प्राति. इति मत्वा व्याख्याने पर्यभ्राम्यत्, अपार्थमेव तत्। यथाकथमप्यन्तोदात्त उपपद्यमानेऽपि तात्पर्यतो विरोधात् (तु. मै ३, ३, ५ यदन्व् एकत्वविशिष्टऽपिपक्षात्मक-वेदिभागविशेषाधिकरणतया सामविशेषगानं विधीयते न तु भा. अनु द्वित्वविशिष्ट-वेदिकोणविशेषाधिकरणतयेति। एस्थि. च यदपि भा. प्रतेद्व वीप्सार्थे गतित्वमिवाह, तदपि भ्रष्टमूलं द्र.। मै. अनु सप्तम्यर्थेऽसौ कप्र. इत्येवमेव सुवचत्वात्। तत्स्वरपार्थक्यमप्येतत्-सूचकं भवतीति चाऽपरा दिक्।

[j]) 'अपि-पक्षः' इति पपा. चिन्त्यः [तु. 'अपि-कक्षे' इति पाभे. (ऋ ४, ४०,४)]।

[k]) तु. सस्थ. टि. २अनु। सगतिकमाख्यातिकं मन्वानः SIM. चिन्त्यः।

[l]) गस. शानचो निघाते सतिशिष्टः श्यन्नन्ते नित्स्वरः प्रकृत्या (पा ६, १, १८६; १९७; २, १३९)।

[m]) 'अपिवृञ्जन्ति' इति ऋ (१०, १२०, ३) पाभे.।

[n]) गस. उप. कर्तरि ल्युट्। कृत्-प्रस्व. [यक्र. पा ३, ११३; ६, १,१९३; २, १३९ (तु. वें. ORN. NW. च; वैतु. सा. PW. GW. MW. च <अपि-प्र √१अन् इत्युत्स्वरलक्षणमिव वदन्तः सन्त उपेक्ष्याः)]।

[o]) वस. पूपप्रस्व. (पावा २,२,२४; पा ६,२,१)। उप. यद्र.।

[p]) तु. GW.; वैतु. सा. PW. च संभावनायां कप्र. अपिद्र इति [वैतु. ऋ १०, १४२, १ यत्र स-प्रकरण-

अप्यभूत् पै २,३,५; अपि…अभूत् ऋ १०,१४२,१[a]; अप्यभूः शौ २, १०,७; अप्यभूम ऋ २, ११, १२[b]; अपिभूम>मा ऋ ७, ५७,४[c]; तै ३, ३, ११,४[d]; शौ ७, २१, ३[e].

†**अपि√मद्**, अपि…मत्सथ>था[f] ऋ १, १८६, १; मा ३३, ३४; का ३२, ३, ५.

¶**अपि-मन्त्र-** -न्त्रम् काठ १३, १. [°न्त्र- अन्°]

†**अपि√मृष्**, अपिमृष्यते ऋ ६,५४, ४; अपिमृष्ये ऋ ७, २२, ५; कौ २, ११४९.

अपिमृष्टाः ऋ ३, ३३, ८.

**अपि-यत्-** अपी(पि√इ) द्र.

**अपि√या**, अपियामि[g] शौ ४, ३७, ७; अपियातु पै १३, ४, ९.

**अपिया-** अप्य- <√*अप् द्र.

**अपि√रिप्**

अपि-रिप्त[h]- -प्ताय ऋ १, ११८, ७; ८,५,२३.

**अपि√रुह्**, अपिरोहति ¶तै २, ५, १, ३; शौ ८, १२, २; पै १६, १३४,१; ¶अपिरोहात् तै २,५, १, ३; अपिरोहतु शौ ४, १२, ३; १२, १, ३५.

**अपि√लिह्**, ?अपिलेलिह्यते[i] पै ११, ७, ७.

**अपि[j]√वत्[k]**>वाति, अपि…वतेम ऋ [७,३,१०;४,१०;(६०,६)]. अपिवातयामसि ऋ १, १२८, २; †अपिवातय ऋ [१०, २०, १; २५, १]; कौ १, ४२२; जै १,४१,४; †अप्यवीवतन् ऋ १०, १३, ५; शौ ७, ५९, २.

---

त्वेऽपि PW. यनि. अनुमन्वानो व्याहन्येत (तु.नाउ.टि.)]।

a) तु. PW. प्रभृ.; वैतु. सा. सांभावनिकः कप्र. अपिर् इति [तथाभाषी ष. चाऽश्रुतिं स. च श्रुतिं प्रत्यसाविह च ऋ ८, ४४, २८ इत्यत्र च (तु. नापू. च नाउ. च टि.) अपि पर्यनुयोज्यः स्यात्]।

b) तु. PW. ORN. प्रभृ.; वैतु. सा. सानुनयप्रश्ने कप्र. अपिर् इति (तु. नापू. टि. यदनु पर्यनुयुज्यमानोऽसाविहाऽध्याहारमुखेन स. उपपत्तिमिवाह)।

c) तु. PW प्रभृ.; वैतु. सा. ईषदर्थे कप्र. अपिर् इति (नापूपू. टि. कप्र. पक्षे स. विषये पर्यनुयोगो जागरूक एव द्र.। अस्मद्वाच्येषु दियुतः साधिकरणतायामुपपद्यमानायामप्यस्मद्वाच्यानां दियुति साधिकरणतायाः कल्पनस्य नितरामसंगतेरिति दिक्)।

d) तु. K.; वैतु. सा. भा. च (सप्रकरणत्वात् तु. नापूपू. टि., श्रुत्यभेदाद् नाउ. टि. च)।

e) तु. PW. प्रभृ.; वैतु. सा. [तु. नापूपू. टि. (विषयतात्मकमपिना ग. वाच्यं सत् स. इदं वाच्यमिति चाऽनुसंदधान उपेक्ष्यः)]।

f) लेटि सिपि यथा-युक्तत्वात्तिङो निघाताऽभावः। 'नः' इति 'जगत्' इति च कर्मद्वयमेतदभिसंबद्धं द्र.। सकर्मकत्वे तु. ऋ ४, ३१, २; ६, ४४, १६; ८, ९४, ६ (तु. GW.; वैतु. वें. सा. PW. अपिः संभावनायाम् कप्र. इत्यभिप्रायुकाः)। यत्तु सा. 'यथा' इत्येतद् उपमार्थीयम् अव्य.इतीवाऽभिसंदधान एतच्छिरस्कमन्यद् उपमानवाक्यं चाऽऽचिख्यिप्सित-तथेत्येतच्छिरस्कं अन्यदुपमेयवाक्यं चाऽऽरचयेत्, तदसत्। तथा हि सति 'यथा' इत्यस्य जिगमयिष्यमाणेन क्विप. संबन्धस्याऽवधार्यत्वाच् श्रूयमाणेन च प्रकृतेन क्विप. साक्षात्संबन्धाऽभावाद् यनि. तिङो निघाताऽभावोऽनुपपन्नः स्यादिति दिक् [एवं तु. उ. म. (मा ३३, ३४) यदीये वा. 'विश्वं जगत्' इत्येतत् पदद्वयं सतः संबन्धादपास्तं सदपार्थं चिक्लेशयिषितमिवाऽऽपद्यते]।

g) अन्तर्भावितण्यर्थं रू. द्र. (तु. तल्लिङ्गयद् नाउ. पै. रू.)। एस्थि. 'अपियामि' इति WR. सर्वसाद्यविरुद्धा च छन्दोदूषणी च सती शुशोधयिषा नैवाऽऽद्रियेत। यदपि शोधममुमुपादाय W. संधान-परतया व्याचष्टे, तद्वद्यपुष्टं भवति। शोधोऽपुष्ट इति च तदभ्युपगमेऽपि √दो इत्यस्योक्ताभिप्रेतार्थेऽप्रवृत्तेश्च (यतु. टि. √३दा)। अस्य नापू. पाभे. द्र.।

h) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९)।

i) 'तेनापि लव्हीय तेन' इति मूको. अनु मुपा. पादो भवति। तत्र 'तेनाऽपिलेलिह्यते न' इति त्रिपदात्मकः शोधः सुवचः (भूयसेऽपि सस्थ.शोधाय तु. टि. अहि- > -ना)।

j) तु. PW.; वैतु. सा. यमन्व् अयम् अपिः ऋ १, १६५, १३ इति १०, २०, १ इति च द्वे स्थ. वर्जमन्यत्र यनि. स्थ. अगतिः कप्र. भवति।

k) तु. PW. प्रभृ.; वैतु. सा. यमन्व् अयं धा. ऋ ७, ६०, ६ इत्येतत् स्थ. वर्जमन्यत्र यनि. स्थ. आस्थेयो न भवति। यनि. णिजन्तानां रू. पाधा. चु. √वात इत्यतो निष्पन्नत्वेन प्रतिपत्तेश्च ऋ ७, ३, १० इत्यत्रत्यस्य रू. वर्णान्तरागममात्रपूर्वकं √वन् इत्यतो निष्पन्नत्वेन संकेताच्चेति यावत्। तत्त्वतस्तु पारिणामिकोऽयं धा. भवति √वृत् इत्येतेन च √वन् इत्येतेन चाऽभिसंबद्धः संस्तदुभयगम्यस्य पृथग्भूतस्य गतिसंभक्त्यात्मकस्याऽर्थद्वयस्याऽपि वाचकः फलद्वयोपेतैकनालौपम्यभागिति दिङ्मात्रम्।

φअपि-वृतत्[a]– -तन्तः ऋ [७, (३, १०; ४, १०) ६०, ६].
अपि-वात- सु°
†अपि-वातयत्[b]– -यन्तः ऋ १, १६५, १३; मै ४, ११, ३; काठ ९, १८.
अपि√वप्, ¶अपिवपति तै ३, ४, १, १; ¶अपिवपन्ति मै ३, १०,४; अपि····वपामि शौ १२,३, २२; ¶अप्यवपन् मै ३, १०, ४.
अपि√वह्, ¶अपिवहति मै १, ८,९; २, १, १०.
अप्यूहे ऋ १०, ५२, ३; †अप्यूहे ऋ ७, १०४, १४; शौ ८, ४, १४; पै १६, १०, ४.
अपि√वृ,अपि···वः[c] मै ४,१४,५.
अ(पि>)पी-वृत[d]– -तः ऋ १०, ३२, ८; –तम् ऋ १, १२१, ४; २, ११, ५.
अपि√वृच्, अपिववृक्तम्[e] ऋ ६, ६२, १०.
†अपि√वृज्, अपिवृञ्जन्ति[f] ऋ १०, १२०, ३; तै ३, ५, १०, १; कौ २,८३५; जै ४,५,७; पै ६,१,३; अपि···वृञ्जन्ति[g] ऋ ६,३६,२. अपि···अवृजन् ऋ १०, ४८,३[g].
अपि√वृत्>वर्ति, अपि···अवर्तयः ऋ १, १२१, १३.
अपि√व्ये, अपिव्ययामसि शौ १, २७, १.
¶अपि-व्रत[h]– -ताः मै ३, ९, १.
अपि√व्रश्च्>वृश्च्, अपिवृश्चामि शौ २, ३२, २; ५, २३, ९; १०, ६, १; अपि···वृश्चतु शौ १, ७, ७; †अपिवृश्च ऋ ८, ४०, ६; १०, ८७, १६; शौ ७, ९५, १; ८, ३, १५; पै १६, ७, ६.
अपि-शर– -रम् पै ११, २, १०.
अपि-शर्वर[i]– -रे ऋ ३, ९, ७; ८, १, २९.
आपिशर्वर[j]– -रः तै ७,३,१३, १; काठ ४३, ३.
अपि√शस्
अपि-शस्[k]– -शसः मै ४, १३, ४; काठ १६, २१.
अ-पिशाचधीत[l]– -तः खि २, १०, २; पै ११, १, ८.
अपि√शॄ>श्रृ,अपिशृणीमसि शौ २, ७,५; अपिश्रृणातु शौ ६,३२,२; अपिश्रृण शौ १९,४५,१; अपिश्रृणीहि शौ १६,७,१२; अपि····श्रृणीतम् शौ ६, ५०, १.
¶अपिशीर्यते काठ ३५, १६.
अपि-शीर्ण[m]– -र्णाः शौ ४, ३, ६.
अ-पिष्ट– -ष्टम् पै २, २, ५.
अपि√ष्ठा (<स्था) >तिष्ठ, अपिष्ठात>ता शौ ५, १३, ५; पै ८, २, ५; अप्यतिष्ठत् तै ५, ६, १, ३; मै २, १३, १; काठ ३९, २; शौ ३, १३, ४.
अपि-ष्ठित[n]– -तम् ऋ १, १४५,४.
¶अपि-सं√नह्, अपि···संनह्येत्[o] तै २, २, ८, १; ३, १, ५.
¶अपि√सृज्, अपिसृजति तै ६, ४, ४, ४[2]; ६, ६, २; ९, २; मै ३, ९, ४; काठ १२, ५; २६, १; २७, १[2]; ३०, १; ७; क ३७, ८; ४०, ४; ४२, १[2]; ४६, ४.
अप्यस्राद् मै १, ९, ८; २, ३, ७; ५, ५.

[a]) गस. अन्तर्भावित-ण्यर्थक-शत्रन्त-कृत्-प्रस्व. (पा ६, १, १८६; २, १३९)।
[b]) सस्व.नापू. द्र.। विशेषस्त्विह णिचः श्रवणमात्रे द्र.।
[c]) 'अप···वः' इति ऋ (२, १४, ३) पाभे.।
[d]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)। 'निपातस्य च' (पा ६,३,१३६) इति कृत्वा पूप. दीर्घत्वं भाषमाणः सा. उपेक्ष्यः। पूप. दीर्घे तदशिष्टत्वात्। तर्हि कथं दीर्घ इति। उसं. इति। 'नहि-' (पा ६, ३, ११६) इत्यत्र धा. च प्र. चेति।
[e]) अत्र धा. प्रति विप्रतिपत्तिः द्र.। तद् यथा। √वृज् इति सा. McG. च। √व्रश्च् इतीतरे PW. प्रभृ.। अर्थत उत्तरः कल्पः प्रकरणं नेदीय इव स्पृशेदिति कृत्वा √व्रश्च् इत्येतत्-सजन्मा यनि. धा. (यद्र.) कृताऽऽदरः द्र.।
[f]) अपिं सामुच्चयनिकं कप्र. भाषमाणः सा. उपेक्ष्यः (वैतु. ऋ १०, ४८, ३ इत्यत्र स्वयमसौ)। इह च तदुद्धृतं श्रुत्यन्तरमपि सावधानं संगम्यमानम् अपेर् गतित्वमेव साधयेदिति दिक्।
[g]) 'अपि' यथा गतिस्तथा नापूटि. द्र.।
[h]) बस.पूपप्रस्व. (पावा २,२,२४; पा ६,२,१) उप.यद्र.।
[i]) सस्व. कृते तु. टि. अति-शर्वर-।
[j]) तात्रभविकः अण् प्र. (वैतु. भा. 'अपि-शर्वरी-' इत्यतोऽकृतसमासान्तादेव स्वार्थे प्र. इति)।
[k]) उस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)।
[l]) तस. नञ्-स्वरः (पा ६, २, २)। उप. तृतस.। अन्तोदात्तः सुपा. चिन्त्यः (तु. आपमं १, १३, १)।
[m]) सस्व. नापू. द्र.।
[n]) सस्व. कृते तु. टि. अति√क्रम्>२अति-क्रान्त-।
[o]) बल्बजानामेवेध्मे संनह्यत्वेन विधानश्रुतेः संनह्यान्तरस्य चाश्रुतेः समुच्चयाद्यर्थेऽपेः कर्मप्रवचनीयत्वमनुपयुक्तं स्यात् (तु.भा.)। सहार्थस्य च प्राधान्येन द्योत्यत्वदर्शनाद् गतित्वमुखता तदर्थसार्थेति दिक्। एस्थि.'इध्मे' इति स१ द्र.।

अपि...असृज्यन्त[a] काठ३४,८.

अपि-सृज्य[b] तै ३, २, २, १.

¶अपि√हन्, अपिहन्ति मै ४,५,५; अपिघ्नन्ति खि ५, २२,७$; तै २, १, ५, ३; अपिहन्यात् मै ३, १०, ४; ४, ७, ४; काठ१२, ५; २६, १०; क ४१, ८.

¶अपि√१हा

अपि-हीन[c]- -नाः मै ४, २,११.

अपि-हित-, अपि-हिति- अपि√धा द्र.

अपि√ह्नु, अपिह्नुतः ऋ८,३१,७.

अपी(पि√इ), अप्येति ऋ १, १६२, २; ३, ३३, २; ९, ७१, ६; मा २५, २५†; का २७, १२, २†; तै †४, ६, ८, १; ३; ५, ६, ६, ४¶; शौ ५, १८, १३; १०, १०, ६; पै ३, ३२,३[d]; अप्येति ऋ १०, ११५, १; तै ३, १, १०, २; काठ ३५, ८; अपियन्ति ऋ १, १४०, ७; [(२, ३, ९) ३, ८, ९; ७, ४७, ३]; मा ३४, ११; का ३३, १, ५; तै ७, २, ८, ६¶; शौ ४, ३४, २; पै ६, २२, २; अप्येतु ऋ [२, ३, ९[e]; (३, ८, ९; ७, ४७,३)]; मा ८, ६१; २९, २; का ३१, १, २; तै १, ५, १०, ४; ६, ३, २; ३, १, ४ ३[2]; ११,२†; ५, १,११,१¶; मै १, ७, १; ८, ९; ३, १६, १‡[f]; २; ४, १४, ८†; काठ ३०, ८; ३४, १९; ३५, ५; ४६, २; ४‡[j]; क ४८,६; शौ २, ३४,२; पै ९, १७, ३[g]; १४, ३, ३; १६, १०७, ६; अपीहि मा ८, ५०[3]; का ८, २२, ४[3]; तै ३, ३, ३, ३[3]; शौ १८, २, ११‡[h]; अपीतम् मा २, १७[i]; का २, ४,५; शौ १२,३,४४; अपीत तै १, ८,५,२‡[j]; अपीतन शौ १०, ५, २३; पै १६, १३०, ३.

†अपि-यत्[k]- -यन् ऋ ८,४३,७φ; -यन्तम् ऋ १, १६२, २०; मा २५, ४३; तै ४, ६, ९, ४; काठ ४६, ५

अपी(पि-इ)ति[l]- -तेः ऋ १, १२१, १०.

अपी(पि-इ)त्य[b] ऋ २, ४३, २.

?अँ-पी[m]- -प्यः ऋ ६, ६७, ९.[ ]

अपीच्य- अप्य(पि√अ)ञ्च् द्र.

अपी-जू- अपि√जू द्र.

अपी-वृत- अपि√२वृ द्र.

अपी(पि√१इ)ष्, अपि...इष्यते[n] ऋ ९, ६९, १.

¶अ-पुत्र[o]- -त्रः मै ३, २, ६.

अपुत्र-ता[p]- -ता पै १६, १४९, ६.

अ-पु(त्र्य>)त्र्या[q]- -त्र्या पै ५, ३७, ३.

†अ-पुनर्[r]- -नः ऋ १०, ६८, १०; शौ २०, १६, १०.

---

a) 'अन्तःसंकलनपूर्वम्' इत्युपसर्गार्थे प्रकरणसंगते सत्य् अपिमगतिं कुर्वाणः SIM. चिन्त्यः ।

b) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

c) गस. क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९)।

d) 'अप्येतु' इति शौ (२, ३४ ,२) पाभे.।

e) अपेर् गतित्वेऽव्यवस्थितचित्तः सा.चिन्त्यः। देवानां पाथसोऽस्मद्विषयाया अन्तःसमावेशविशिष्टाया अगति-पर्यायभूताया एव सत्या गतेर्विवक्षितत्वादिति दिक्। एस्थि. 'अस्मे' इति न द्वि३, किन्तर्हि स३ द्र.।

f) 'अप्येति' इति ऋ (पा १, १६२, २) पाभे.।

g) 'अप्येति' इति शौ (५, १८, १३) पाभे.।

h) 'उपेहि' इति ऋ (१०,१४,१०) पाभे.। 'अपेहि' इतीव दुष्टे पा. सत्य् अपमुपस्याऽर्थे ग्राहयिष्णुतया च पक्षे तदीये वर्जनार्थे सुस्थिते सति तं पूर्वार्धीयेन द्वि. वर्तमानेन 'सारमेयौ' इति पदेनाऽसमर्थयोगमिव कार-यिष्णुतया च नितरां दयनीयः सा. उपेक्ष्यः ।

i) द. निष्ठायां रू. आह । तदपि विमृश्यम् ।

j) 'उपेहि' इति ऋ (१०,१४,१०) पाभे.।

k) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

l) क्तिनि 'तादौ' (पा ६, २, ५०) इति पूपप्रस्व. ।

m) तस. नञ्-स्वरः (पा ६, २, २)। यनि. रू. पुं. प्र३ द्र.। उप. √पी (<√प्री)+क्विप् [वैतु. पाप्र. <√प्यै (उसं. पा ६,१,२८उ.); <√२पा वा (उसं. ईः प्र. कित्त्वं च पाउ ३, १५९)]। यत्तु १अपस्-(+यत्>अपस्य- > -स्याः =यनि. रू. इतीव सा., २अप्->अप्य->अप्या->अपी->यनि. रू. [स्त्री. ष१ (=अयज्ञसाचः); वैतु. सा. पुं. प्र३] इति PW. प्रभृ. चाऽऽहुः, तत्र सदसतोर्भावयोर्विविचः प्रमाणम् [इह 'हे मित्रावरुणौ! य ओहसा न देवासः न मर्ताः (भवन्ति, ये च) अ-यज्ञसाचः (=अ-देवपृणाश्च) अप्याः (=अ-पितृपृणाः) पुत्राः न (=इव च कृतघ्ना भवन्ति), तेऽसुराः यद् वां स्पूर्धन् (=स्पूर्धनि स१) युव-धिता प्रिया धाम प्रमिनन्ति (तद्) अंहः 'विचयिष्टम्' इति नापू.मन्त्रान्त्यभागेन वा.द्र.]।

n) तु. GW.; वैतु. इतरे सा. PW. प्रभृ. च कप्र. पृथग् अव्य. चेति कृत्वा योजुकाः ।

o) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

p) भावे. तल् प्र., लित्स्वरश्च (पा ५, १, ११९; ६, १, १९३)।

q) तस. उप. पुत्र्य- (पुत्र+यत्)।

r) सस्व. द्विपूटि. द्र.।वा. वि. वा क्रिवि. व्रा भवति।

¶अ-पुनराभाव[a]– -वाय मै ३, ८, २.
अ-पुनर्दीयमा(न→)ना[b]– -ना शौ १२, ९, ६; पै १६, १४५, ६.
*अपुर्- √*अस्पृ द्र.
अ-पुरोगव[c]– -वासः खि ५, २०, २; शौ २०, १३५, ७.
¶अ-पुरोरुक्[d]– -रुक्ः काठ २७, १०.
?अपुरोहि[e] पै १०, ४, ६.
¶अ-पुरोहित[f]– -तम् काठ २७, ८.
अ-पुल– -लम् पै १५, ६, ८.
?अपुलंपतु[g] पै २, ८१, २.
*अपुव- √*अपुवाय् √*अस्पृ द्र.
†अ-पु(ष्प→)ष्पा[h]– -ष्पा ऋ १०, ९७, १५; मा १२, ८९; का १३, ६, १५; तै ४, २, ६, ४; –ष्पाम् ऋ १०, ७१, ५.
¶अ-पूत,ता[i]– -तः तै ६, ४, ९, २; मै २, १, ३; ५, ५; –तम् मै १, ६, ८; काठ ६, ४; ३०, ९[2]; –ता तै २, १, १०, २; काठ २३, ९; क ३६, ६; –तौ तै ६, ४, ९, १.
अपूत-पा[j]– -पाः तै ४, ४, ९, १.
अ-पूतभृत्[i]– -भृत् मै २, ११, ५; काठ १८, ११; क २८, ११.
अपूप- √*अस्पृ द्र.
†अ-पूरुष[h]– -षम् ऋ १०, १५५, ३; पै ६, ८, ७.
अ-पूरुषघ्न[i]– -घ्नः ऋ १, १३३, ६.
अ-पूर्व[h]– -र्वम् खि ४, ११, २; मा ३४, २; –र्वेण शौ १०, ८, ३३.
†अ-पूर्व्य,र्व्या[k]– -र्व्यं ऋ ८, २१, १; ८९, ५; कौ १, ४०८; २, ५८; ७७९; ३, २, ७; जै १, ४५, १०; २, ६, १; ३, ६, ४; शौ २०, १४, १; ६२, १; –र्व्यः ऋ १, १३४, ६; –र्व्यम् ऋ ३, १३, ५; ५, ५६, ५; ८, १८, १; १०, २३, ६; –र्व्या ऋ १, ४६, १; ६, ३२, १; ८, ६६, ११; कौ १, १७८; ३२२; २, १०७८; जै १, १९, ४; ३३, १०.
अ-पृणत्[i]– -णतः ऋ ५, ७, १०; ६, ४४, ११; –णन् ऋ १०, ११७, १; –णन्तः ऋ ५, ४२, ९; –णन्तम् ऋ १, १२५, ७; १०, ११७, ७.
अ-पृतन्य– -न्यः पै ६, ९, १०.
अपे(प√इ), अपायति ऋ ८, ६६, १५; शौ ४, ३, ५; ६, ६, २; २०, १; १०, १, १३; १९, ४९, १०[3]; पै १४, ४, १०[3]; १६, ३६, ३; अप···अयति ऋ ८, ६६, १५; अप···अयत् पै ५, १, १; अपायातै शौ ७, ९५, ३; अपायत ऋ १०, ७२, ६. अपैति ऋ १, १२४, ८; अप··· एति ऋ १, १२३, ७; ¶अपयन्ति तै ६, ५, ११, २; मै ४, २, ८; २, ३, २[2]; †अप···यन्ति ऋ १, ५०, २; कौ ३, ५, ७; शौ १३, २, १७; २०, ४७, १४; अपैतु शौ १०, १, १०; पै १, २१, ५; १६, ३५, १०; अप···एतु ऋ ८, ६७, १५; काठ ३८, १३; अप-(एतु) ऋ ८, ६७, १५[m]; पै १, २१, ५; अप···यन्तु मा ३५, १; का ३५, ४, १; पै १, ५९, ५; अपेहि ऋ १०, १६४, १; शौ ५, ७, ७; ६, १६, ३; ४५, १; ७, ९३, १; २०, ९६, २४†; पै ५, १, २[2]; ७, ९, ६[n]; अप (इहि) पै १४, ३, १०[o]; †अपेत ऋ १०, १४, ९; मा १२, ४५; का १३, ४, १; तै ४, २, ४, १; ५, २, ३, १[2]¶; मै २, ७, ११; ३, २, ३; काठ १६, ११; २०, १; क २५, २; ३१, ३; शौ १८, १, ५५; $पै ३, ९, ७; ४, १७, ७; १९, ७; ५, १, ५; १३, ४, ११; अप···इत ऋ १०, १०८, १०; अपेतन शौ ६, ८३, २; पै १, २१, ३; ¶अपेयुः मै ३, ८, ४.
*अपा(प-अ)य-
अपाय-वत्– -वान् पै ४, ५, १०[p].
अपा(प-आ)यिन्- अन्°

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. पुनर्+आ-√भू+घञ् प्र.।
[b]) सस्व. नापू. द्र.। उप. <पुनर् √१दा।
[c]) सस्व. एपूटि. द्र.। उप. यद्र.। ?'न पुरोगवामः' इति पाएङ्. पा.।
[d]) सस्व. कृते तु. टि. अ-च्-छन्दुस्क-।
[e]) 'एकव्रता विधिना भजन्तु पुरोहिताः' इत्येवं शोध-युक्तोऽधिद्यत्तरो जागतः पादः स्यादिति कृत्वा तत्तत् पदं यद्र.।
[f]) वा. वि. सद् बस. भवति। उप. यद्र.।
[g]) एतच्-शोधार्थं तु. टि. '√२अक्ष्>?अक्षौद्'।
[h]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।
[i]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।
[j]) उस.उप. √१पा+विच्। कृत्-प्रस्व.(पा ६,२,१३९)।
[k]) सस्व. एपूटि. द्र.। उप. यद्र.। अत्र पूप. नञ् गुणप्रतिषेधादन्यस्मिन्नर्थे द्र.।
[l]) मूको. सकृद् 'अपायतः' इति पा. (तु. WI.)। तच्चिन्त्यम् असंगतेः।
[m]) मुपा. 'अप+उ' इति निपातद्वयसंघातमात्रम्।
[n]) मुपा. प-स्थाने 'म' इति मुद्रणप्रमादजः (तु. शौ ५, ७, ७)।
[o]) ('साप'>)'माप' इति मुपा. 'मा। अप' इत्येवं द्विपदतया विसंधेयः।
[p]) नितरामसिद्धचरपरिष्कारः मुपा. पादचतुष्टयेऽपि

अपेत[a]- अन्°

अपे(प√ई)क्ष्, अपेक्षन्ते मा १७,६८; का १८,६,४; तै ४,६,५,२; ५,४,७,१; मै २,१०,६; काठ १८,४; २१,९; क २८,४; शौ ४,१४,४; पै ३,३८,४.

अपे(प-ई)क्ष- अन्°

अपे(प-ई)क्षमा(ण>)णा[b]- -णा शौ १२,७,८; पै १६,१४२,६. [°ण- अन्°]

अपे(प√ई)ज्, अपेजते ऋ ६,६४,३; अप···अपेजते[c] ऋ ५,४८,२.

†अ-पेशस्[d]- -शसे ऋ १,६,३; मा २९,३७; का ३१,२,१; तै ७,४,२०,१; मै ३,१६,३; काठ ४४,९; कौ २,८२०; जै ३,५७,१०; शौ २०,२६,६; ४७,१२; ६९,११.

*अपै(प-आ√ए)य्[e], अप···ऐयेः[f] ऋ ५,२,८.

अपो(प√वश्>√उ)च्छ्, अप··· उच्छत् ऋ [१,४८,८; ७,८१,(१); ६]; अप(उच्छत्) ऋ १,४८,८; अप···उच्छताम् पै १,९९,१; अपोच्छतु ऋ ७,१०४,२३; शौ ६,८३,१; पै १,२१,२; अप···उच्छतु ऋ ८,४७,१८; शौ २,८,२[२]; ३-५; १४,२,४८; १६,६,२†; अप[२]···उच्छतु शौ ३,७,७; अपोच्छन्ताम् पै १६,११,३‡[g]; अपोच्छन्तु शौ ८,४,२३‡[g]; अप···उच्छन्तु शौ २,८,२.

अपो(प-उ)च्छ(त्>)न्ती- -न्ती पै १,९९,१.

अपो(प-उ)ष्ट[h]- -ष्टम् पै १,९९,१.

¶अपो(प-उद्)त्√क्रम्, ?अपोदक्रामत्[i] तै ६,१,१,७.

अपो(प-उ)दक,का[j]- -कः शौ ५,१६,११; पै ८,४,११[k]; -कम् शौ ५,१३,२; पै ८,२,२; -कस्य शौ ५,१३,६; -काभिः ऋ १,११६,३.

अपोदि(प-उद्√इ), अपोदित शौ ६,५०,२.

¶अपो(प-उ)द्ध्(द्√हृ), अप···उद्धरेयुः मै १,५,१३.

?अपोन्नुन्तुतामस्सधद्मसपोन्नतद्यातस्ते[l] पै १,८९,३.

अपो(प√उ)भ्,म्भ्, अपोम्भत शौ ८,८,११; पै १६,३०,१; ¶अपौम्भत् मै २,१,१२; काठ ११,४; ¶अपौम्भन् तै २,४,१३,१.

---

सुशोधः स्यात्। तद् यथा। 'उत्तिष्ठाग्ने विधूनुष्व, वि ते श्वायन्तु नाड्यः। अथो उद्वास्व् अपायवान् अवग्लाया-ऽधि मुष्कयोः'।

[a]) उप. कर्तरि क्तः प्र.।

[b]) गस. शानजन्त-कृत्-प्रस्व. (पा ६,१,१८६;२,१३९)

[c]) पादादौ ग. पठितस्यापि सतोऽर्थतो व्यवहितिर्मा भूदितीवाऽऽख्यातपार्श्ववर्त्तिनी द्विरुक्तिः द्र. (वैतु. सा. एकः ग. पादपूरण इति)।

[d]) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र.।

[e]) अपाऽऽङोः ग. सतोः किमिदम् √*एय् इति। √यज् इत्यस्य सनाभिः धा. इति। कथमिति। मूलतः √इ> अय्-> (नाधा.) √*अयि [=√*अयय् (-ज्)] >√*एय् [>√*इय् (ज्)] इति पक्षेऽन्यस्याश्वाऽवरोहमुख्याः, >√यय् (-ज्) इति पक्षान्तरेऽन्यस्याश्चाऽऽदिलोपविशिष्टाया वर्णपारिणामिक्या विधाया आस्थेयत्वादिति।

[f]) किमेतद् रू. इति। यनि. धा. लिङि मपु१ इति। काऽत्र तिरोहितिरिति। न कापीति। तर्हि कथं प्रश्न इति। पराभिमतनिरासायेति। कथमिति। उच्यते। तद् यथा। सा. आत्म. सतः √ई इत्यस्य प. ऐयः>ऐयेः इति वर्णविकारसहकृतं लङ्वृत्तमिदमित्याह, तन्न। लङर्थस्य वा. अयोग्यत्वात्तदभाव आडागमा-भावाद् ऐकारादित्वेनाऽसिद्धेरिति यावत्। एवमपि यत् LUD. प्रभृ. √ईष् इत्यस्य लिङ्वृत्तम् इत्याहुः, यच्च ORN. √ईय् इतीव लिङ्ङ्गतया परिणतस्य √इ इत्यस्य तदेवेत्यभिमेने, तदपि समानं चोद्यम्। लिङ्वृत्त आडागमानुपपत्तेरेवेति। यनि. अर्थत उपपत्तिविशेषश्च द्र. [तु. आ.√यज् (ऋ १,९४,२; ३,४,२)]। अथ स्वरतो हि-योगेऽनिहन्यमाने साकाङ्क्षे तिङि परतः सत्य् आङः ग. निघातः (यक्र. पा ८,१,३५; १,७१)।

[g]) 'अपोच्छतु' इति पाभे. (ऋ ७,१०४,२३)।

[h]) क्ते छस्य षत्वम् (पा ८,२,३६)।

[i]) पा. प्रच्यव-विकृतः द्र.। यस्थि. द्वैस्वर्याऽनुपपत्तेः। 'अँपः (<२अप्-द्वि३) अँपोदक्रामत्'>अपोऽपोदक्रामत् (प्रथमस्य 'पो' इत्यंशस्य प्रच्यवात्) यनि. वैकृत-क्रमः सुगमः। एस्थि. 'अपोदक्रामत्' इति शोधः संपा. च पपा. च यथावदुन्नेयः (तु. भा. 'अपोपोदक्रामत्' (मुपा.?)='अपोपहायोर्ध्वमगच्छत्' इति प्रतिपदं विवृण्वतः स्पष्टः संकेतः)।

[j]) बस. पूपप्रस्व. (पावा २,२,२४; पा ६,२,१)। उप. <√*उद् यद्र.।

[k]) मूको. 'पूपोदकः' इति पा.।

[l]) प्रहेलिकायमानः मुपा. भवति। संस्कारान्तरमन्तरेण पद-विभागो दुःशकः।

¶अ॒पो(प-उ)ब्धᵃ– -ब्धः तै २, ४, १३, १; मै २, १, १२; काठ ११, ४. [°ब्ध- अन्°]

¶अ॒पो(प-उ)म्भनᵇ– -नात् तै २,४, १३, १²; काठ ११, ४.

अपो(प√ऊ)र्णु,अ॒पोर्णुते ऋ १, ९२, ४; २,३४,१२; तै ६,१,३,३¶; मै ३, ७, ८¶; काठ २४, ६¶; क ३७, ७¶; †अपोर्णु॒ते ऋ १, १५६, ४; ९, १०८, ४; मै ३, ७, ८¶; कौ २, २८९; जै ३, २४,५; अ॒प···ऊर्णोतिᶜ ऋ १०, ८८,१२; अपोर्णु॒तः ऋ ८,४०,५; अ॒प···ऊर्णु॒थः ऋ १०,४०, ८; †अ॒पोर्णु ऋ ९,९६,११; मा १९, ५३; का २१,४,३; तै २,६,१२, १; मै ४, ९,११६; १०,६; काठ २१,१४; †अ॒प···ऊर्णु॒हि ऋ १०, ७३, ११; काठ ९, १९; कौ १, ३१९; जै १,३३,७; ¶अ॒पौर्णोत् तै २,१,५,१; अपोर्ण्वी॒त, अ॒पोर्ण्वी॒त तै ६, १, ३, ३¶.

अपोर्णु॒वत्ᵈ– -वन् शौ ९, ३, १८; पै १६, ४०, ९; -वन्तः ऋ १, १९०, ६; ४, ४५, २.

अपोष्ट- अपोच्छ् द्र.

अपो(प√१ऊ)ह्, ¶अपोहति काठ १०,४;२६,६;अ॒प-अप···ऊहति ऋ ५, ३४,३; अ॒पोहामि मा २, १५²; का २,४,१²; शौ १४,१, ३८; अ॒प···ऊह शौ १८,२,५७; अ॒पौहत् ऋ १०,६१,५;¶अपोहेत् काठ ३०, ६; क ३१,८.

अ॒प्स-, अ॒प्तु-,अ॒प्तु॒र्-,अ॒प्तूर्य-, अ॒प्त्यु-, अ॒प्न-,अ॒प्नस्-,अ॒प्य- √°अप् द्र.

अप्य(पि√अ)ञ्च्

अ॒प्यु॒च्,ञ्च्ᵉ-

अपीच्यᶠ– -च्यः ऋ ८, ४१,८; तै ७, ४, १९, २; काठ ४४,८; –†च्यम् ऋ १,८४,१५;२,३५, ११;८,३९,६;४७,१३;९,७१, ५;[(१,१५५,३) ७५,२]; ८६, १०;८७,३; मै २,१३, ६; काठ ३९,१२; कौ १,१४७; २, २९; ५१;२६५;२८१; जै १,१६, ३; ३, ३, ८; ५, १०; २२,१२; ३१,१; शौ २०, ४१,३; -च्या ऋ ८, ४१, ५; –†च्ये ऋ १०, १२,८; शौ १८, १, ३६; -च्येन ऋ ७, ६०, १०; १०,५३,११.

¶अ॒प्य(पि√अ)द्,अ॒प्यत्त, अ॒प्यादन् मै ४, ५, ९.

१अप्य(पि√१अ)स्, अ॒प्यस्ति मै १, ४, १२ᵍ; काठ ५, २ᵍ; ६, ७ᵍ; क ४, ६ᵍ; शौ ११, १, ३३ʰ; †अ॒पि···अ॒स्तिⁱ ऋ १०,१२,५; शौ १८, १, ३३; †अ॒पिष्मसिʲ ऋ ८, १८, १९;३२,७ᵏ; ४७, ८; ६६, १३ˡ; कौ १, २३०; जै १, २४, ६; ¶अ॒प्यसत्ᵐ तै ७, १, ३, १²; २³; ३; अप्यस्तु पै १, ७०, २ᵍ; १६, ९२,३ʰ; †अ॒पि···अस्तुⁿ ऋ १, १६२,

ᵃ) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९)।

ᵇ) गस.ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

ᶜ) मुपा. 'अ॒पो इत्यत्र (प-उ)' इति निपातद्वय-संघातमात्रम्।

ᵈ) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

ᵉ) सस्व. कृते तु. टि. अन्वच्, ञ्च्- ।

ᶠ) तात्रभविके यति प्र. तित्-स्वरः, उप. अकारलोपः, पूर्वस्येकारस्य दीर्घत्वं च द्र. (यक्र. पा ४, ४, ११०; ६, १, १८५; ४, १३८; ३, १३८)। यत् सा. विकल्पेन ऋ १, ८४, १५ इत्यत्र अपि √१चि + यत् प्र. इत्येवं व्यु. आह, तद् अपि-चेय- >अपीच्य- इत्येवंप्रकारकस्य परिणामस्याऽत्यन्तं दुर्गमत्वाद् उपेक्ष्यम्।

ᵍ) यदा 'पदार्थे-' (पा १, ४, ९६) इत्युक्तदिशाऽऽक्षेप्यः पदार्थः कस्यचित् कुत्रचिद् भागरूपो भवति तदाऽपिः ग. भवतीति च तदर्थं 'अभिरभागे' (पा १,४, ९१) इत्यत्र तस्य उसं. च द्र. (वैतु. SIM. कप्र. इति)।

ʰ) तु. नापूटि.; वैतु. W. पदार्थार्थे, सा. च संभावनायां कप्र. वदन्तौ ।

ⁱ) तु. LUD.ORN.; वैतु.GW. W. समुच्चयार्थे कप्र.। निघाताऽभावः (पा ८, १, ३५)।

ʲ) अन्तःसमाश्रयणं गत्यर्थः स. तद्योगश्च। यच्च उप. √१अस् इत्यस्याऽयच्-परस्याऽपि सतः षत्वविषयत्वं श्रूयते, तदर्थम् उसं. सावसरं स्यात् (पा ८,३, ८७)। यत्तु सा. ऋ ८, ४७, ८ इति विरहय्याऽन्यत्रेह सर्वत्र 'अपिः' कप्र. इतीवाऽभिसंदधे, तन्मन्त्रार्थस्वारस्यविघातकत्वाच् चिन्त्यम्।

ᵏ) अपिभावाऽऽक्षेप्यमाणं 'त्वे' इति पदं गम्यं द्र. (तु. ऋ ८, ६६, १३)।

ˡ) हेतुहेतुमद्भूतांऽशवत्यस्मिन्नर्धर्चे यत् सा. अपिं सांभावनिकं कप्र. कृत्वा 'त्वे' इत्यनेन स१ सता 'विप्राः' इत्यस्याऽसमर्थमिव संवन्धमाह, तच्चिन्त्यम्। ततस्तोतृत्व-तदधीनत्वयोरुभयोरप्यर्थयोः ष. एवाऽव्यभिचारेण श्रुत्युपलम्भात्। अथ संभावनार्थोऽपि लिङ्माकाङ्क्षेत लङ्मित्यपरा दिक् (पा ३, ३, १५४)।

ᵐ) तु. टि. अ॒प्यस्ति (काठ ५, २); वैतु. भा. सा. च कप्र. अपिरिति ।

ⁿ) 'देवे॒षु (=तन्मध्ये प्रास्तवतः) सु॒र्वा ता॒ (प्र३ =तदात्मकः) ते अ॒पि···अस्तु (=तव भागः स्यात्) इत्येवं

[८; ९; १४]; मा २५, ३१; ३२; ३८; का २७, १२, ८; १३, १; ७; तै ४, ६, ८, ३; ४; ९, २; मै ३, १६, १[३]; काठ २८, ३$; ४६, ४[२]; ५; अुप्येधि तै ४, ४,७,२; ५, ३, ११, ३; अुपि···आसीत्‌ शौ २, २, ३; पै १, ७, ३; अुपिष्यात्[a] ऋ ६, ६८, ६.
¶२अप्य(पि√२अ)स्‌, अप्युस्यति मै ३, २, ७; ४, ७, ७.
अप्या(पि√आ)प्‌, ?अप्याुप्य[b] शौ २०, १३६, ७; ८.
अ-प्रकेत[c]– -तम्‌ ऋ १०, १२९, ३.
अ-प्रक्षित[d]– -तम्‌ ऋ १, ५५, ८.
अ-प्रचङ्कश[e]– -शाः शौ ८, ६, १६. पै १६, ८०, ७.
?अ-प्रच(?चि)ति[f]– -तिः खि ५, १३, ३.
[1]अ-प्रचेतस्[g]– -तसः ऋ ९, ६४, २०; ९८, ११; –ताः ऋ १, १२०, १; १०, ७, ६; ११७, ६; खि ५, १२, २; शौ २०, १२८, २.
अ-प्रच्युत[g]– -तम्‌ खि ५, ७, ३,१०; मै ४, १३, ८; काठ १९, १३; –तानि ऋ २, २८, ८.
अ-प्रजनन– -नाय काठ ४५, ३.
¶अ-प्रजनिष्णु[h]– -ष्णुः मै १, ६,१०.
अ-प्रजस्[i]– -जसम्‌ शौ ७, ३६, ३; १२, ९, ७; पै १६, १४५, ७; –¶जाः तै ६, ३,२,५; काठ २३, ९; ३१, १३; ३५, १८; १९; क ३६, ६; ४८, १६;१७.
अप्रजुस्-ता[j]– -ताम्‌ शौ ९, २,३; पै १६, ७६, ३.
अप्रजास्-त्व[k]– -त्वम्‌ शौ ८, ६, २६; पै १६, ८१, ७; –त्वाय शौ १०, १, १७; पै १६, ३६,७.
अ-प्रजस्य[l]– -स्यम्‌ खि २, ११, ४; तै ५, ६, ८, ४¶.
अ-प्रजा[m]– -जाः ऋ १, २१, ५.
¶अ-प्रजात,ता[g]– -तः मै ४, ३, २; काठ १२,७; –ता काठ १३,१२.
अ-प्रजज्ञि[n]– -ज्ञयः ऋ १०, ७१, ९.
¶अ-प्रज्ञात[n]– -तम्‌ तै ६, ३, ४, ८.
¶अ-प्रज्ञात्र[o]– -त्रम्‌ तै ७, १, ७, ४.
अ-प्रति[p]– -ता ऋ ८, ३२, १६;

गम्येन भाग-पदेन कर्तृभूतेन बहुत्ववदुपश्राव्यमाणयोरपि 'सुर्वा ता' इति पदयोः सामानाधिकरण्यं स्यात्‌। यद्वाऽन्तर्भावित इह ण्यर्थ इति कृत्वा देवेभ्र्प्रदीयमानस्तव (भागः) 'सुर्वा ता' (द्वि३) अपिभावयतु (अन्तः समावेशयतु) इत्येवं व्याख्येयम्‌ [तु. PW.प्रभृ.; वैतु. यनि.स्थ. सा. प्रभृ., SIM. च अपिं कप्र. वदन्तः (यत्तु सा. क्रिप. वचनव्यत्ययमुपाश्रित्य 'सुर्वा ता' इत्येतद्वाच्यानां सतामस्वोपकरणानां वाऽस्वशरीरावयवानां वा देवभावमपि साधयेत्‌, तदसांप्रदायिकत्वान्‌ नितरामुपेक्ष्यम्‌ )]।

[a]) तु. PW. (मन्त्रसंख्या ?); वैतु. सा. समुच्चये कप्र. अपिरिति (तुरीयपादेऽपेक्षितस्याऽपि सतः समुच्चयाऽर्थस्य गम्यत्वोपपत्तेश्चाऽपेस्तद्वाचकत्वाऽभ्युपगमे गतित्वाऽभावाद् नाउ. क्रिप. षत्वाऽनुपपत्तेश्चेति दिक्‌)।

[b]) 'अष्टा अप्याप्य भू-भुवः पिप्पलीस्तथैव इति' इत्येवं मूलतः सतः पा. कौन्तापसाधारणं वैकृतं सुशोधं स्यान्न वेति विमर्शसापेक्षमेव द्र.। एवं तावद् यनि. ल्यबन्तं रू. वा स्यात्‌, उद् √स्था >'उत्थाप्य' इति वा 'अथ' इति पृथग् विभज्य आ√*अप् >'आऽप्य' इति वा मूलान्तरीयं सदपि समाननिष्पत्तिकं रू. इति भूयसे विवेकाय कल्पताम्‌।

[c]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[d]) तस.नञ्-स्वरः (पा ६,२,२)।उप.प्र√१क्षि+क्तः प्र.।

[e]) सस्व. नापू. द्र.। उप. यङ्लुगन्तात्‌ प्र√*कश्+अच्‌ प्र. (पा ३, १, १३४)। अभ्यासस्य नुगागमः उसं. (पा ७, ४, ८६)।

[f]) संदिग्धः पा. भवति (तु. संटि. पाभे. 'अुप्रददिः' 'अप्रतिदिश्ययः' इति)। यनि. सस्व. एपू. द्र.।

[g]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[h]) सस्व. कृते तु. टि. अु-क्षोधुक-। उप. यद्र.।

[i]) तस. नञ्-स्वरः (पा ६, २, २)। उप. प्र√जन्‌+कर्तरि डसुच्‌ प्र. (कर्मणि प्र. निष्पन्नस्य उप. कृते तु. वैप२ २अ-प्रजुस्- इति)।

[j]) भावे तलि प्र. लित्-स्वरः (पा ६, १, १९३)।

[k]) सस्व. कृते तु. टि. 'अुनागस्->°गास्-त्व-'।

[l]) तस. अन्तोदात्तः (पा ६, २, १५६)। उप. प्र√जन्‌ >°जस्-+तद्धितो यः प्र. (पा ५, १, ६७)।

[m]) तस.नञ्-स्वरः (पा६,२,२)। उप.प्र√जन्‌+कर्तरि विट्‌ [तु PW. GW. च; वैतु. सा. MW. च डः प्र. इति (ययोः अु-प्रज- इति प्राति. इति सुवेचम्‌ )]। एवमस्मिन् व्यतिकरे कः स्यात्‌ प्र. श्रुत्यभिप्रेततर इत्यर्थो भूयोऽपि √जन्‌ >जु-, जा- इत्यत्र प्र√जन्‌ >प्र-जु-, प्र-जा- इत्यत्र च प्राप्यमाणसंकेतः द्र.।

[n]) सस्व. नापूटि. द्र.। उप. प्र√ज्ञा+कर्तरि किः प्र. लिड्वच्च (पा ३, २, १७१)।

[o]) बस. अन्तोदात्तः (पा ६, २,७२)। उप. प्र√ज्ञा +ष्ट्रन्‌ प्र. (पाउ ४, १५९)।

[p]) सस्व.नापू.द्र.। उप.यद्र.। '-ता'इति रू.स१ इति GW. प्रभृ.। यत्तु सा. एनत्‌ ६अु+प्र√तन्‌+विट्‌ प्र. इत्येवं

-ति ऋ १, ५३, ६; ६, [४४, १४; ७, २३, ३]; ८३, ४; ९९, ५; ९, २३, ७; तै ३, २, ११, ३†; ५,३,२; ¶५, ४, ६, ३; ४; मै १, ३, १२; ३, ३, ७¶; †४, १०, ५; १२, ५; काठ ४, ४; २१, १०[२]¶; शौ ७, ५२, १[२]; ९८, १; ११५, १; †२०, १२, ३; २१, ६; -तिः ऋ ५, ३२, ३; -†तीनि ऋ २, १९, ४; ४, १७, १९; ६, ३१, ४; ७, ८५, ३; ८, ९०, ५; कौ १, २४८; २, ७६१; जै १, २६, ६.

¶अ-प्रतिक्शात[a]- -तम् मै १, ११, ५; ४, २, ७[२].

¶अ-प्रतिख्यात- -तात् काठ १४,५.

¶अ-प्रतिगृहीत[a]- -तम् तै ७, १, ६, ५.

अ-प्रतिघात्य[b]- -त्यः पै ३, २७, १.

¶अ-प्रतिजग्ध[a]- -ग्धेन मै १, ४, १०[२]; काठ ३२, ७[२].

?अ-प्रतिदिद्ग्यय:[c] शौ २०, १२८,८.

*अ-प्रतिधृष्ट[a]-

†अप्रतिधृष्ट-शवस्[d]- -सम् ऋ १, ८४, २; मा ८, ३५; का ८, १०, १; तै १, ४, ३८, १; मै १, ३, ३४; काठ ४, ११; क ३, ९; कौ २, ३८०; जै ३, ३०, २३.

अ-प्रतिधृष्य[e]- -¶ष्यः मै १, ९, १; ५; काठ ९, ९; १२; क ८, १२; -ष्याय मा ३८, ७; का ३८, २, १; मै ४, ९, ८.

¶अ-प्रतिनोद[f]- -दाय मै ३, ३, ९; ६, ६; काठ २३, ३; २६, ३; ४: २८, ४; क ४१, १; २; ४४, ४.

अ-प्रतिपद्[g]- -दम् मा ३०, ८; का ३४, १, ८.

अ-प्रतिब्रुवत्[a]- -वद्भिः शौ ३, ८,३; पै १, १८, ३.

अ-प्रतिमन्यूयमान[h]- -नाः शौ १३, १, ३१.

†अ-प्रतिमान[i]- -नम् ऋ ८, ९६, १७; शौ २०, १३७, ११.

¶अ-प्रतिरथ[j]- -थम् तै ५, ४, ६, ३; ४; मै ३, ३, ७[२]; काठ २१, १०; -थस्य तै ५, ४, ६, ४; मै ३, ३, ७; काठ २१, १०; -थेन मै ३, ३, ७.

¶१अप्रतिरथ-त्व[k]- -त्वम् तै ५,४, ६, ४.

¶२अ-प्रतिरथत्व[l]- -त्वम् मै ३, ३, ७; काठ २१, १०.

अ-प्रतिवध- -धम् पै ३, २७, ४; ६.

¶अ-प्रतिवादिन्[m]- -दिनः तै १, ६, १०, १.

अ-प्रतिविद्ध[n]- -द्धाय तै १, ५, १०, १.

¶अ-प्रतिषिक्त[o]- -क्तः मै १, ८, ३; -क्तम् मै १, ८, ३; काठ ६,३[२]; क ४, २[२]; -क्तेन काठ ६, ३; क ४, २.

¶अ-प्रतिषेक्य[p]- -क्यम् मै १, ८, ३[२]; काठ ६, ३; क ४, २.

†अ-प्रतिष्कुत[q]- -तः ऋ १, ७, ६; [८; ८४, ७]; १३; ५, ६१, १३; ७, ३२, ६; मै २, १३,६; काठ ३९, १२; कौ १, १७९; ३८९; २, २६३; ६९१; ९७१; ९७२; जै १, १९, ५; ४३, ९; ३, २२, १०; ५६, १८; शौ २०, ४१, १; ६३, ४; ७०,१२; १४; -तम् ऋ ३, २, १४; ८, ९३, १२; ९७, १३; कौ १, ४६०; जै १, ४८,४‡[r]; शौ २०, ५५, १.

अ-प्रतिष्ठा- -ष्ठा पै १६, ४७, ७.

---

तस. इति कृत्वा व्याचष्टे तन्न। तथात्वे ह्याद्युदात्तत्वापत्तेः नाउ. रू. वा. क्रिवि. द्र.।

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[b]) 'हन्ताऽयमस्तु अप्रतिघातियः' इत्येवमन्त्यविसर्जनीयपूर्त्या सु-शोधश्च विसंहितः सन् सुपठश्च त्रैष्टुभः पादः द्र. (तु. नाउ. श्रु.)।

[c]) तु. सस्थ. 'अ-प्रददिः' इति मूको. पा., WR. एतमेव पा. अङ्गीचक्रतुः।

[d]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[e]) तस.उप.क्यपि कृत्योकीयः स्वरः (पा ६,२,१६०)।

[f]) उप. प्रति√नुद+भावे घञ् शेषं नाउटि. द्र.।

[g]) तस.नञ्-स्वरः(पा६,२,२)। उप. प्रति√पद्+कर्तरि क्विप् प्र.।

[h]) सस्व. नापूटि. द्र.। उप. प्रति√मन्यूय+शानच् प्र.।

[i]) बस. अन्तोदात्तः (पा ६,२,१७२)। उप. यद्र.।

[j]) सस्व. द्विपूटि. द्र.। उप. बस. द्र.।

[k]) भावे त्वः प्र. तत्स्वरश्च।

[l]) तस. नञ्-स्वरः (पा ६,२,२)। उप. भावे त्वः प्र.।

[m]) सस्व. नापूटि. द्र.। उप. प्रति√वद्+ताच्छीलिको णिनिः प्र.।

[n]) उप. प्रति√व्यध्+क्तः। शेषं एपूटि. द्र.।

[o]) उप. प्रति√षि(सि)च्+क्तः प्र.। शेषं द्विपूटि. द्र.।

[p]) तस. उप. प्रतिषेक- (प्रति√षिच्+भावे घञ् प्र.) +तादर्हिकः यत् प्र.।'ययतोः'(पा६,२,१५६)इत्यन्तोदात्तः।

[q]) तस. नञ्-स्वरः (पा ६, २, २)। उप. प्रति√स्कु→ष्कु+कर्मणि क्तः प्र.।

[r]) 'अ-प्रतिष्कृतम्' इति मुपा. ऋ. पाभे.। यद्वा लिपिप्रमादजः।

अ-प्रतिष्ठान्[a]– -नः ¶तै १, ७, ६, ६; २, २, ६, ५; ¶काठ २७, ६; ¶क ४२, ६; शौ ११, ४, १८; पै १६, ५६, १७; ५८, ४; ५.

¶अ-प्रतिष्ठाप्य[b] तै ३, १, २, ४.

¶अ-प्रतिष्ठायुक[c]– -कम् मै ४, १, १२[3].

¶अ-प्रतिष्ठित,ता[d]– -तः तै २, १, ४, ७; ३, १, २, ४[4]; ५, ४, १२, ३; ६, ३, ३, ४[2]; ७, ३, ७, १; १०, ४; ४, ११, ४; मै १, १०, २०; २, ५, २; काठ १३, १; ३३, ३; ३६, १४; –तम् मै १, १०, २०; ३, ३, ३; काठ ३६, १४; –ता मै १, ८, ६; –ताः तै ५, ४, १०, १[2]; ७, ३, १०, ४; मै १, १०, २०; ३, ४, ४; काठ २२, १; ३४, २; ३६, १४; –तात् तै ६, ६, ६, १; –तानि तै ३, १, २, ४; ५, ४, १०, १.

¶अ-प्रतिष्ठिति[d]– -त्या मै ३, ३, १०.

¶अ-प्रतिहृ(त>)ता[e]– -ताभिः तै ७, ५, ८, २.

अ-प्रतीक[d]– -कम् मै ४, १४, १२.

¶अ-प्रतीक्षम्[f] तै ५, २, ४, ४; ६, ६, ३, ५.

अ-प्रतीत[d]– -०त ऋ १, १३३, ६; –तः ऋ ३, ४६, ३; ४, ५०, ९; ५, ३२, ९; ६, २०, ९; ७३, ३; १०, १११, ३; काठ ४, १६; ४०, ११; शौ २०, ९०, ३; –तम् ऋ १, ३३, २; ११७, ९; ४, ४२, ६; ५, ३२, ७; १०, १०४, ७; मै ४, १४, १७; –तस्य ऋ ५, ४२, ६; –ता मा ८, ५९; का ९, ७, ८; मै ४, १४, ६; –तौ शौ ७, २६, १.

अ-प्रतीत्त[g]– -त्तम् तै ३, ३, ८, २; ४; शौ ६, ११७, १; पै १६, ४९, १०.

¶अ-प्रत्रास[h]– -साय काठ ७, ७.

?अ-प्रदद्दि[i]– -द्दिः शौ २०, १२८, ८.

¶अ-प्रदाह[j]– -हाय तै १, ७, ६, ७; २, १, १, १; २, ८, ६[2]; मै ३, ७, ७; काठ २७, ७; ३२, ५.

अ-प्रदु(ग्ध→)ग्धा[k]– -ग्धाः ऋ ३, ५५, १६.

अ-प्रदृपित[l]– -तः ऋ १, १४५, २.

अ-प्रपा(ण→)णा[m]– -णा खि ५, १३, ३; शौ २०, १२८, ८.

¶अ-प्रपाद[n]– -दाय तै ५, ६, ९, १; काठ १९, ११; २४, ५; २८, ६; क ३१, १; ३७, ६; ४४, ६.

¶अ-प्रपादुक[o]– -काः मै ३, ७, ५.

अ-प्रभु[d]– -भुः ऋ ९, ७३, ९.

अ-प्रभूति[d]– -ती[p] ऋ १०, १२४, ७.

?अ-प्रमय[q]– -यम् पै १४, ३, ८.

अ-प्रमाद[d]– -दम्[r] मा ३४, ५५;

---

[a]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. प्रति √ष्ठा(<स्था)+अधिकरणे ल्युट् (पा ३, ३, ११७)।

[b]) तस. नञ्-स्वरः (पा ६, २, २)। उप. प्रति √ष्ठा (<स्था)>ष्ठापि+क्त्वा>ल्यप् प्र.।

[c]) सस्व. कृते तु. टि. अ-क्षोधुक-।

[d]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[e]) सस्व. नापू. द्र.। उप. प्रति √हृ+कर्मणि क्तः।

[f]) सस्व. कृते एपूटि. द्र.। उप. प्रति √ईक्ष्+णमुल् प्र.।

[g]) सस्व. द्विपूटि. द्र.। उप. प्रति √१दा + कर्मणि क्तः। धा. ताऽऽदेशे पूप. दीर्घत्वम् (पा ६,३,१२४;७,४,४७) वोच्येत, प्रॅतिदत्त->प्रॅतिअत्त->यनि. इत्येवमज्मध्यस्थ-वर्णलोपाऽऽनुपदिकः पूर्वसवर्णदीर्घो वेति तत्त्वविविचां विमर्शमर्हेत्। एवंविधेषु सांहितिकाऽऽपत्तिविशेषवत्सु स्थ. पपा. नाऽवगृह्णन्ति (तु. तै ६,३,१०,४; मा ९,९; शौ ६, ११७, १)। एस्थि. अपि यदिह तै. पपा. उप. 'प्रति-इत्त-' इत्येवमवगृह्य प्रादर्शि, तत्र रहस्यं खल्वन्वेष्यम्। तदत्र दकारस्थानीयः सन् इकारो श्रेषमात्रं वा भवतीह प्रस्तूयमानान्यतरपक्षीयस्य प्राकृतायितस्य *प्रति-अत्त->*प्रति-इत्त- इतीव कश्चिदपरो भूयोऽपि मध्यवर्त्येवा-न्तरविशेषो वेत्यपि विमृश्यम्। यत्त्विह भा. पपा. इत्त-इत्यंशस्येकारोपजनवत्तया वा √इन्द्+क्तः प्र. इत्येवं निष्पन्नतया वा समाधानमाह, तदहेतुकत्वाच्चाऽप्रासङ्गिक-त्वाच्च नेवाऽऽद्रियेतेति दिक्।

[h]) तस. उप. प्र √त्रस्+घञ् प्र.।

[i]) विकृत-भूयिष्ठा कौन्तापी श्रुतिः। 'अप्रचतिश् चयः' इति खि ५,१३,३; शांश्रौ १२,२१,२,३ इत्यत्र 'अप्रति-दिश्ययः' इति शौ (पाएड्.) २०, १२८, ८ इत्यत्र च मुपा. भवतः। यनि. पा. अपि मूको. उपलभ्यते। तत् सर्वं विमर्शार्हं द्र.।

[j]) तस. नञ्-स्वरः (पा६,२,२)। उप. प्र √दह्+भावे घञ्।

[k]) उप. प्र √दुह्+क्तः। सस्व. नापूटि. द्र.।

[l]) उप. प्र √दृप्+कर्मणि क्तः प्र.। सस्व. एपूटि. द्र.।

[m]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. प्र √१पा+अधिकरणे ल्युट् प्र.।

[n]) सस्व. त्रिपू. द्र.। उप. प्र √पद्+भावे घञ्।

[o]) तस. कृत्योकीयः स्वरः (पा ६,२,१६०)। उप. यद्र.।

[p]) तृतीयायाः पूर्वसवर्णदीर्घत्वम् (पा ७, १, ३९)।

[q]) 'अप्रमाय' इति मूको. पा.। ल्यबन्त-साहचर्यान् मन्त्रार्थ-चमत्कारकत्वाच्च 'आ-प्र-माय' (<आ+प्र √१मा) इति पा. शोधदिशा प्रस्ताव्यते।

[r]) वा. क्रिवि. द्र.।

४, १४, १२[४]; काठ १६, ८; ३४,१५; क २,५; पै १,६९,२.
अभिमातिघ्नी- -घ्नीः काठ ३९, १.
अभि-मानुक- अभि√मन् द्र.
अभि√मिह्, ?अभिमेहताम्[a] शौ १९, ८, ५.
अभि√मुच्>ञ्च्, अभिमुञ्चताम् पै २, ११, ५.
अभि√मुद्
*अ(भि>)भी-मोद्[b]-
अभीमोद-मुद्[c]- -मुदः शौ ११, ९, २६; १०, २४; पै १६, ८४, ८[d]; ८७, ४.
¶अभि√मृ
अभि-मृत[e], ता- -तम् क ३९, ४; -ता काठ ८, २; क ६, ७; -तायाम् मै ४,५,९.[°त- अन्°]
अभि√मृश्, अभि···मृशते ऋ १, १४५, ४; ¶अभिमृशति तै १, ५, ८, २; २, ६, ५, ६; ५, २, ७, ३; ४, १०, १-३; मै ३, २, ५; ६; ४, ७; ४, ८, ९; काठ २०, ५; २२, १[२]; ३१, १५; ३२, २; क ३१, ७; पै १६, १२६, १; ४[२]; ¶अभिमृशाति तै १, ७, ३, ४; अभिमृशामसि शौ ३, २४, ६; ४, १३, ७‡[f]; पै ५, १८,८‡[f]; ३०, ८; अभि···मृशामसि ऋ १०, १७३, ६; ¶अभ्यमृशत् तै ५, ५, २, ४; ¶अभिमृशेत् तै २, ४, ३, ३; ३, १, ६, १; २, १, ३; ५, ५, २, ४; ४, ४; ७, १, १; ३; मै १, ४, ५; १२; ५, १२; ९, ५[४]; ८; काठ ९, १४[२]; १०, ७; २२, ८[२]; क ३५, २.
अभिमृक्षः तै ४, २, १०, १.
ɸअभि-मर्मृशत्[g]- -शत् ऋ ३, ३८, १.
अभि-मर्शन- शिव°
†अभि-मृशे[h] ऋ २,१०,५; मा ११, २४; का १२, २, ५३; तै ४, १, २, ५; क ३०, १.
¶अभि-मृश्य[i]- -श्यः मै ४, ६, ६[२].
अभि√म्लै
अभि-म्लातवर्ण- अन्°
अभि√यज्, ¶अभियजते मै १, ४, ५[२]; ८; १०, ८; ३, ८, ७; ४, १, १३; काठ ३१, १५; ३६, ३[२]; ¶अभियजते मै १, १०, ८; ¶अभ्ययजन्त काठ ८,१३; क ८, १.
अभ्ययष्ट ऋ ६, ४७, २५.
अभि-यत्- १अभी(भि√इ) द्र.
अभि√*यश्
अभि√इयक्ष, अभि···इयक्षति ऋ ९, ७८, १.
ɸअभी(भि-इ)यक्षत्[j]- -†क्षते ऋ ९, ११, १; मा ३३, ६२; का ३२,५,८; कौ २, १; ११३; जै ३, १, ३; ११, ९.
अभि√या, अभियाति शौ ४, २९, ७; पै ४, ३८, ७; १६, ३२, ८‡[k]; अभियातु शौ ६,४०, २; पै १, २७, ३; अभियाहि शौ १०, १, १५; पै १६, ३६, ५; अभियातम् शौ ११, २, १; पै १६, १०४, १.
अभि···यासिपत् ऋ १, १७४, ५.
अभि-यात[l]- -तः शौ ११, २,१३; पै १६, १०५, ३.
अभि√यु, अभियोधि तै ३, ५, १०, १‡[m].
अभि√युज् अभियुज्यताम् पै २, ५, ३.
अभि-युक्त- -क्तस्य पै २, २५, २.
१अभि-युग्वन्[n]- -ग्वना ऋ ६, ४५, १५.
†अभि-युज्[o]- -युजः ऋ ३, ११, ६; ४, ३८, ८; ५, ४, ५; ६, २५, २; ८, ४५, ८; ९, २१, २; मै ४, ११, १; १४, १२; काठ २, १५; कौ २, ९०८; जै ४, १५, २; शौ ७, ७७,९.
२अभियु(ज्>)ग्-वन्[p]- -ग्वा मा ३९, ७; का ३९, ५,१.

[a]) 'अभिमेधताम्', 'अभिमेद्यताम्', 'अभि । मे । हताम्' इत्येवंप्रकारको भूयान् विकृतः पा. ।

[b]) गस. उप. घञ्, पूप. दीर्घत्वम्, थाथादि-स्वरश्च (पा ६, ३, १२२; २, १४४) ।

[c]) द्वस. सासस्व. [पा ६, १, २२३; (वैतु. PW. प्रभृ. यङ्लुगन्तात् कर्तरि क्विप् इत्येवं व्यु. ब्रुवाणाः)] ।

[d]) सुपा. अयं शोधः द्र. ।

[e]) प्रास. पूपप्रस्व. (पा ६, २, २) । उप. यद्र. ।

[f]) 'उपस्पृशामसि' इति ऋ (१०, १३७,७) पामे. ।

[g]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६,१,१८९;२,१३९) ।

[h]) गस. केनन्त-कृत्-प्रस्व. (पा ६, १,१९७;२,१३९) ।

[i]) गस.क्यबन्त-कृत्-प्रस्व.(पा ३,१,११०;६,२,१३९)।

[j]) शतुर्निघाते सन्नन्ते नित्स्वर एव (पा६,१,१८६;१९७)।

[k]) विशिष्ट इह ऋ (१, १६४, २७) पाभे. ।

[l]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४८) ।

[m]) 'अभि-योधीः' इति ऋ (१०, १२०, ३) पाभे. ।

[n]) गस. उप. क्वनिप् प्र., कुत्वम्, कृत्-प्रस्व. च (पा ७, ३, ५३; ६, २, १३९) ।

[o]) गस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९) ।

[p]) उस. उपप्रस्व. (पा ६, २, १३९) । उप. √वन्+

अभि√युध्, अभियोधत् ऋ ६, ३९, २.
†अभियुध्याः ऋ ७,९८,४; शौ २०, ८७, ४; †अभियुध्य ऋ १, ९१, २३; मा ३४, २३; का ३३, १,१७; अभि····युध्य ऋ ६, ३१, ३; अभ्ययुध्यत ऋ १०, ८, ८.
अभि···अयोधीत् ऋ ४, ३८, ८; †अभियोधीः ऋ १०,१२०, ३; कौ २,८३५; जै ४, ५, ७; शौ ५, २, ३; २०, १०७, ६; पै ६, १, ३; †अभि···योधिष्टम् ऋ ६, ६०, २; काठ ४, १५.
ϕअभि-योद्धृ[a]– -द्धा ऋ ८,८८,४.
अभि√रक्ष्, अभिरक्षते ऋ ४,५३, ४; ७, ८३, ९; अभिरक्षति ऋ १, १२६, ५[b]; ९, ७३, ३; मै १, ४, १५¶; शौ १०, २, २७; पै ५, १७, ५; १६, ५९, १०; ९६, ६; अभि···रक्षति ऋ ४, ५३, ५; †अभिरक्षति ऋ १०, १७०, १; मा ३३, ३०; का ३२, ३, १; मै १, २, ८; काठ २, ९; कौ २, ८०३; ३, ५,२; जै २, ३, २; ४, २, ९; अभिरक्षतः शौ १०, ६, १२; पै १६, ४३, ५; †अभिरक्षन्ति ऋ १, १६३, ५; मा २९, १६; का ३१, ३, ५; तै ४, ६, ७, २; काठ ४०, ६; पै १६, ९२,३§; †अभिरक्षसि ऋ १०, ८६, ४; शौ २०, १२६, ४; अभिरक्षथ शौ १०, ७, २३; अभि··· रक्षथ>था ऋ ८, ४७, १; अभिरक्षाति शौ ३, १२, ८; अभिरक्षतु खि २, ९, २; तै २, १, ११, २; ३, ३, ८, २; मै १, ५, १४[२]; ४, १२, २; काठ ७, ३; १०, १२; क २, ३‡[c]; ५, २; शौ ३, १७, ४‡[d]; ४, १०, ७; ६, ७९, १; १०, ३, १३–१५; १९, ४६, १–७; पै ४, २३, १–७; २५, ७; ९, ११, ३; १२, १०; १६, २३, ४; ४४, ८; ६४,३–५;७; ९६, ७; १५३, ९; १०; अभिरक्षताम् शौ २, ४,५; पै १३, १०, ११; अभिरक्षन्तु शौ ५, ३, ४‡[e]; ८, १, ७; ११, १, ३३; पै ५, ४, ४‡[e]; १६, १, ७; अभिरक्ष ऋ ९,११४, [३; ४]; शौ ४, १९, ८; १२, ३, ११; पै ५, २५, ८; अभिरक्षतात् मा ३५, १७; का ३५, ४, १५; तै १, ३, १४, ५; ३, ३, ८, १; शौ २, १३, १; अभिरक्षत पै १, १४, १; २, १९, १–४; अभ्यरक्षत् पै ९, ११, २; अभ्यरक्षताम् पै ९, ११, १.
अभ्यरक्षीत् मै १, ५, १४.
अभि-रक्षत्– -क्षन् पै ९, १२, ७.
अभि-रक्षमाण[f]– -णः खि ४,१०[२], ५; पै २, ६, ५; –†णाः ऋ १०, १५७, ४; शौ २०, ६३, २; १२४, ५.
अभि-रक्षित- इन्द्र°
अभि√रा
अभि-रावन्– -व्णाम् पै १६, ७०, ६.
†अभि-राष्ट्र[g]– -ष्ट्रः ऋ १०, १७४, ५; शौ १, २९,६; पै १,११,५.
¶अभि√रिच्>रेचि, अभिरेचयेत काठ २३, ५.
अभि√रिष्, अभिरेषात् शौ ४,३५,१.
अभि√रु, अभिरुव शौ ५, २०, ३.
अभि√रुद्
अभि-रोरुद्[h]– -दम् शौ ७,३९,१; पै ३, २८, ५.
¶अभि√रुध्, अभ्यरुन्ध तै ६, १, ६, ३.
अभि-रोद्धृ[i]– -द्धारः मै २, २, १३; ३, ९, ४.
अभि√रुह्, अभिरोहतु पै १६,४५, २; अभिरोह पै ९, २४, ४; ¶अभ्यरोहन् मै १, ६, ३.
अभि···रुरुहुः ऋ ५, ७, ५.
अभि-रू(प>)पा[g]– -पाम् शौ ८, ९, ९; पं १६, १८, ९.

कर्तरि क्विप् प्र. (वैतु. म. अभि√युज्+क्वनिब् इति कृत्वा तथात्वे उप. प्राप्यमाणमाद्युदात्तत्वमुपेक्षमाणः; PW. प्रभृ. च मुपा. उप. आद्युदात्ततया संस्कारुकाः)। वस्तुतस्त्वत एव यनि. ज्ञापितं स्याद् यथा मूलतः १अभि-युग्वन्- इति उपप्रस्व. गस. न वक्तव्यः, किन्तर्हि अभियुज्-+वन्- इति कृत्वा पूपप्रस्व. बस. इति। एवं च तत्र उप. भावे क्विप् प्र. स्यादित्येतावन्मात्रं विशेषः द्र.।

[a]) गस. तृन्नन्ते पूपप्रस्व. (पा ६,१,१९७;२,५०)। विश्वेषां जातानामिन्द्रकर्तृकेऽभियोधने कर्माऽभिसंबन्ध एव स्वारसिक इत्यभिप्रायः (वैतु. सा. वाक्यभेदभ्रान्तः सन् 'भवसि' इत्येतदाक्षेपुकः; GW. अभिः कप्र. इति)।

[b]) अभिम् अगति-तया भाषमाणः GW. उपेक्ष्यः।

[c]) 'अभिरक्षति' इति ऋ (१०, १७०, १) पामे.।

[d]) 'अनुयच्छतु' इति ऋ (४, ५७, ७) पामे.।

[e]) 'अधिवोचता' इति बाह्वृचः (१०,१२८,४) पामे.।

[f]) गस. शानजन्त-कृत्-प्रस्व. (पा ६,१,१८६;२,१३९)।

[g]) बस. पूपप्रस्व. (पावा २, २,२४; पा ६, २, १)।

[h]) गस. उप. यङ्लुगन्ताद् अच् प्र.। थाथादि-स्वरः (पा ६,२,१४४); वैतु. सा. यनि. उप.<√रुध् इति।

[i]) गस. तृजन्त-कृत्-प्रस्व. (पा ६,१,१६३;२,१३९)।

अभि-रोद्धृ- अभि √रुध् द्र.
अभि-रोरुद्- अभि √रुद् द्र.
अभि √लप्
*अभी-लाप-
अभीलाप-लप्[a]- -लपः शौ ११,१०,२५; पै १६, ८७,५.
अभि √लभ् >लिप्स
अभि-लिप्समान- -नाः पै १६, ५०, ३[b].
¶अभि √लिप्
अभि-लिप्य[c] तै ५, ७, १०, २.
अभि √वद्, अभिवदति शौ ९,१०, ८; पै १६, १११, ४; ११५,४; अभिवदति मै २, ३, ९¶; काठ १२, १०¶; शौ ९, ६, ४; अभि···वद खि २, २, ५; ¶अभ्यवदत् तै २,५,८,३[2]; मै १,८,१[2]; काठ १३,३; अभि··· वदेत् काठ ४०,५; पै १,९६,२.
¶अभि-वदत्[d]- -दन्तः तै ७, ५, ७, ४; काठ ३३, ७.
अभि √वन्, अभि···अवन्वन् ऋ १, ५१, २.
¶अभि-वा(न्य>)न्या[e]- -न्यायाः मै १,१०,१७; -न्यायै तै १,८,५,१.
¶अभिवान्य-व(त्स>)त्सा- -त्सायाः काठ ३६, ११.
अभि √वप्, ¶अभिवपते[f] काठ २८, ९; अभि···वपन्त ऋ ७, ५६,३.
अभ्यु(भि-उ)प्य>प्या[c] ऋ २, १५, ९.
¶अभि √वम्, अभ्यवमत् मै ३, १०, ३.
अभ्यवमीत् तै ६, ३, ७, ४.
अभि-वान्त[g]- -न्तः मै ३, १०,३.
अभि-वयस्[h]- -यसः ऋ १०,१६०, १; शौ २०,९६,१; -यसे मै २, १३, १७; ३, १२, १४; -याः काठ ३९, ११.
?अभि वरि सपत्नहा[i] पै १,११,२.
अभि-वर्त-, अभि-वर्तयत्- अभि √वृत् द्र.
अभि-वर्ध- अभि √वृध् द्र.
अभि-वर्षत्- अभि √वृष् द्र.
अभि √वल्ग्, अभिवल्गन्ति शौ १२, ३, २९.
अभि √वश्, अभिवष्टि ऋ २, २५, ३; ४, १, ८; अभिवावशे ऋ २, १४, ९.
अभि √२वस् >वासि, अभिवस्ते पै १०, ६, १०; १६, ३२, ५; अभिवस्ताम् तै ४, ६,४,५‡[j]. ¶अभिवासयति तै २,६,३,४[2]; ¶अभिवासयति मै ४, १, ९[4]; काठ ३१, ७[2]; क ४७, ७[2]; †अभिवासयामसि ऋ ९,१०४, ४; कौ १,५७५; जै १,५८,१०; अभिवासय>या ऋ ९,७५,५; अभि···अवासयत् ऋ १,१६०, २; ¶अभिवासयेत् मै ४,१,९[2]; काठ ३१, ७; क ४७, ७.
अभि √वह् > उह्, ¶अभिवहति तै ५, ४, १०, १; काठ २२, १; ¶अभ्यवहताम् मै १, १०, १६. अभि···वोह्लाम् ऋ ८, [३२, २९; ९३, २४]. अभिववक्षे[k] ऋ १,१४६,२.
अभि-वह(त>)न्ती[l]- -न्ती मै २, १३, १०.
*अभि-वाह-
¶अभिवाह-तस्[m](>:) तै ६, ६, ५, ४.
अभ्यूढ[n]- -ढः शौ १५, १५, ५.
अभि √वा, ¶अभिवाति मै ४, १,५; काठ ३१, ३; ४४, ६‡[o]; क ४७,३; †अभिवातु ऋ ७,३५, ४; १०,१६९,१; तै ७,४,१७, १; मै ४, ९, २७$; शौ १९, १०, ४; पै १३, ८, ४.
¶अभि-वात[p]- -तम् मै २, २, १; काठ ११, ६.

[a]) सस्व. कृते तु.टि. अभि √मुद्>अभीमोद-मुद्-।
[b]) 'उपलिप्समानाः' इति शौ (६,११८,१) पामे.।
[c]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।
[d]) गस.शत्रन्त-कृत्-प्रस्व. (पा ६,१,१८६;२,१३९)।
[e]) गस. ण्यदन्त-कृत्-प्रस्व. (पा६,१,१८५;२,१३९)।
[f]) 'अभिपवते' [मै ४, ७, ४; क ४४,९ (तु. संटि.)] इति पामे.।
[g]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।
[h]) बस. पूपप्रस्व. (पावा २, २, २४; ६, २, १)। उप. √वी>२वयस्- यद्र.।
[i]) संदिग्धस्य सुपा. स्थाने 'अभिवृत्य, सपत्नान्' इति शोधः द्र. (तु. ऋ १०, १७४, २; शौ १,२९,२)।
[j]) 'अनुवस्ताम्' इति ऋ (६,७५,१८) पामे.।
[k]) लिटि. रू. द्र. (वैतु. सा. लेटीति; PW. प्रभृ. च √उक्ष्>एतद् रू. इति)। कथं यनि. √वह्=√*वद् >√*वक्ष् (=√उक्ष् इत्येतत्-सजन्मा संस्ततोऽपरः धा.) इत्यादि-विस्तरः √वह् इत्यत्र यद्र.।
[l]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, १, १८६; २, १३९)। ततश्च स्त्री. ङीपः पित्त्वान्निघाते स्वरेऽभेदः।
[m]) तसिः प्र. तत्-स्वरश्च। पूप. कृते तु. टि. अति √दह्>अति-दाह- इति।
[n]) कर्मणि क्तेऽनन्तरगति-स्वरः स्वरितत्वञ्च (पा ६,२, ४९; ८, २, ४)।
[o]) 'अभिवातु' इति ऋ (१०, १६९, १) पामे.।
[p]) अस. सासस्व. (पा ६, १,२२३)। वा. क्रिवि. द्र.। उप. यद्र.।

**अभि-वान्त-** अभि √वम् द्र.

**अभि-वान्य॑ा-** अभि √वन् द्र.

**?अभि-वासिन्-** बस्त°

**अभि-वाह॒-** अभि √वह् द्र.

**अभि-वि √क्शा,** अभिव्य॑क्शम् मै १, १,५[a]; २,१३; **३**,९,१; **४**,१,५.

**अभि-वि √ख्या,** अभिवि॒ख्येषम् मा १, ११; का १, ३, ७; अभिव्य॑-ख्यम् काठ **१**, ४; **३**, १; **२६**, २; **३१**, ३; क १, ४; **२**, ८; **४०**, ५; **४७**, ३.

**अभि-वि √चक्ष्,** अभि॒··· वि॒चष्टे ऋ **३**, ५५, ९; अभि॒··· विच॒ष्टे शौ **२**, १०, ४; पै **२**, ३, ३.

**†अभि √विज्,** अभि॒विक्त ऋ १, १६२, १५; मा **२५**, ३७; का **२७**,१३,६; तै **४**, ६, ९,२; मै **३**, १६, १; काठ **४६**, ५.

अभि-वेग॒[b]- -गः ऋ **१०**, २७, १.

**अभि √२विद्,** अभि··· अविदन् पै २, १०, ३.

**†अभि-वि √दिव्,** वि॒··· अभि॒द्यौत्[c] ऋ **४**, ४, ६; तै १, २, १४, ३; मै **४**, ११, ५; काठ **६**, ११.

**अभि-वि √पश्,** ¶अभिवि॒पश्यति मै **३**, ९, १; **४**, १, ५; काठ **२६**, २; **३१**, ३; क **४०**, ५; **४७**, ३; पै ९, १०, १२[e]; अभिविपश्य काठ **३९**, ३[d]; अभि॒··· वि॒पश्य ऋ **३**, २३, २.

अभिवि-पश्य(त्>)ती- -ती(:)[e] पै ९, १६, ४.

**अभि-वि √भा,** अभि॒··· वि॒भाति[f] ऋ **७**, ५, २; अभि॒··· विभ॒ाति शौ **१३**, २, ४२[g].

**अभि-वि √या,** अभि॒··· वि॒याति ऋ १, ४८, ७[h].

**?अभिविषोक[i]- -क?[j]** पै ४, २४,१.

**अभि-वि √ष्ठा<स्था>तिष्ठ,** अभि॒··· वि॒तिष्ठसे[k] ऋ ५,८,७; ¶अभिव्य-तिष्ठन्त काठ ३०,१; क ४६,८. अभि॒··· वितस्थे ऋ ६, २१, ७.

अभिवि-ष्ठित- -तः पै ६, २२, ११.

**¶अभि-वि √सृज्,** अभिव्यसृजन्त काठ २६, २; क ४१, ५.

अभिविसृजति काठ २८, २; क ४४, २.

अभिवि-सृज्यमान- -नः काठ २६, २; क ४१, ५.

अभिवि-सृज्य काठ २९, २; क ३८, ५.

**अभि √वी**

अभि॒-वी(त>)ता[l]- -ता ऋ ३, २७, ४.

**†अभि॒-वीर[m]-** -रः ऋ १०,१०३,५; मा १७,३७; का १८,४,५, तै **४**, ६,४,२; मै **२**,१०,४; काठ १८, ५; क **२८**, ५; कौ **२**, १२०३; शौ १९, १३, ५; पै **७**, ४, ५.

**अभि-वीवृषत्-** अभि √वृष् द्र.

---

[a]) 'अभिव्य॑क्श्यम्' '?अभिव्य॑क्ष्यम्' 'अभिव्य॑क्षम्' इति मूको., 'अभिव्य॑ख्यम्' इति पपा. (तु. संटि.)। एतत् सर्वं √क्शा<>√क्षा<>√ख्या इत्येतेषां प्रादेशिकविकारतया द्र.।

[b]) गस. उप. घञि थाथादि-स्वरः (पा ६, २, १४४)।

[c]) 'अर्यः अस्मै दुरः (गृहेष्वेव=अत्यन्तसंयोगे द्वि.) विश्वानि सुदिनानि रायः द्युम्नान्य् अभिवियौत्' इत्येवं वा. द्र. (तु. PW. प्रभृ.)। यत्तु वें., सा. च अभिः कप्र. इति कृत्वा 'दुरः' इत्यनेन योजयन्तौ सन्तौ वा. त्रीण्यपि कर्मपदानि कुर्यातामू, तदसंगतम्। काऽत्राऽसंगति-रिति। क्रिप. अकर्मकेन सता संबन्धाऽभाव-लक्षणेति। एवं तावत् सा. प्रदर्शितं वाक्यविभागा-ऽऽत्मकं कल्पाऽन्तरमास्थाय 'सुदिनादीनि भवन्ति' इति सामान्या क्रियाऽऽक्षेप्येति। नेति। कथमिति। उच्यते। तथा सति 'सुदिनादीनि' कर्तृपदानि स्युर्न कर्मपदानीति। कामं तथा स्युः, का ते हानिरिति। स्वरदोष आपद्येतेति। कथमिति। उच्यते। 'राय॒ः' इत्यत्राऽसर्वनामविभक्ति-स्वरः (पा ६, १, १७१) न सिध्येत्, जसः सर्वनाम-स्थानसंज्ञकत्वादिति। तस्मात् यनि. क्रियाऽभ्युपसृष्टत्वे सति सकर्मिकया सत्यैव कर्मपदानां यथावद् योगः सुवचः। यदप्यत्र √दिव् इत्यस्य स्थाने √द्युत् इत्यस्य श्रवणं सा.PW. प्रभृ. अङ्गीचक्रुः, तदप्यरुचिरमिति दिक्।

[d]) 'अनुवी॒क्षस्व' इति मा (**१३**, ३०) पामे.।

[e]) मूको. असंगमयिता सन्नितरां भ्रष्ट उत्तरार्धीयः मुपा.। 'दुर्या उणोऽस्मा ओषधीर् याः काश्चाऽभिवि-पश्यतीः' इत्येवं यथापदं सु-शोधः द्र.। यनि. रू. प्र३ इति दिक्।

[f]) तु. PW. प्रभृ.; वैतु. सा. अभिः कप्र. 'वि॒शः' इत्येतदन्वित इति।

[g]) तु. शौ **१३**, २, १०; २८ यदनु यनि. सकर्मकं वृत्तमास्थेयम् (वैतु. WI. अभिर् इति सप्तम्यनुवादी कप्र. 'लो॒का॒न्' इत्येतदन्वित इति)।

[h]) नापू. समानो न्यायः द्र.।

[i]) तालव्यस्य शकारस्य स्थाने मूर्धन्यः प्रमादजः द्र.।

[j]) 'श्च' इत्येतद् अन्ताच् च्युतम् इति सुदर्शम्।

[k]) कप्र. इहाऽभिरिति GW.। लक्षणविषयभूतस्य प्राधान्येन विवक्षाभावाऽभावाऽन्यतरविवेकाऽधीनस्त-न्निर्णयः त्रिपू. टि. उक्तपूर्वः द्र.।

[l]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।

[m]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

अभि √२वृ, अभिववा॑र[a] पै १, २३, ४.

†अ(भि>)भी-वृत, ता[b]– -तः ऋ ८,३९,५; १००,९; १०,१७६, ३; तै ३, ५, ११, १; मै ४, १०, ४; काठ १९, १२; –तम् ऋ १, ३५, ४; ३, ४४, ५; मै ४, १४, ६; –ता ऋ १, १६४, २९; १०, ७३, २; शौ ९,१५, ७; १०, १०, १६§; पै १६, ६८, ७; १०८, ७§; –ते ऋ ६, ७०, ४.

अभि √वृज्, अभिवृञ्जन्ति पै १३, १४, १५.

अ(भि>)भी-वर्ग[c]– -र्गात् शौ ११, २, ४; पै १६, १०४, ४; –र्गे शौ ३, ५, २; ६, ५४, २; पै ३, १३, २.

अभि √वृत् >वर्ति, अभि…वर्तते ऋ १, १८३, २[d]; अभिवर्तस्व खि ४, ५, ४; †अभ्युवर्तन्त ऋ ५, ३१, ५; तै १, ६,१२, ६; मै ४, १२, २; काठ ८, १६. अभिवावृते ऋ १०, १७४, १; पै १, ११, १[e].

†अभि…वर्तय ऋ १०,१७४, १; पै १,११,१[f]; अभि…वर्तयत ऋ २, ३४, ९; अभ्युवर्तयन् मै ४, १४, ११; शौ १२, १, ५. †अभि[३]…अवीवृतत् ऋ १०, १७४, ३; पै १, ११, ३[g].

१अभि,>भी-वर्त[h]– -र्तः मा १४, २३; का १५, ७, १; तै ४, ३, ८, १; ¶५, ३,३,३[२]; ¶७, ५, १, ६; ७, ४[२]; मै २, ८,४; काठ १७, ४; २०, १३; ३३, ७[३]¶; क २६, ३.

¶अभि-वर्तयत्[i]– -यन्तः तै ७, ५, ७, ४; काठ ३३, ७.

¶अभि-वृत्त[b]– -त्ते मै ३, ८, ७.

¶अभि-वृत्ति[j]– -त्त्यै तै ७,५,१,६.

†अभि-वृत्य[k] ऋ १०,१७४,२; शौ १, २९, २.

२†अ(भि>)भी-वर्त[l]– -र्तः ऋ १०, १७४,३; शौ १, २९,३;४§; पै १,११,३; –र्तेन ऋ १०,१७४, १; शौ १, २९,१; पै १,११,१.

अभि √वृध् >वर्धि, अभि…वर्धसे ऋ ३, ४४, २; अभिवर्धताम् शौ ६, ७८, १; २; अभि… वर्धताम् शौ ६, ७८, २; अभि-वर्धस्व पै ४, २७, ४; ६; अभि…वर्धस्व ऋ ५, ४४, ५; अभि(वर्धस्व) पै ४, २७, ४; अभ्यु(भि-अ)वर्धत ऋ २, १७, ४; अभ्य॑(भि-अ)वर्धत ऋ ९, ४७, १; अभि(अवर्धत) ऋ २, १७, ४; अभि[m]…अवर्धताम् ऋ १०,१३२,१;‡अभ्य॑वर्धथाः[n] कौ १, ५०७; जै १, ५२, ११. अभिवावृधे शौ १, २९, १‡[o]; †अभि…वावृधे ऋ १०, २९, ७[p]; शौ २०, ७६, ७.

अभि…वर्धय शौ १,२९,१‡[q]. अभि[३]…अवीवृधत् शौ १, २९, ३‡[r].

अभि,>भी-वर्ध– -र्धः पै ४, २७,४; –र्धम् पै ४, २७,५; १३, ३, १३.

अभि √वृष्, अभिवर्षति तै ३, १, १, २¶; अभिवर्षति शौ ५, १९, १५; पै ९, १६, २; ¶अभि…वर्षति काठ ३०, ४; क ४६, ७; अभिवर्षतु खि २, १३, ६; मा ३६, १०; का ३६, १, १०; पै ११, ७, ३; ¶अभि-वर्षत् मै ४, २, १०.

अभ्यु(भि-अ)वर्षीत् ऋ ७, १०३, ३; शौ ११, ६, ५; १७; पै १६, २२, ७.

अभि-वर्षत्[l]– -र्षते तै ७, ५, ११, १; काठ ४५, २.

अभि-वीवृषत्– -वृषत् पै ८, १८, २.

अभि-वृष्ट,ष्टा[b]– -ष्टः ऋ ७, १०३, ४; –ष्टाः शौ ११, ६, ६; पै १६, २१, ६.

---

[a]) तु. टि. यस्था. '?अभीवार' इति ।

[b]) कर्मणि क्तेऽनन्तरगति-स्वरः । पूप. दीर्घत्वम् उसं. (पा ६, २, ४९; ३, १२२) ।

[c]) गस. उप. घञि थाथादि-स्वरः । पूप. दीर्घत्वम् (पा ६, २, १४४; ३, १२२) ।

[d]) अभिः कप्र. इति मन्यमानाः PW. प्रभृ. विमृश्याः ।

[e]) 'अभिवावृधे' इति शौ (१, २९,१) पाभे. ।

[f]) 'अभि…वर्धय' इति शौ ( १, २९,१) पाभे. ।

[g]) 'अभि…अवीवृधत्' इति शौ (१,२९,३) पाभे. ।

[h]) गस. उप. घञ् प्र. । थाथादि-स्वरः । तै. विरह्य्य पूप. दीर्घत्वम् (पा ६, २, १४४; ३, १२२) ।

[i]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६,१,१८६;२,१३९) ।

[j]) गस. उप. भावे क्तिनि पूपप्रस्व. (पा ६, २, ५०) ।

[k]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[l]) गस. उप. अचि पूप. दीर्घत्वम् उसं. थाथादि-स्वरश्च (यक्र. पा ३,१,१३४; ६,३,१२२; २,१४४) ।

[m]) अगतितयाऽभिमातिष्ठमानौ PW. WI. च चिन्त्यौ।

[n]) 'अभ्य॑वर्धत' इति ऋ (९, ४७, १) पाभे. ।

[o]) 'अभिवावृते' इति ऋ (१०, १७४, १) पाभे. ।

[p]) अभिं गतिमवदन्तौ PW. GW. च चिन्त्यौ ।

[q]) 'अभि…वर्तय' इति ऋ (१०,१७४,१) पाभे. ।

[r]) अभि…अवीवृतत्' इति ऋ (१०,१७४,३) पाभे. ।

अभि-वेग- अभि √विज् द्र.
अभि √वेन्
ϕअभि-वेनत्[a]- -नन्तः ऋ १०, १२३, ६.
अभि √व्यध् > विध्, ¶अभिविध्येत् तै २, ६, ८, ४.
अभि-विद्ध- अन्°
अभि-व्याधिन्[b]- -धिनः शौ १, १९, १; पै १, २०, १.
¶अभि-व्य(वि √अ)न्, अभिव्यनिति काठ २९,६; ३७,१४; क ४५, ७; अभिव्यन्यात् काठ ३७, १४.
अभिव्यानीत् काठ ३७, १४.
¶अभि-व्या(वि-आ) √१दा, अभिव्याददात् काठ ३७, १४.
¶अभि-व्या(वि-आ) √हृ, अभिव्याहरति तै ६, ४, ३, २.
¶अभि-व्यु(वि √वश् > उ)च्छ्, अभिव्यौच्छत् काठ १०, ६; ७.
अभि √व्ये, अभिव्ययस्व ऋ ३,५३, १९.
अभि √व्रज्
अभि-व्रजत्[c]- -जद्भिः ऋ १,१४४, ५; -जन् ऋ १, ५८, ५; ९, ६८, ३.
अभि √व्लङ्ग्
अभि-व्लग्य > ग्या[d] ऋ १, १३३, १; २.
अभि-व्लङ्ग[e]- -ङ्गैः ऋ १, १३३,४.
अभि √शंस्, ¶अभिशंसति मै २, ५, २; ¶अभिशंसन्ति तै २, १, १०, २[२]; मै २, १, ३[२]; ५, २[२]; ५[२]; ३, ८, ४; ¶अभिशंसन्ति मै २, ५, २[२]; काठ १०, ६; १२, ५; १३, ६; ¶अभ्यशंसन् मै २, १, ३; ¶अभिशंसेयुः तै २, १, १०, २; मै २, १, ३; काठ १०, ६; १२, ५[२]; १३, ६.
अभि-शस्[f]- -शसा ऋ १०, १६४, ३.
¶१अभि-शस्त[g]- -स्तः तै २,५,१, ६¶; पै ९,१७,९[h].[°स्त-अन्°]
२अभि-शस्त[i]-
अभिशस्तेन्य- अन्°
अभि-शस्ति[j]- -स्तये ऋ ५, ३, १२[k]; ७, ९४,३; ८, १९, २६; कौ २, २६८; जै ३, २२, १५; -स्तिम् ऋ ३, ३०, १; ५, ३, ७; मा ३४, १८†; का ३३, १, १२†; शौ ३, १,१; २,१; पै ३, ५, १; ६,१; -स्तीः ऋ ८,८९, २; मा ३३, ९५†; काठ १९, १२[२]¶; क ३१, २[२]¶; -स्तेः ऋ १, ७१, १०; ९१,१५; ९३, ५; ६, ४२, ४; ७, १३, २; ८, ६६, १४; १०, ३०, ७; ३९, ६; १०४, ९; मा २७, ९; का २९, १, ९; तै १, ५, ११,२†; २, ३, १४, २†; ४, १, ७, ४; मै २, १२, ५; ३, ४, ६; १६, ५†; ४, १०, १†; काठ ४,१६†; १८, १६; क २९, ४; कौ २, ७९३†; शौ ७, ५५, १; -स्त्या शौ ६,१२०,२; १२,१०,१२; पै १५, ५, ५[l]; -स्त्याः तै १, १; ११, २; ३, १, ७, १; मै १, १, १२; ५, २; ८[३]; काठ १,११; ६, ९; ७, ६; ३७, १५; १६; क १, ११; ४, ८; ५, ५; पै ६, १२, ८; १६, ५०, १०; -स्त्यै मा २, ५; का २, १, ६. [°स्ति-अन्°]
¶अभिशस्ति-कृत्[m]- -ते मै १, ४, १४.
अभिशस्ति-चातन[n]- -नः ऋ ३, ३, ६.
१अभिशस्ति-पा[o]- -पाः ऋ ९, २३, ५; ९६, १०; मै १, २,९; शौ २, १३, ३; ४, ३९, ९; ५, १८, ६; ८, ७, १४; १९, २४, ५; ६; पै ९, १७, ८; १५, ६, २; ३; १६, १३, ४; -पाम् ऋ ६, ५२, ३.
२अभिशस्ति-पा[p]- -पाः मा ५, ५; का ५,२,२; तै १,२,१०,२;

[a]) वैतु. वें. सा. अभ्य(भि-अ)चक्षत । शेषम् एउटि. द्र.।
[b]) गस. णिन्यन्त-कृत्-प्रस्व. (पा ६, २,१३९)।
[c]) गस.शत्रन्त-कृत्-प्रस्व. (पा ६,१,१८६; २,१३९)।
[d]) गस.ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।
[e]) गस. उप. घञि थाथादि-स्वरः (पा ६, २,१४४)।
[f]) गस.उप. भावे क्विप् । कृत्-प्रस्व. (पा ६,२,१३९)।
[g]) कर्मणि क्ते प्रवृद्धादित्वादन्तोदात्तः(पा ६,२,१४७)।
[h]) 'अभिशस्ता' इति शौ (५, १८, १४) पाभे. ।
[i]) उप. भावे. क्तः । स्वरस्य कृते एपूटि. द्र. ।
[j]) गस. उप. भावे क्तिनि पूपप्रस्व. (पा ६,२,५०)।
[k]) कर्त्रर्थतया व्याचक्षाणः सा. चिन्त्यः । तथात्वेऽन्तोदात्तत्वप्रसङ्गादिति ।
[l]) दुरूहः खलु पा. भूयोविमर्शसापेक्षः ।
[m]) उस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)।
[n]) तु. टि. 'अमीव-चातन-' ।
[o]) उस.विजन्त-कृत्-प्रस्व. (पा ६,२,१३९)।
[p]) पंतस. सासस्व. (पा ६, १, २२३)। उप. भावे विच् प्र. इत्येतावानेव नापू. सरूपादस्य विशेषः द्र. । एवं तावद् 'भवान् शरणम्' इत्यादि-साम्येनाऽस्यौपचारिकी वृत्तिश्च द्र. नियतलिङ्गता च (वैतु. भा. प्रमृ. यनि. एतदीयेषु स्थ. अप्यु १अभिशस्ति-पा- इत्येतदेव वर्त्तयितुकामा लिङ्गव्यत्ययं शरणायमाणाः) ।

६, २, २, ४[२]¶; मै १, २, ७; काठ २, ८; क २, २.

अभिशस्ति-पावन्[a]– -वा ऋ १, ७६, ३; ७, ११, ३; मा ५, ४; का ५, १, ४; मै ४, १४, ६.

अभिशस्ति-हन्[b]– -हा मा ३३, ९५; तै १, ६, ५, २; ४, २, १, १.

अभि-शस्तृ[c]– -शस्ता शौ ५, १८, १४.

¶अभि-शस्यमान[d]– -नः तै २, २, ५,१;३,७,४; –नम् मै २,१,३; ३, ७; ५, २; ५; ३, ८, ४.

अभि √शास्, अभिशासति ऋ ६, ५४, २.

?‡अभिशिषः[e] मै ४, ९, १२.

?अभिशिष्यतम्[f] पै ६, ६, ४.

अभि √१शुच् >शोचि, अभिशोचति तै ४, ७, १५, ५; मै ३, १६,५; शौ ४, २६, ७; पै ४, ३६, ७; अभिशोचतु पै ९, २५, ६; ८; †अभि···शोचतु ऋ ६,५२,२; पै २, ५, ६; अभिशोच तै १, ३, ११, १.

अभिशुचः काठ १६, ४; १९, ५; क ३०, ३; अभिशोचः ऋ १०, १६, १; काठ १६, ८; अभिशोचीः मा ११, ४५; १२, १५; का १२, ४, ८; १३, १, १६; मै २, ७, ८; १७.

¶अभि···शोचयति काठ १९, ५; १२; क ३०, ३; ३१, २; अभिशोचय पै १३, १, १६; अभिशुशुचन् मा ३५, ८; का ३५, ४, ७; अभिशुशुचः तै ४, १, ४, ३; ९, ३; २, १, ५; ५, १, ५, ६; शौ १८, २, ४‡[g].

अभि-शोक[h]– -कः शौ १, २५, ३.

अभि-शोचु[i]– -चान् शौ ४, ३७, १०; पै १३, ४, १४.

अभि-शोचन[j]– -नम् शौ ४, ९, ५; पै ५, ३४, १–४; ८, ३, ५; –नात् शौ २, ४, २.

¶अभि-शोचयत्– -यन् काठ १०, ३.

अभि-शोचयन्ती– -न्तीः पै १३, ४, १५.

अभि-शोचयिष्णु[k]– -ष्णुः शौ ६, २०, ३; पै १३, १, २.

अभि √शुष्, ?अभिशुष्यत[l] खि ४, ७[२], ९[m].

अभि √श्नथ्

अभि-श्नथ्[n]– -श्नथः[o] ऋ १०, १३८, ५.

अभि √श्रा(<श्रै), ?अभिश्राप्येताम्[f] पै १६, ७१, १.

अभि-श्राव- अभि √श्रु द्र.

अभि √श्रि, अभि···अश्रैत् शौ १३, २, ९.

१†अभि-श्री[p]– -श्रियः ऋ १०,६६, ८; –श्रियम् ऋ ८,४४,७; ७२, १३; मा ३३, २१; का ३२, २, ४; कौ २, ८३०; –श्रिया ऋ १, १४४, ६; ६, ७०, १; मा ३४, ४५; का ३३, २, ८; मै ४,११, १; काठ १३, १५; कौ १, ३७८; जै १, ३९, ९; –श्रियौ शौ ८, २, १४§; –श्रीः ऋ १, ९८, १; ७, ९१, ३; १०, १३०, ५; मा २६, ७;२७,२३; का २८, ७, १; २९, ३, १; तै १, ५, ११, ३; मै ४, ११, १; १४, २; काठ ४, १६.

---

a) उप. कर्तरि वनिप् प्र. । सस्व. कृते नाउटि. द्र. ।

b) उस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९) ।

c) गस. उप. तृनि प्र. अनन्तर-गति-स्वरः (पा ६,२, ५०) । अत्र कथम् इन्द्रोऽभिशस्तिपा अपि सन् स्वयम् अभिशस्तिकारकः स्याद् इत्यापातिकं विरोधं परिजिहीर्षवः केचिदभियुक्ताः 'अभि-शस्तिम्' इति PW. च, 'अभि-शस्तम्' इति Z. च, 'अभि-शस्त्याः' इति यद्वा 'अभिशस्तिपाः' इति W. च पाठं यथाक्रमं परिवर्त्तयितुमनसो भवन्ति, तद् अकल्पमिव भवति । परकृताऽभिशस्तिहरत्वेऽपि परकर्म-काऽऽत्मकर्तृकाऽभिशस्तिकरत्वेऽस्य विरोधाऽभावात् ।

d) गस. कर्मणि शानच् प्र.। कृत्-प्रस्व. (पा ६,२,१३९)।

e) एवं खलु नितान्तविकृतमूलः सुपा. भवति [तु. संटि., ऋ ८, १, १२ अनु अभि √श्रिष् >अभि-श्रिष्- >-श्रिषः इति शोधः (तु. यस्था. ऋ. टि.)] ।

f) संदिग्धः संस्करणाऽन्तरसापेक्षः पा. ।

g) 'अभिशोचः' इति ऋ (१०, १६, १) पाभे. ।

h) गस. उप. घञन्ते थाथादि-स्वरः (पा ६,२,१४४) ।

i) गस. उप. कर्तर्य् अच् प्र. । नापूटिदि. स्वरः द्र. ।

j) गस. ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

k) गस. उप. इष्णुच् प्र. । कृत्-प्रस्व. (पा ६, १, १६३; २, १३९) ।

l) पा. विकृत इव स्यात् [तु. 'अभिलिष्यदे' इति शौ (५, ५, ९) पाभे.] ।

m) पै ६, ४, ९ इत्यत्राऽपि मूको. अयं पा. द्र. ।

n) गस. क्विबन्त-कृत्-प्रस्व. [पा ६, २, १३९ (तु. सा. GW.; वैतु. PW. MW. च उप. भावे कसुन् इति)] ।

o) पं१ (वैतु. वें. प्र३ इति) ।

p) गस. क्विबन्त-कृत्-प्रस्व. (पावा ३, २, १७८; पा ६, २, १३९) ।

**अभि √श्रिष्**

†अभि-श्रिष्[a]– -श्रिषः ऋ ८, १, १२; कौ १, २४४; जै १, २६, २; शौ १४, २, ४७.

**अभि √श्री,** †अभिश्रीगन्ति ऋ ९, ९३, ३; कौ २,७७०; अभि··· श्रीणन्ति ऋ ९,८४,५; †अभि··· श्रीणन्ति ऋ ९, १, ९; जै ४, ४, ९; †अभि[b]···श्रीणीतन ऋ ९, ११, ६; कौ २, ७९६.

अभ्यशिश्रयुः[c] ऋ ९, ८६, १७; †अभि···अशिश्रयुः ऋ ९, ११, २; कौ २, २;५०३; जै ३, १, ४; ३९, २.

२अभि-श्री[d]– -श्रियः ऋ ९, ७९, ५; ८६, २७.

अभि-श्रीणत्[e]– -णन् ऋ ९, ९७, ४३[2f].

**अभि √श्रु>श्रृ,** अभि··· श्रृण्वन्तु पै ५, ११, ४.

†अभि-श्राव[g]– -वाय ऋ १, १८५, १०; –वे ऋ १०, १२, १; शौ १८, १, २९.

अभि-श्रु(त>)ता[h]– -ता शौ ६, १३८, १; पै १, ६८, २.

**अभि √श्वस्**

अभि-श्वसत्[e]– -सन् ऋ १, १४०, ५.

अभि-श्वसस्(>:)[i] ऋ १०, ९२,८.

**अभि √ष(<स)च्,** अभि···सचते ऋ ९, ७४, ७; अभिसचन्ते ऋ १, ७१,७; †अभि···सचन्ते ऋ ३, ४०, ७; ४, ४४, २; ७, ७२, १; ९०, ५; शौ २०, ६, ७; १४३, २; अभि···सचताम् शौ ९, ४, २२; अभि···सचन्ताम् ऋ १, २२, ११; अभि··· सचस्व ऋ ३, ५३, १७; ५, ३१, २; अभि···सच काठ ४०, ३; अभिसचध्वम् पै १६, २६, ३; अभि···सचध्वम् शौ ६, ४१, ३; ९, ४, २४; १८, ४, ६२; अभि···असचन्त ऋ ३, ३१, ४.

अभि···सिषक्ति ऋ ७, ६७, ३.

†अभि-षाच्[j]– -षाचः ऋ ६, ६३, ९; ७, ३५, ११; १०, ६५, १४; खि ५, ५, ७; मै ४, १४, ११; शौ १८, ४, ४४$[k]; १९, ११, २; पै १३, ८, १२; –षाचम् ऋ ३, ५१, २.

**अभि √ष(<स)द्>षीद,** ¶अभिषीदति काठ ३२, ५; †अभि···सीदति ऋ ९, ७,५; कौ २, ४८२; जै ३, ३६, ७; ¶अभिषीदेत् क ३८, ३.

¶अभि-षण्ण[l]– -ण्णः तै २, ४, २, ३; काठ १०, १०; –ण्णाः काठ १०, १०.

**अभि √ष(<स)न्**

अभि-षात[l]– -ताः ऋ ५, ४१,१४.

अभि-षवणी- अभि √१षु द्र.

**अभि √ष(<स)ह्, षाह्,** †अभि[m]···ससाहे[n] ऋ ८, ९६, १५; शौ २०, १३७, ९; †अभि··· सासहत् ऋ ५, २३, १; तै १, ३, १४, ७.

अभि···सासहीष्ठाः ऋ ६, ४५, १८; †अभ्यसाक्षि ऋ १०, १५९, १; पै २, ४१, १.

अभि-षाह्[o]– -षाट् मै ४, १२, ३; –षाहे मै ३, १२, ११.

[a]) गस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)। यत्तु भा. (तैआ ४, २०, १) लुङि मपु१ इदं रू. इति व्याख्यत्, तन्मन्दम्। तथा सत्य् अङः स्वरस्य प्राप्तौ धा. तदनुपपत्तेरिति दिक्।

[b]) कप्र. इति मन्वानः GW. पर्यनुयोक्तव्यः।

[c]) PW. अभि √श्रि इत्यस्य रू. आह तद् विमृश्यम्।

[d]) गस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

[e]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

[f]) एकतरत्रोपसर्गश्रुतेः शत्रन्तस्याऽध्याहारः। अभ्यर्थस्य भूयोऽपि श्रपणविशेषणत्वेन योगे श्रुतिस्वरस इत्यभिप्रायः (वैतु. वें. सा. '···अभिगच्छसि' इत्याक्षेपपरः)।

[g]) गस. उप. घञ् प्र. उसं., थाथादि-स्वरश्च (पा ३, ३, २५; ६, २, १४४)।

[h]) कर्मणि क्तेऽनन्तरगति-स्वरे प्राप्ते प्रवृद्धादित्वादन्तोदात्तः (पा ६, २, ४९; १४७)।

[i]) गस. कसुन्नन्त-कृत्-प्रस्व. (पा ६, १, १९७; २, १३९)। GW. अदन्तं प्राति. इति संकेतयमानश् चिन्त्यः।

[j]) गस. उप. ण्विः प्र. उसं.। कृत्-प्रस्व. (पा ३, २, ६३; ६, २, १३९)।

[k]) 'अभिशाचः' इति मुपा. प्रमादजः द्र.।

[l]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।

[m]) तु. सा.; वैतु. GW. अभिः कप्र. 'विशः' इत्येतदन्वित इति; PW. MW. च 'अभ्याचरन्ती- > -न्तीः' इति (न्याय्येतरद्वैस्वर्य-दूषितं योगं प्रयोजुकौ चिन्त्यौ)।

[n]) पपा. 'ससहे' इति धा. उपधायां वृद्ध्यभावः प्रादर्शि [तु. √सह् इत्यस्य समानकार्याणि रूपान्तराण्यपि यत्र सर्वत्र पपा. समानी विधा भवति। वस्तुतस्तु √सह् इत्येतत्-सजातः √साह् अपि मूलतः द्र. (तु. टि. यस्था.)।

[o]) गस. उप. ण्विः प्र.। कृत्-प्रस्व. (पा ३,२,६३;६, २,१३९)। यच्च 'सहेः' (पा ८, ३,५६) इत्यत्रोक्तं भवति तदल्पमेव [तु. पृतनाषाहम् ऋ (६,७२,५) एउ.रूपं च]।

ϕअभि-षाह्वस्[a]– -ह्वान्[b] ऋ ९, २०,१;कौ २,३१८;जै ३,२६,४.

ϕअभि-षेहान्[c]– -नः ऋ ८,३७,२.

¶अ(भि>)भी-षह्[d]– -षहा तै २, ३,२,६; ६,१,१०,३; ४; ५, ११,३.

अ(भि>)भी-षाह्[e]– -षाट् ऋ ७,४,८; काठ ३९, ११; शौ १२,१, ५४; १३, १, २८; –षाहे मै २, १३, १७; ३, १२, १४.

अभी-षाँह्य[f]– -ह्यः काठ ३९,११;

अभि-षाच्- अभि √षच् द्र.

अभि-षात- अभि √षन् द्र.

?अभि √षि(<सि),अभि····षिनन्ति[g] पै २,५७,३.

अभि √षि(<सि)च्,ञ्च्, ¶अभिषिञ्चते मै २, ४, १; ४, ३, १[५]; ४; ४, ९[३]; ¶अभिषिञ्चति मै ३, १०, १; ४, ३, १०; ४, ३; ¶अभिषिञ्चति तै ५, ६, ३, २[४]; ३[२]; मै ४, ४, २[४]; ५; काठ २५, ७; ३७, १; क ३९, ५; ¶अभिषिञ्चन्ति मै ४, ३, ९; ४, २; ¶अभिषिञ्चन्ति तै ५, ६, २, २; मै ४,३, ९; १०[४]; अभिषिञ्चामि शौ ६, १२२, ५; १०, ९, २७; ११, १, २७; अभिषिञ्चामि मा ९, ३०; १०, १७; १८, ३७; २०, ३[३]; का १०, ५, ८[२]; ११, ६, १; २०, १, ७; २१, ७, २[३]; तै १, ७, १०, ३[२]; ८, १४, १; ५, ६, ३, ३[३]; मै १, ११, ४[२]; २, ६, ११; ३,४, ३[२]; ११, ८[३]; ४, ४, ५; काठ १४, २[२]; ८; १५, ७; ३६, १५[५]; ३७, ९; ३८, ४[३]; ४०, ९[२]; शौ ३, २२, ६; ४, ८, ५; ६, १३६, ३; पै १, ६७, ३; ४, २, ६; १०, ७; ८, १०, १-५; १६, ९१, ७; १३८, ८; अभिषिञ्चतु खि ७, ७, ५; काठ ४०, ९; अभिषिञ्चताम् पै २, ७९, २; ६, ७,२; अभिषिञ्चन्तु मै ३, ११, ८[२]; ‡[h]अभिषिञ्च शौ ४, १५, १६; पै ५, ७,१४; अभि···सिञ्च शौ १९, ३१, १२; पै १०, ५, १२; अभिषिञ्चत शौ ६, ५७, २; अभ्यषिञ्चन् मा १०, १; का ११, २, १; तै १, ८, ११, १; मै २, ६, ८; काठ १५, ६; ३७, ४; पै १४, १, ६; १४; अभि···असिञ्चन् शौ ४, ८, ६; अभिषिञ्चेत् शौ ८, १५, १; अभिषिञ्चेत् मै ३,४,३[३]¶; शौ १६, १, ९; पै १६, १३५, ९; ¶अभिषिञ्चेयुः मै ४, ४, २. अभि···असिचम् काठ ३६, १५; ३७, ९. ¶अभिषिच्यते मै ४,३,२; काठ १२, ७; १०; १४, १०; ३७, १; २[३]; ३[५]; ४[५]; ५[५]; ६[४]; ७[४]; ८[४]; अभ्यषिच्यन्त शौ १४, १, ३६; पै ४, १०, ७; १४, १,१; अभ्यषिक्षि मै ४, ४, ९.

अभि-षिक्त[i]– -क्तः ¶तै ५, ४, ९, २; ¶मै ४, ३, ७[२]; १०; ¶काठ ३७, ५; शौ १९, ३१, १२; पै १०, ५, १२; –क्ते पै ५, २९, ३. [°क्त- उद°, धारा°, राजसूय°]

अभि-षिच्यमान[j]– -नस्य मै ४, ३, ९; ४, ४; ५.

ϕअभि-षिञ्चत्[k]– -ञ्चन् ऋ १, १२१, ६.

¶अभि-षिषिचान[c]– -नम् मै २, ४, १; ४, ३, ५.

¶अभि-षेक[l]– -कः तै ५, ४, ९, १; मै ३, ४, ३; काठ २१, १२; १४.

---

a) गस. उप. शतृ>वसुः प्र. उसं. । कृत्-प्रस्व. (पा ७, १, ३६; ६, २, १३९) ।

b) तु. PW. प्रभृ.; वैतु. वें. सा. यनि. स्वारसिकं योगमनीक्षमाणा इवाऽऽक्षेपमुखेन 'अभि(भवति)'इति भाषुकौ ।

c) गस.कानजन्त-कृत्-प्रस्व.(पा ६,१,१६३;२,१३९)।

d) गस. उप. क्विप् प्र. । पूप. दीर्घत्वम् । कृत्-प्रस्व. (पा ६, ३,११६; २, १३९) ।

e) गस. उप. पाप्र. ण्विः प्र. [पा ३, २, ६३ (वस्तुतस्तु √*साह् इत्यस्याऽभ्युपगमे (यस्था. टि. द्र.) प्र. णित्त्वं नैवाऽपेक्ष्येतेति दिक्)] कृत्-प्रस्व. पूप. दीर्घत्वम् उसं. (पा ६, २, १३९; ३, ११६) । पपा. पूप., दीर्घत्वमन्याय्यमिति कृत्वाऽवग्रहाऽभावादेव तदभ्युपगतस्य उप. दीर्घाऽभावतो निर्देशस्येहाऽभावः द्र. ।

f) सस्व. नापूटि. द्र. । उप. कृते तु. टि. अभिमातिषाह्य-, पृतना-साह्य- ।

g) संदिग्ध-स्थलीयः पा. भवति । यनि. अभिप्रेतं भवत्युत √खिन्द्>खिन्दति >*खिन्नन्ति> खिनन्ति इति वेति विमर्शसहं भवति । उभयथाऽपि नतिरप्रामाण्यं द्र. ।

h) 'निषिञ्च' इति ऋ (५, ८३, ८) पाभे. ।

i) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६,२,४९) ।

j) गस. कर्मणि शानच् प्र. । कृत्-प्रस्व. (पा ६, १, १८६; २, १३९) ।

k) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९; तु. PW. MW.; वैतु. सा. अभिः कप्र. इति, GW. 'अभि···आष्ट' इति योगं ब्रुवाणश्च) ।

l) गस. उप. घञि थाथादि-स्वरः (पा ६, २, १४४) ।

अभि-षेक्तृ[a]- -क्तारम् मा ३०, १२; का ३४, २, ४.

अभि-षेचन[b]-

¶अभि-षेचनीय[c]- -यस्य मै ४, ४, १०[२]; काठ १५, १०.

अभि √१षु(<सु), ¶अभिषुणोति तै ३,२,२,१; मै ४,७,७; ¶अभि-षुणोति तै ३, १, ८, २; ६, ४, ५, १; मै ३, ७, ८; ४, ५, ५[२]; ६; काठ २६, १०; क ४१, ८; ¶अभिषुण्वन्ति तै ६, ४, ४, ४; ६, ७, १; ९, २; मै ४, ५, ६; ७, २; ७; ८, ३; अभिषुण्वन्ति ¶तै ६, १, ६, ४; ¶काठ २३, १०; २६, १; २९, २; ३०, ७; ३४, ३[२]; ¶क ३७, १; ४०, ४; ४५, ३; पै ५, ३६, ६[d]; १६, १५१, १; ¶अभ्यषुण्वन् काठ २६, १०; क ४१, ८; अभिषुणुयात् तै ३, २, २, १; काठ २६, १०; क ४१, ८; ¶अभिषुणुयुः काठ ३४, ३.

¶अभ्यषुषुवुः मै ४, ७, २.

अभि-षवणी[b]- -णीः शौ ९, ६, १६; पै १६, ११२, ३.

¶अभि-षुण्वत्- -ण्वन्तः काठ २७, ४; क ४२, ४.

अभि-षुत[e]- -तः तै ४, ४, ९, १; काठ ३४, १५; -¶तस्य काठ २९, ६; क ४५, ७; -¶ताय काठ २७, २; ३०, ७; क ४२, २. [°त- अन्°, सक्रुत°]

¶अभि-षुत्य[f] तै ६, २, ११, ४.

¶अभि-षुत्य[g]- -त्यः मै ४,५,६;काठ ३४,३[२]; -त्यम् तै ६,४,५,३.

¶अभि-षूयमाण[h]- -णस्य तै ३,१, ८, २.

¶अभि-षोतोस्(>:) काठ २७, १; ३०, ७; क ४२, १.

अभि √१षू(<सू), ¶अभिषुवति मै २, ५, ६; काठ १३, २.

अभि-षेक- अभि √षिच् द्र.

अभि √षेणि(<सेना)[i]

अभि-षेण[j]- -णान् ऋ ६,४४,१७.

अ(भि>)भी-षेण[k]- -णम् पै ४,२७,५

अभि-षेहान- अभि √षह् द्र.

अभि √षो(<सो), अभिष्यामि शौ ४, १६, ९.

अभि √ष्ट(<स्त)न्>स्तनि, तंस्तन्, अभिष्टन[l] शौ ६, १२६, २[m].

¶अभ्यस्तनयन्[n] तै १,६,११,४.

अभितंस्तनीति[o] पै ९, २४, १;

अभितंस्तनीहि शौ ५, २०, १.

अभि-ष्टन[p]- -ने ऋ १, ८०, १४.

१अभि-*ष्टि[q]- -ष्टयः ऋ १, ५२, ४; ११९,८; ४,३१,१०; १०,२२, १२; -ष्टये ऋ १, १२९, १; २, ३४, १४; ५, १७, ५; ३८, ३; ८, ८, १७; १२, ४; २७, १३; ५०, १; ६७, १; १०; ६८,५; १०१, १; ९, ८४, २; १०, ९, ४; ४९, ४; ९३, ११[२]; खि ३, २, १; ४, २, १३; ५, ६, २; मा ४, ११; ३३, ८७†; ९१†; ३६, १२; का ४, ५, २; ३६, १, १२; तै १, २, ३, १;

a) गस. तृजन्त-कृत्-प्रस्व. (पा ६,१,१६३;२,१३९)।

b) गस. ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

c) तु. टि. अभि √चर् >अभिचरणीय-।

d) मुपा. नकारोऽपलक्षणः।

e) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।

f) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

g) गस. क्यबन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

h) गस. कर्मणि शानच् प्र.। कृत्-प्रस्व. (पा ६, १, १८६; २, १३९)।

i) णिजन्तो नाधा. (पा ३, १,२५)।

j) गस. कर्तर्य् अच् प्र. थाथादि-स्वरश्च (पा ६,२,१४४)। यत्तु सा. बस. इति कृत्वा व्याचष्टे, तन्न। तथात्वेऽन्तोदात्वाऽनुपपत्तेः, अभेः उप. प्रति गतित्वाऽभावाद् नतितज्जणत्वाऽप्रसक्तेश्चेति दिक्।

k) नापू. एव रूपान्तरं भवति। अत्र पूप. दीर्घत्वं विशिष्यते (तु. पा ६, ३, ११६)।

l) षत्वम् उसं. (पा ८,३,६५)। यत्तु सा. पा ८,३,८६ इत्यनेन षत्वमाह, तच्चिन्त्यम्। तस्य सति सामान्यपरे विशेषपरकत्वादिति।

m) 'निः ष्टनिहि' इति ऋ (६, ४७, ३०) पाभे.।

n) अड्व्यवायेऽपि षत्वाभावमुपलक्ष्य 'प्राक्-'(पा ८,३, ६३) इत्युक्तदिशा सिताद् उत्तरवर्तिताऽस्य धा. उसं.।

o) प्रागुक्तदिशा सितोत्तरवर्त्तित्वेऽस्य धा. 'स्थादिषु' (पा ८,३,६४) इत्येतद्-विषयत्वाभावः सुगमः। अत्र मूको. '°नयति' इति पा.। एवं तु. '°नीहि' (शौ ५, २०, १) इति। अभ्यासे नलोपाऽभावो विमृश्यः।

p) गस. उप. अप् प्र. उसं.। थाथादि-स्वरः (पा ३, ३, ५८; ६, २, १४४)।

q) प्रास.उप. √स्था+भावे किः प्र.पूपप्रस्व. (पा ३,३, ९२;६,२,२)। नैप्र.ठकारस्य टकाराऽऽपत्तिः। पपा.अवग्रहाभावोऽन्याय्यवर्णपरिणामस्य वाऽस्पष्टाऽवयवविभागस्य वा सूचकः द्र.। भूयस्यो ह्यत्र कल्पना भवन्ति। तथाहि। उप. क्तिनि < √यज् इति वा (तु. सा. ऋ १,१२९,९; भा. तै १,२,३,१), √१,२इष् इति वा (तु. सा. यक. ऋ १,५२,४;४७,५), √१अस् इति वा [तु. PW. GW. प्रभृ., WW १,१६१, (तु. १उप-स्ति-, परि-ष्टि-, स्ति-)]।

२, १, ११,५†; मै १, २,३; ४, १२,१†; काठ २,४; १३,१६†; ३८, १३†; क १, १६; कौ १, ३३†; २, ९१०‡[a]; †जै १, ३, १३; ३, ५६, १७‡[a]; ४, २८, १०; शौ १, ६, १†; ६, ३, २; २०,५१,३†; –†ष्टिभिः ऋ १, ४७, ५; १२९, ९[2]; ४, ४६,२; ५, ३८,५; ८, ३, २; १९, १०; ५३, ५; खि २, १३, ५; ३, ५, ५; ५, ४, २; मा १५, ४०; का १६, ५, २२; कौ १, २८२; २, ७७२; ४, २$; जै १, २९,१०; २, ७, १; –†ष्टौ ऋ १, १५८, १; ४, १६, ४; ९; ५, ४१, ९; ६, ३३, ५; ६७, ११; ७, १९, ८; ९; १०, ६, १; ६१, २२; मै ४, १४, १५; शौ २०, ३७, ८; ९; ७७, ४. [°ष्टि-सु>स्व्°]

†अभिष्टि-कृत्[b]– -कृत् ऋ ४,११, ४; २०,१; ९, ४८,५; मा २०, ४८; का २२, ५, २; कौ २, १८९; जै ३, १७, ११.

अभिष्टि-पा[c]– -?पा(:) ऋ २,२०,२.

अभिष्टि-शवस्[d]– -वसे ऋ ३, ५९, ८.

अभिष्टि- सु>स्व्°

२अभि*-ष्टि[e]– -ष्टिः ऋ १, ९,१; ३, ३४, ४; १०, १००, १२; १०४, १०; खि ४, ६, ४; मा २०, ३८; ३३, २५†; का २२, ४, ३; ३२, २,८†; मै ३, ११, १; ४, १२, ३; काठ ३८, ६; †कौ १, १८०; †जै १, १९, ६; †शौ २०, ११, ४; ७१, ७; –ष्टीः तै २, ४, १४, २.

अभिष्टि-द्यु(म्न>)म्ना[f]– -म्नाः ऋ ४,५१, ७.

अभिष्टि-मत्[g]– -मत् ऋ १,११६,११.

अभि √ष्टु(<स्तु), ¶अभिष्टुवन्ति मै ४, ६, २; अभिष्टुहि ऋ १, ५४, २; मै ४, ९, २; शौ २०, ४९, २; ३[h]; अभिष्टवाम ऋ ८, १००, ३.

अभि-ष्टुत,ता[i]– -तः ऋ ९, ३, ६; २७, १; ६७,१९;२०; †कौ २,६०७; ६३६; †जै ३,४९,९; ५१, २; शौ ९, २, १; पै १६, ७६, १; –तम् पै १०, ३, २; –ताः शौ ८, ७, ११; पै १६, १३, १; –ते ऋ ७, ३९, ७.

?अभिष्टताम्[j] पै ६, ७, १.

अभि √ष्ठा(<स्था)>तिष्ठ, अभितिष्ठते[k] शौ १९,४९,२; ¶अभितिष्ठति तै ५,४,३, ५; ¶अभितिष्ठति तै ६, ६,३,२; मै ३,१,४[2]; अभितिष्ठसि खि ४, ७, १, ६; अभितिष्ठामि मा ६, १६; का ६, ३, ६; शौ ६, ४२, ३; अभि···तिष्ठन् ऋ १०, १२३, ३[l]; अभितिष्ठः पै ७,१८,८; अभितिष्ठतु पै १६, ७३, ४; अभि···तिष्ठतु पै १, ९४, ३; अभितिष्ठ>ष्ठा ऋ १, ४२,४; ५, २८, ३; १०, ६९, १२; मा ११, २०; ३३,१२†; का १२, २, ९; ३२, १, १२†;

---

a) 'अभिष्टिभिः' इति ऋ (८, १९, २०) पाभे. ।

b) उस. क्विबन्त-कृत्-प्रस्व. (पा ६,२,१३९) ।

c) तस. सासस्व., उस. इति कृत्वा वा कृत्-प्रस्व. द्र. (पा ६, १, २२३; २, १३९) । पूप. क्रिवि. इति कृत्वा न. द्वि१ इति वर्तयित्वा योजनीयम् । उप. √२पा+विच् प्र. । एस्थि. संपा. प्रथमपादान्ते 'त्वायतो'>'*त्वायताँ' इति च द्वितीयपादान्ते 'जनान् >*जनाम्'(=ष३) इति च द्वि>ष. इति प्रकृतिप्रत्यापत्त्यात्मकः शोधः द्र. । 'अभिष्टिपा असि' इत्यत्र विसंधिश्च [तु. समाननिष्पत्तिकस्य 'स्ति-पाः' इत्यस्य च (ऋ १०, ६९, ४) 'पा-' इत्येतदुत्तरपदानामन्येषामपि प्राति. तत्र तत्र वा. ; वैतु. पपा. अविसर्जनीयान्तं चिन्त्यं रू. (तु. टि. ?अनेहा), सा. पूप. शत्रुपर्याय इति समग्रश्रौतप्रसिद्धिविरुद्धमशुद्धं भाषमाणः पंतस. इति कृत्वा व्याचक्षाणः; GW. LUD. च अभिष्टिपासि>'अभिष्टि(<अभिष्टी<अभिष्ट्या) । पासि' इति पदविभाग इति (न त्वेवं पाद ऊनाक्षरताया अपहतिरिव स्यादिति चिन्त्यम् [तु. L ४४४ एतत्कल्पप्रवणत्वेऽप्यनध्यवसितः])] । GG. १अभिष्टि- इति पूप. इति कृत्वा तृतस. इतीव विवृणोति ।

d) व्यधिकरणे बस. पूपप्रस्व. (पा ६,२,१) । उप. यद्र. ।

e) गस. उप. √स्था+कर्तरि वा भावे वा किः प्र. कृत्-प्रस्व. (पा ३,३, ९२; ६,२,१३९; तु. २उप-स्ति-) । नैप्र. ठस्य टः ।

f) समानाधिकरणः बस. । शेषम् एपूटि. द्र. ।

g) 'ह्रस्व-' (पा ६, १, १७६) इति मतुबुदात्तः ।

h) एवं किल WR. शिश्रावयिषतः (वैतु. मूको. अधृष्णुहि?) । वस्तुतस्तु 'उरूवाचो [='उरु । उवाच । उ' ('शक्रो वाचम्)] अ-धृष्णुहि' इति शोधः स्वारसिकश्च सुलभश्च द्र. ।

i) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९) ।

j) संस्कर्त्रोपेक्षितः संदिग्धः पा. द्र. (तु. √स्था इत्यत्र अतिष्ठताम् इत्यत्रत्यं सस्थ. टि.) ।

k) सा. W. च 'वितिष्ठते' इति पा. आहतुः ।

l) पूर्वस्या ऋचो 'योनिम्' इत्यस्याऽध्याहारः द्र. 'सुनीळाः' इति साक्षाच्छ्रुतेश्च (तु. वें.; वैतु. सा. PW. MW. 'अभिवावशानाः' इत्यन्याय्यद्वैस्वर्यप्रसक्त्योगाः) ।

तै ४,१,२,३; मै २,७,२; ३,१, ४[२];४,११,१†;१२,३; काठ २, १५†; १६,२; शौ ५, ८,९; ७, ७७, १०†; १९, ४६,५; पै ३, ३, ३; २१, ६; ४, २३, ४; अभि···तिष्ठ ऋ ६, २१, ७; †अभि[३]···तिष्ठ ऋ १०, १७४, २; शौ १, २९, २; पै १, ११, २; अभितिष्ठेम ऋ १, ११०, ७; अभि···तिष्ठेम ऋ ८, २१,१२. अभि···तस्थौ ऋ ४, ५०, ७; †अभि···तस्थौ ऋ ६, २०, १; ७,८,४; मा १२, ३४; का १३, ३, ५; तै २, ५, १२, ४; ४, २, ३, २; मै २, ७, १०; काठ १६, १०; क २५, १; अभितस्थ पै ९, २२, १५; अभ्यस्थात् तै ४, २, ८, १; काठ ३९,१; †अभि···अस्थात् ऋ १, १४९, ४[a]; १०,३,३; कौ २,८९८;११२५; जै ४, १३,११; अभ्यष्ठाम्[b] शौ १०, ५, ३६; १६, ९, १; पै १६, १३२, १; अभ्यस्थाम् मै १, ५, ३; ६, २.

ф अभि-तस्थिवस्[c]– -†वांसः ऋ ४, ४, ९; तै १, २, १४, ४; मै ४, ११, ५; काठ ६, ११.

अभि-ष्ठित[d]– -तः खि ५, १८, १; मा ८, २३; का ९, ४, १; तै १, ४, ४५, १; ६, ६, ३, २; काठ ४, १३;२९,३; क ३,११; शौ ५, १४, १०; २०, १३५, ३; पै ७, १, ८; –†ता: ऋ १०, १६६, २; पै १३, ३, ११.

अभि-√ष्य(<स्य)न्द्, अभिसिष्यदे शौ ५, ५, ९; पै ६, ४, ९.

¶अभि-सं-√या, अभिसंयाति काठ २२, ६; क ३४, १.

¶अभि-सं-√युज्, अभिसंयुङ्क्ते मै २, ३, २; ७; अभिसमयुङ्क्त मै २, ३, ७.

अभि-सं-√विश्, अभिसंविशन्ति शौ १५, १७, ९; पै ९, १२,१; अभिसंविशन्तु मा १३, २५; १४, ६; १५; १६; २७; १५, ५७; का १४, २, ११; १५, १, ५; ४, ३[२]; ८, ५; १६, ७, १; मै २, ५, ६; ८, १२[२]; १३, २२; ४, ६, ६; काठ १३, २; १७, १०[२]; ४०, १२; क २६, ९[२]; अभिसंविशस्व शौ ९, २, २५; अभिसंविशध्वम् शौ ३, ३, ४; ६, ६४, २‡[e]; ८, ५, २०; २१; पै २, ७४, ४; १६, २८, ९; १०.

¶अभि-सं-√शंस्, अभिसंशंसति मै ४, ७, ५.

¶अभि-सं-√श्रि, अभिसंश्रयति काठ १०, ४.

अभिसं-श्रित– -ताः काठ १०, ४[३].

¶अभि-सं-√श्लिष् >श्लेषि, अभिसंश्लेषयन्ति मै २, ४, ६.

अभि-सं-√स्वृ, †अभि···समस्वरन् ऋ ८,३,७[f]; ९,६७,९[f]; कौ १, २५६[f]; २, ९२३[f]; जै १, २७, ४[f]; शौ २०,९९,१; ‡[g]अभि··· समस्वरन् पै ६, ११, ४?.

अभि-सं-√हन्

अभिसं-हत्य पै १६, ९०, ६[h].

¶अभि-सं-√हृ, अभिसंहरति काठ २७, ५; क ४२, ५.

¶अभि-सं-√क्रम्, अभिसंक्रामन्ति, अभिसंक्रामन्ति मै ४, २,६.

¶अभि-सं-√गम्>च्छ्, अभिसंगच्छन्ते, अभिसमगच्छन्त मै २, १, ४; ३, ६, ५.

अभिसं-गत्य[i] शौ ११, १, १६.

¶अभि-सं-√ज्ञा>जा, अभिसंजानते मै २, २, ६[j]; ३, २, ३[२]; काठ २६, १; क ४०, ४; अभिसमजानत मै २, २, ६[२j].

†अभि-स(>ष[k])त्वन्[l]– -त्वा ऋ १०, १०३, ५; मा१७, ३७; का १८,४, ५; तै ४, ६,४,२; मै २, १०, ४; काठ १८, ५; क २८, ५; कौ २, १२०३; शौ १९, १३, ५; पै ७, ४, ५.

¶अभि-सं-√तन्, अभिसंतनोति मै १, ११, ९; ४, ४, ३; ८, १०; काठ १४, १०; २७, १०; २८, १; क ४४, १; अभिसंतन्वन्ति काठ ३०, ५.

अभिसं-तत– -तः काठ २७,१०[२].

---

a) एवं किल वें. अर्वाक्श्च । सा. तु सर्वलोकाऽभिष्ठितौ हेतुभूतदीप्त्यर्थानुवादकेन 'शुशुचानः' इति पदेन योगं वदन् लोकविलक्षणमिव किंचिच्चिकीर्षति । तदलक्षणं त्विति तेन मर्षणीयम् ।

b) षत्वं तदभावश्च शाखाभेदेन द्र.(तु.एपू. च नाउ.च रू.)।

c) गस. क्वस्वन्त-कृत्-प्रस्व. (पा ६, २, १३९) ।

d) सस्व. कृते तु. टि. अभिनि-ष्पण्ण- ।

e) विशिष्ट इह ऋ (१०, १९१, ३) पाभे. ।

f) √स्वृ इत्यस्य √गै इत्येतत्-पर्यायतयैतत्-प्रकारकेषु स्थ. 'अभि' इति कप्र. अपि सुवचः(तु. टि.ऋ१,५१,१)।

g) 'अव···समस्वरन्' इति ऋ (९, ७३, ४) पाभे. (तु. टि. अव-सं-√स्वृ) ।

h) 'अभिसं-गत्य' इति शौ (११, १, १६) पाभे. ।

i) गस. ल्यबन्त-कृत् प्रस्व.(पा ६,१,१९३;२,१३९)।

j) भङ्ग्यन्तरेणाऽन्यत्र अभिः कप्र. भवति नोपसर्गः (तु. तै २, २, ११, ६) ।

k) काठ. षत्वं भवतीति विशेषः ।

l) बस. पूपप्रस्व. (पा ६, २, १) । उप. यद्र. ।

अभिसं-तत्य काठ २३, ५.

अभि-सं √तप्>तापि, अभिसंतपाति शौ २,१२,६‡[a]; अभि··· संतपताम् पै १०, १२, ८. अभिसंतापय शौ १९, २८, २.

¶अभि-सं √तॄ>तर, अभिसंतरति काठ २३, ६.

अभि-सं √धा, ¶अभिसंधत्ते मै ४, ४, ५; ¶अभिसंधत्तः मै २, ४, २; काठ १२, १२; २४, ७; २६, ७; क ३७, ८; ४१, ५; †अभि···संधेहि ऋ १०, ८७, ३; शौ ८,३,३[b]; पै १६,६,३. अभि···समधात् शौ १०, ५, ४३[c]. ¶अभिसंधीयते मै ३, ७, २.

अभि √सप्, अभि···सपन्ते[d] ऋ ७, ३८, ५.

¶अभि-समा(म्-आ) √गम्, अभिसमागच्छन्ति मै ४, ८, १०; अभिसमागच्छान् मै १, १०, १७.

¶अभि-समा(म्-आ) √वृत्, अभिसमावर्तते मै ३, ८, ९; अभिसमावर्तन्ते मै १, ६, ६; २, २, ६; काठ ३७,१; अभिसमावर्तन्त मै १, ६, ६[e]; २, २,६[f]; काठ ३७, १.

अभि-समि(म् √इ), अभिसमेति मै ३, १०,७¶; अभिसंयन्ति शौ ११, ७, ३; अभिसंयन्तु मै १,६,२[f]; काठ ७, १४; क ६, ३; पै १६, १५३, २[e]; ¶अभिसमियात् काठ २४, ५; क ३७,६.

अभि-समू(म् √१ऊ)ह्, अभिसमूहामि मै २, ६, ३; ४, ३, ४[f]; काठ १५, २.

अभि-समृ(म् √ऋ>अर्पि), अभि··· समरीत[g] ऋ ९,७९,३. अभिसमर्पय पै ४, १६, ८.

अभि-समे(म्-आ √इ) ϕअभिसमे(मा-इ)त्य[h] शौ १२,३,४.

¶अभि-सं √पद्>पादि, अभिसंपद्यन्ते काठ ३३, २-४. अभिसंपादयते काठ २७, ९; अभिसंपादयति मै ४, ५, ३[f]; काठ २५, ४; क ३९, १.

अभिसं-पन्न- -न्नः काठ ३३, २;३.

अभि-सं √पश्, अभिसंपश्य पै १, ९७, ४.

¶अभि-सं √बन्ध्, अभिसमबध्नीत मै ४, ७, ८[f].

अभि-सं √भू, अभिसंभवतः मै ३,७, ८¶; अभिसंभव पै १६,७२,१; ¶अभिसमभवताम् मै २,४,३; ¶अभिसंभवेताम् मै ३, ७, ८. अभिसंबभूव शौ ३, २८, ५; ६; अभिसंबभूवुः काठ ५, ६; ३९, २.

अभिसं-भूय[i] शौ ५, २८, ८; पै २, ५९, ६.

¶अभि-संमु(ख>)खा- -खाः काठ २५, १०; २६, ६.

¶अभि-संमु(ख>)खी- -खीः क ४१, ४.

¶अभि-सं √मिल्, अभिसममिलत् मै १, ५, १२.

¶अभि-सं √मृश्, अभिसममृशन् मै २, १,११.

अभि √साध्>साधि, अभिसाधय>या पै ५, १०, १०.

अभि √सृ

अभि-सर्तृ[j]- -र्तारम् मा ३०, १४; का ३४,३, १.

अभि √सृज्, अभि···सृजन्ति पै ४, ३५, ४; ¶अभ्यसृजत् काठ १३, २; ¶अभ्यसृजन्त काठ ३५, २०; अभि···असृजम्

---

a) 'अभि···शोचतु' इति ऋ (६, ५२, २) पाभे.।

b) मूको. 'अभि' इत्यस्य स्थाने 'अपि' इति श्रूयते (तु. W.)। यत्त्वाह WI. अभिः कप्र. इति, तच्चिन्त्यम्।

c) शौ ८, ३, ३ इत्यनेन समर्थ्य च चोद्यं च प्रति सविषयता द्र.।

d) लक्षणे कप्र. इति मन्वानः सा. चिन्त्यः (तु. वें.)।

e) 'अभिसंयन्ति' इति शौ (११,७,३) पाभे.।

f) मुपा. सविसर्गस्याऽभेः स्थाने 'अभि' इति शोधः द्र.।

g) तु. वें. PW. प्रभृ.; वैतु. सा. तृतीयपादीयं 'तान्' इति पदं तुरीयपादीयवाक्यान्तर्गतं प्रकुर्वाणः 'अभि' इत्यस्य वा. स्थितिं प्रति प्रमादुकः।

h) 'अभि-संविशध्वम्' इति योग इति यत् MW. अभिमानुकस्तन्न। स्वरतश्चाऽर्थतश्चोभयथाऽप्यसंगतेः। यदपि 'अभि' इति स. अर्थे कप्र. 'आपः' (=द्वि३ <२अप्-) इत्येतदन्वित इति W. उल्लेखुकस्तदपि न। एवंविधे वा. अभ्युपसृष्टस्याऽऽख्यातस्य सकर्मकत्वाऽव्यभिचाराद् 'आपः' इत्यस्य द्वि३ सतः कर्मतयैव सूपयोगात् स. अर्थे कप्र. प्रयोजकत्वस्याऽप्रसङ्गात्। तथा चासल्लक्षणद्विस्वरत्वात्मकस्य चोद्यस्य दुष्परिहरत्वाच्च। का तावदत्र गतिरिति। उच्यते। वा. समवबोध इति। कथमिति। शृणु। नेह 'आपः' इति प्र३ वा द्वि३ वा भवति। किन्तर्हि। सं३ इति। 'पुत्रासः' 'जीवधन्याः' इत्युभे च 'आपः' इत्येतत्-समानाधिकरणे वि. भवतः [तु. शौ १२, ३, २५ उ (पुत्रत्वस्य चेह प्रियत्वोपलक्षकमात्रत्वात् पुंस्त्वमतन्त्रं द्र.)]। एस्थि. 'आपो जीवमभिसमेत्य संविशन्तु' इति वा. तात्पर्यं भवतीति दिक्।

i) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

j) गस. तृजन्त-कृत्-प्रस्व. (पा ६,१,१६३;२,१३९)।

पै ४, २, ७?[a]; ८, १०,१०?[a].
¶अभ्यंसृज्यन्त मै १, १०, ५.
¶अभि-सृज्य[b] मै ४, २, ७.
¶अभि-सृज्यमा(न>)ना[c]– -ना मै ४, ६, ८.
†अभि-सृष्ट[d]– -ष्टः ऋ ३, ३५, १; १०, ९१, ५; कौ २, ३३२; जै ३, २८, ४.
अभि√सृप्, ¶अभिसर्पति काठ २८, ८; क ४४, ८; ¶अभिसर्पन्ति मै १, ४, ५; ८, २; अभिसर्प शौ ३, २५, ४.
¶अभि-सृप्य[e]– -प्यम् मै ४,६,२.
अभि√स्कन्द्, अभिचस्कन्द शौ ७, १२०, २.
अभि-स्कन्दम्[f] शौ ५, १४, ११.
†अभि√स्नु, अभिस्रवन्तु क १०, ९, ४; मा ३६, १२; का ३६, १, १२; काठ १३, १६; ३८, १३; कौ १, ३३; जै १, ३, १३; ४, २८, १०; शौ १, ६, १.
अभि√स्फूर्ज्, अभिस्फूर्जति शौ १२, ७, ९.
†अभि√स्वृ, अभिस्वरन्ति ऋ १, १६४, २१; शौ ९, १४, २२; पै १६, ६७, १२; अभिस्वरन्ति ऋ ९, ८५, ३; अभिस्वरन्तु ऋ ८, १३, २८; अभिस्वर ऋ १, १०, ४; ८, १३, २७; ९, ९७, ३; कौ २, ७५१.
अभि-स्वर्[g]– -स्वरा ऋ २, २१, ५; ८, ९७, १२; शौ २०, ५४, ३.
अभि-स्वर[h]– -रे[i] ऋ ३, ४५, २; १०, ११७, ८; कौ २, २८१‡[i]; १०६९; जै ३, २३, १३‡[i]; शौ १३, ३, २५.
अभि-स्वर्तृ[k]– -र्तारः ऋ १०, ७८, ४.
अभि√हन्>जिघांस, †अभिजहि ऋ ७,१०४,१९; शौ ८, ४,१९; पै १६, १०, १०; अभि···जहि[l] ऋ ९, ८५, २; अभि···हन् ऋ ५, २९, २.
†अभि···जघन्थ ऋ ३, ३०, ८; मा १८, ६९; का २०, ५, २.
†अभि····जिघांसति ऋ ७,५९, ८; मै ४, १०, ५; ¶अभिजिघांसन् क ३५, ५.
¶अभि-घातम् काठ १२, ४.
अभि-घ्नत्[m]– -घ्नते मा १६, ४६; का १७, ७, ५; तै ४, ५,९,२; मै २, ९, ८; काठ १७, १५; क २७, ५.
?अभिघ्नन्[n] खि १,२, २.
अभि-हत[d]– -तः शौ ११,१२,२२; –?तम् शौ १९,९,९[o]; –¶तस्य मै ३, ९, ३. [°त-उल्का°]
अभि√हर्य्, अभिहर्यन्ति ऋ १०, ११२, ६; अभिहर्यत शौ ३, ३०, १.
अभि√हस्,
अभि-हस्य[p]– -स्यम् शौ ६, ३०,२.
¶अभि√२हा
अभि-हाय[b] मै२,५,७;काठ१३,२[q].
अभि√हि, अभि>भी····हिन्वन्ति[r]

[a]) 'अभि···असृजन्' (प्रपु३) इति सुपा. शोधार्हः द्र. । मूको. विरोधाचाऽन्यथासिद्धत्वाच [तु. नापू. मन्त्रे च तैब्रा. २, ७, १५, ५ च उपु१ एव श्रुतिः (यदनुरोधादिहापि अभि√षिच्, ञ्च् इत्यस्यैव निगमस्य सतः [तु. शौ ४, ८, ६] यनि. विकारमात्रं संभाव्येत)] ।

[b]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९) ।

[c]) तु. टि. 'अति√दह्>अति-दह्यमान-' इति. ।

[d]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६,२,४९) ।

[e]) गस. क्यबन्त-कृत्-प्रस्व. (पा ६, २, १३९) ।

[f]) गस. णमुलन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९) ।

[g]) गस. विजन्त-कृत्-प्रस्व. (पा ६, २, १३९) ।

[h]) गस. घान्त-कृत्-प्रस्व. (पा ३, ३, ११८; ६, २, १३९) तु. विव. ।

[i]) सा. PW.नापू. प्राति. च१ रू.; MW. तुमर्थीयं रू. इत्याहुः । तद् विमृश्यम् ।

[j]) 'अभिस्वरा' इति ऋ (८, ९७, १२) पाभे. ।

[k]) गस. तृजन्त-कृत्-प्रस्व. (पा ६,१,१६३;२,१३९)।

[l]) वैतु. सा. 'अभ्या (गच्छ)' इत्येवं व्यर्थं द्विस्वरं च क्रियाध्याहारवन्तं च योगं मन्यमानः; PW. प्रभृ. च 'अभ्या···जहि' इत्यातिष्ठमानाः। अत्र 'आ···पिब' इति योगः द्र. ।

[m]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९) ।

[n]) यद्यपि यमु. यद्-योगीय-स्वरं लङि प्र३ रूपं भवति, तथापि मूलतः 'अभिहनम्' इत्यस्य सतोऽयं विकार इति सुकल्पम् (तु. संटि., ऋ १, ११६, ६; ११७, ९ प्रभृ. च) ।

[o]) 'उल्काभिहतम्' इति सुपा. स्थाने 'उल्का-भिहतम्' इति प्रकरणानुरोधाच् शोधः WR. संमतः । सा. स्वीये भाष्ये, कैश्चित् मूको. स्वीकृतश्च द्र. ।

[p]) गस. उप. यत् प्र. उसं. । कृत्-प्रस्व. (पा ३, १, ९९; ६, १, २१३; २, १३९) ।

[q]) 'अतिहाय' इति मूको. पा. ।

[r]) अभिम् कप्र. वदन्तः PW. प्रभृ. विमृश्याः ।

ऋ ९,१०१,३; अभि(हिन्वन्ति) कौ २, ४९.

अभि-हिं√कृ, अभिहिंकृणोत शौ १२, ३, ३७.

अभिहिंकरोति, अभिहिङ्क्करोत् काठ २७, ९.

अभि-हित- अभि√धा द्र.

अभि√हु, ¶अभिजुहोति तै ३, १,५, २; ६, ६, ३, २; मै ३, २, ८; ९, ५; ४, १, १४; काठ ६,८[२]; २५, १०; ३१, ११; क ४,७[२]; ४०,३; ४७, ११; अभिजुहोमि तै १, ३, २,२; अभि···जुहोमि पै २, ६६, ४; ¶अभिजुहुयात् तै २, ६, ६, ६; ३, ४, ८, ३; काठ ३५,१९; क ४८, १७.

अभि-हुत,ता[a]- -ता शौ ६, १३३, २; पै ५, ३३, २; -¶तौ काठ ६, ८; क ४, ७.

¶अभि-होतवै[b] मै १, ८, ६.

अभि√हृ, अभिहरन्तु शौ १९,४५, ४; पै १५, ४, ४.

¶अभि-हृत्य[c] मै २, ५, ७.

अभि√हु

अभि-हुत्[d]- -हुतः ऋ १, १२८, ५[२]; १०, ६३, ११; शौ ६, ४, २; -हुताम् ऋ १, १८९, ६.

अभि-हुति[e]- -ती शौ ६, ३, ३[f]; -तेः ऋ १, १६६, ८.

अभि√ह्वृ

अभि-ह्वार[g]- -रे शौ ६. ७६, ३.

१अभी(भि√इ), ¶अभ्यायत तै २, ५, २, २;५; अभ्यायत[h] शौ ४, २४, ६; पै ४, ३९, ६; अभि-···आयत ऋ १, ८०, १२; ‡अभ्ययत्[i] कौ २,१८८; जै ३, १७,९; ¶अभ्यायन्त तै ६, २, ७, ४; ४, ६, १.

अभ्येति कौ २, १२१०; शौ १, २५, ४; ७, १२१, २; ९, १, ८; अभ्येति ऋ १, ११५, २; १२४, ९; १४०, ६; ९, ९७, ७; १०१, १६; १०, ३, ३; ११७,८; †मै ४, १४,४; ¶काठ २४, ७; ¶क ३७, ८; †कौ १, ५२४; २, ४६६; ८९८; †जै १, ५४, २; ३, ३५, १; ४, १३, ११; शौ ८, ९, ९; †१३, २, २७; ३, २५; †२०, १०७,१५; पै २,६५,१; १६, १८, ९; अभि····एति ऋ १, १२३, ७; ७, १०४, २१; ९, ९६, २२; १०, ६३, १६; शौ ८, ९, २१; १३, २, ४३[j]; अभियन्ति शौ १०, ७, ४; ६; अभि···यन्ति ऋ ८, १००,१; शौ ५, ४, २; अभि···यन्ति[k] ऋ १,१९०,४; अभ्येषि पै १६, १४९, १०; अभ्येमि मै १, ३, ३७; ४, ८, २; अभ्येतु मै २, ७, १२‡[l]; शौ ५, १३, ४; ७, १२१, २; १३, १, १०; पै ८, २,३; ‡अभि···एतु[m] शौ ८,४, २१; पै १६, ११, १; †अभि-यन्तु ऋ ४, ५७, ८; मा १२, ६९; का १३, ५, ८; तै ४, २, ५, ६; काठ १६, १२; क २५, ३; पै १५, ५, ६ऽ; †अभीहि ऋ १, ८०, ३; १०, ८३, ३; कौ १, ४१३; जै १,४०, ५; शौ ४, ३२, ३; पै ४, ३२, ३; †अभि···इहि ऋ ९, ६४,१३; कौ १, ५०५; २, १९१; जै १, ५२, ९; ३, १७, १२;

---

[a]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।

[b]) तवै-प्रत्ययान्तस्य द्वैस्वर्यं द्र. (पा ६, २, ५१)।

[c]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[d]) गस. क्विबन्त-कृत्-प्रस्व.(पा ६,१,१६२;२,१३९)।

[e]) गस. क्तिनि पूपप्रस्व. (पा ६, २, ५०)। सात. पाएडु. WR. तु 'अभि°' इत्येवं पा. आहुस्तत्तूत्तन्त्रं द्र.।

[f]) 'अभि-हुतः'इति F. प्रस्तावितं पा.W. अनुमुमोदयिषति, तत्र को लाभः यनि. च का क्षतिः इति विमृश्यं विविग्भिः।

[g]) गस. घञन्ते कृति थाथादि-स्वरः (पा ६,२,१४४)।

[h]) अभ्या√१यम् इत्यस्य रू. इति ब्रुवाणः सा. चिन्त्यः।

[i]) 'अभि' इति ऋ (९, ४८, ३) पाभे.।

[j]) शौच. १, १५, अनु 'अन्युत्' इत्यस्मात् तिङो निघाताऽभावे 'एति' इति स्यात्। पा ८, १, ६५ अनु स एव निघाताऽभावो वैकल्पिक इत्य् एतत्सर्वं शाखाभेदेनोह्यम्।

[k]) 'मृगाणामिव बृहस्पतेर्हैतयोऽहिमायान् द्यून् (<*द्यु-यद्र.)' इति संबन्धः द्र.। च- योगे तिङ् नानुदात्तः [पा ८, १, ५८ (वैतु. सा. मृषैव च-लोपमुपस्थाप्य 'यन्ति' इति प्रथमा तिङ्-विभक्तिरिति कृत्वा नानुदात्तेति च, 'अभि' इत्येतदुपसर्ग्याऽऽख्यातान्तरमध्याहार्य्यमिति च भाषुकः; GW. 'अभि' कप्र. द्यून् <१द्यु- ⌊यद्र.⌋ इत्येतदन्वित इति, VVS १८१, [तु. GVS ३, १३८⌋) *अभि√द्यु>*अभि-द्यु->?अभिद्यून्>(शोधपूर्वकम्) अभिद्यून् इति स्यादिति]।

[l]) 'अभियन्तु' इति ऋ (४, ५७, ८) पाभे.।

[m]) 'अभि···एति' इति ऋ (७, १०४, २१) पाभे.।

अभीतम् पै१३,५,८‡[a]; ¶अभ्यैताम् काठ २७, ८; अभ्यायन् ¶काठ २९,१; ¶क ४५,२; पै ५, २६,५; अभि···आयन् ऋ १०, २८,८; अभि···आयन् ऋ ७, १०३,२; ¶अभीयात् मै४,६,७. अभि···ईयुः ऋ ७, १८,१०.
अभि-यत्[b]– -यन्ती शौ ५, १, ५. अभियन्ती– -न्ती शौ७,४८,३.
अभीं(भि-इ)ति[c]– -तिम् ऋ ७,२१, ९; खि २, ६[३], २९; पै १०, ५, ११[d]; –†तीः ऋ २, ३३, ३; पै १५, २०, ३.
अभी(भि-इ)त्य[e] ऋ ४, ३२, १०; ९, ५५, ४; १०,९९,५; ¶काठ २६, १; ९[३]; ३६, ८; ¶क४०, ४; ४१, ७[३]; कौ २, ३२८†; जै ३, २७, ४†.
अभी(भि-इ)त्व(र>)री[f]– -रीः मा ११, ७७; का १२, ७, १२; तै ४, १, १०, २; मै २, ७, ७; ३, १, ९; काठ १६, ७; १९, १०[२]; क ३०, ८[२]; पै १, ४२, १.
¶अभ्या(भि-आ)युक– -कः काठ २८, २; क ४४, २.
२अभी(भि√ई), †अभि···ईमहे ऋ १, २४,३; तै ३, ५, ११,३; मै ४, १०, ३; काठ १५, १२; †अभि(ईमहे) मै ४, १३, १; काठ २८, ७; क ४४, ७.
(*अभीअअक-,*अभीक्क-)नाउ.टि.द्र
†अभीक[g]– -कम् ऋ ९, ९२,५; –के ऋ १, ७१, ८; ११६, १४; ११८,५; ११९, ८; १२१,१४; १७४,५; १८५, १०; ३, ३९, ७; ५६, ४; ४, १२, ५; १६, १२; २४, ४; २८, ३; ४३, ४; ६, २४, १०; ५०, १०; ७, १८, २४; ८५, १; १०, ३८, ४; ५५, १; ६१, ६; १३३, १; खि १, ८, ३; मा ३३, ११; का ३२, १, ११; तै १, ३, १४, ६; ७, १३, ५; मै ४, ११, १; २‡[h]; १२, ४; १४, १५; काठ २, १५; कौ २, ११५१; जै ४, १, ४; शौ २०, ९५, २.
अभी(भि√ई)क्ष्, †अभ्यैक्षेताम् ऋ १०, १२१, ६; मा ३२, ७; का २९, ४, २; तै ४, १, ८, ५; अभ्यैक्षन्त तै ३, १, ४, २.
(*अभीगत-,*अभीगतक-) एपू.टि.द्र.
अभीच्छुत्- अभी(भि√२इ)ष् द्र.
?अभीत्सम्[i] पै ९, ६, ६.
अभी(भि√इ)घ्,न्घ्, ¶अभी(भि-इ)न्धे तै ५,१,७,२; अभींन्धे मै ३, १,८; काठ १९,७; क ३०,५; शौ ११,३,१८; पै १६,५३,७; अभी(भि-इ)न्धते तै७,४,९,१; अभींन्द्धाम् मै २,७,६; अभींन्धाताम् मै ३,१,८; अभींन्धताम् मा११, ६१; का १२,६,२; अभी(भि-इ)न्धताम् तै४,१,६,२; काठ१६,६.
१अभीं(भि-इ)द्ध[j]– -द्धः ऋ १,१६४, २६; ¶मै ३,१,८; ३,६[k]; शौ ७, ७७,७†; ९,१५,४; पै १६,६८, ४; –द्धात् ऋ १०, १९०, १.

---

[a]) 'इदेषि' इति ऋ (१, १६२, २१) पामे.।
[b]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९)।
[c]) गस. उप. क्तिनि पूपप्रस्व. (पा ६, २, ५०)।
[d]) मूको. 'अभिति(म्)' इति। शौ (१९, ३१, ११) 'अमतिम्' इति वा (तु. सा.), 'अमितम्' इति वा (तु. मूको.), 'अवर्तिम्' इति वा (तु. WR.) पामे. द्र.।
[e]) गस.ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।
[f]) गस. क्वरबन्त-कृत्-प्रस्व. (पा ३, २, १६३; ६,२, १३९)।'अग्रेत्वरी-', 'अतीत्वरी-' इत्यत्र (पृ. ४२;८९) यथायथं शोधः द्र.।
[g]) 'अभितो गतम् (भावे क्तः)' इति कृत्वा *अभी (<भि)-गत- इत्यतः प्रास. पूपप्रस्व. सतः प्राति. कपि प्र. सत्य् *अभीगतक->*अभी अ अक->यनि.इति वा,'अभितः ईर्- (भावे <√ईर् <√ऋ)' इति कृत्वा *अभीर्- [भि-ईर्- (वैतु. पपा.)] इत्यतः पूर्ववत् कपि प्र. सत्य् '*अभीर्क->*अभीक्क->यनि. इति वा नैप्र. द्र.[वैतु. पा (५, २, ७४) यदनु अ(भि>)भी+कन् इति व्यु. आद्युदात्तः (पा ६,१,१९७), कमितृत्वाऽप्रसङ्गाद् अर्थतो विरोधश्च प्रसज्येत (प्रकामं श्रौतसरूपाभ्यां भिन्ने एव सती *अभिक- इत्य् *अभीक- इति च प्राति. उपकल्प्यमाने आचार्याऽनुशासनस्य विषयीक्रियेयातामित्यभिसंधेः [तु. टि. अभि-क-]; या. (३, २०) '=अभ्यक्त-' इति यदनु अभि+*अक्- (=√अञ्ज्+भावे कः) इति गस. वा स्यात् प्रास. वा बस. वा (सर्वथाऽपि तु मिथ्यास्वर एव प्रसज्येत। गस. थाथीयोऽन्तोदात्तश्चाऽन्यथा पूपप्रस्व. स्यादित्य् *अभ्यक- इति मध्यस्वरित इत्यभिसंधेः); दे.(२, १७) अभि√इ+ईकः प्र. (तु. पाउ ४, २६; सा. ऋ ९, ९२, ५) इति धातुलोपनिर्भरः पक्षो वा, द्अ+भी- (<√भी) इत्यतः बस. सतः कप् प्र. इति वा (तु.टि. अनूक- यदनु उप.<√अञ्च् इति वादोऽप्यकिञ्चित्करः स्यात्) इति दिक् (तु.टि. प्रतीक-, समीक-)]।
[h]) विशिष्ट इह ऋ (६, ७४, ४) पामे.।
[i]) संदिग्ध-स्थलीयः संस्कारान्तरापेक्षः पा.।
[j]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६, २, ४९)।
[k]) 'आभींद्धः' इति दीर्घादिः मुपा. चिन्त्यः। आङ्पूर्वत्वस्य प्रसिद्ध्यभावादित्यभिसंधेः।

२¶अभी(भि-इद्ध>)द्धा[a]- -द्धा तै ५, १, ७, ३; काठ १९, ७; क ३०, ५.

*अभी(भि-इ)धू[b]- -भीत् शौ १९, २८, २°; पै १३, ११, २[d].

अभी(भि√इ)न्व्, अभि⋯इन्वतः, अभि⋯इन्वतु पै १२, ६, १२.

अभीप[e]-

अभीप-तस्[f](>ः) ऋ१,१६४,५२; तै ३, १, ११, ३†; ¶मै ३,२, ८; ४, ८, ५; काठ १९, १४†; २०, ९¶; २९, ३¶; ¶क ३१, ११; ४५, ४; शौ ७, ४०, १†.

अभीप्सत्- अभ्या(भि√आ)प् द्र.

अभीमोद-मुद्- अभि√मुद् द्र.

अभी(भि√ई)र्, अभ्यैरयन्त खि ४, १०, १, ३.

(*अभीर्द-,*अभीर्क-) अभीक-टि.द्र.

†अ-भीरु[g]- -रवः ऋ १, ८७,६; ८, ४६, ७; तै २, १, ११, २; ४, २, ११, २; मै ४, ११, २; काठ ८, १७; -रुः ऋ ४, .२९, २; -र्वम्[h] ऋ ८, ४६, ६.

?‡अ-भीरुण[i], ?अभीरुण- -णम् मा ६, १७; शौ ७, ९४, ३; पै १, ३३, ३.

अभीलाप-लप्- अभि√लप् द्र.

अभी-वर्ग- अभि√वृज् द्र.

१,२अभी-वर्त- अभि√वृत् द्र.

अभी-वर्ध- अभि√वृध् द्र.

अभीवार(भि-इव√*अर्)[j], ?अभीवार[k] शौ १, ३२, ४.

अभी-वृत- अभि√२वृ द्र.

[a]) १संख्याकादभेदेऽपि स्वरितत्वाऽभावः तै. द्र. नान्यत्र [तु. अभी(भि√इ)धू इत्यस्य तिङ्वृत्तम्]।

[b]) गस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)। 'घर्मः' इत्यस्य वि. द्र.।

[c]) 'अभीन्' [पपा.; ६अ+भी-(<√भी)]' इति 'दुर्हार्दः' इत्येतद्गामि वि. इति सा. [तु. नाउ. टि. यदनु पै. मूको. विज्ञापितं भवेद् यथेहाऽन्त्यस्य तकारस्य मूलतः सतः 'न्त्' इतीव विकारः समजनि (तकारस्य नकारसकारयोर्मध्ये व्यञ्जनभक्तिमात्रतया मिथ्याऽऽभासादित्यभिसंधेः)]। एस्थि. 'अभिसंतापय' इति वा (तु. WR.), 'अभिन्' इति वा (तु.सात.) यत् पिपठिषितं भवति, तदपुष्टमिति चालक्षणमिति च कृत्वा दुर्ग्रहं द्र.।

[d]) 'अभीन्' इति मुपा. यनि. मूको. संगमय्य प्रकृतिप्रत्यापत्तितया सुबोधः द्र. [ विकृतस्य सतः शौ. (तु. नापूटि.) तस्योच्छिष्टमात्रत्वाऽभिसंधेः]।

[e]) तु. टि. अन्वीप-।

[f]) तसिः प्र. तत्-स्वरश्च [वैतु. सा. शौ (७, ४०, १) अभि√पत्+क्विप् इति व्युत्पादुकः]।

[g]) तस. नञ्-स्वरः (पा ६, २,२)। उप. यद्र.।

[h]) अभि पूर्वरूपैकादेशाभावः। 'अभीरुअम्' इत्यभिसंधेः पाद ऊनाक्षरताया अपहतिः द्र. (तु. L ४०७)।

[i]) 'युद्वा शेपे उतानृतम्' इति बाह्वृचः (१, २३,२२) पादो भवति। तस्य 'युच्च शेपे अभीरुणम्' इति रूपान्तरं भवति (तु. यनि. मा.), तत्राप्युत्तरः पादार्धः 'अभीरुणम्' इति शाखान्तरे (तु. यनि. शौ.) स्वरभेदेन श्रूयते। अत्रोभयी दृष्टिर्भवति। एकं पदमिति च द्वे पदे इति च। प्रथमे कल्पे गस. उपप्रस्व. इति। को धा. कश्च प्र. इति। अभी(भि√ई)र्+(मा.) उनः प्र. उसं. प्र. स्वरश् चेति वा (शौ.) उनन् प्र. उसं. नित्स्वरश्चेति वा [तु.यक. धरुण- इति च वरुण- इति च; वैतु.उ.म.PW. प्रभृ.च तस. ६अ+?भीरुण- (=भीरु-) इति (उप.का व्यु. कथं च नञ्-स्वराऽप्रवृत्तिरिति त्वस्पष्टं भवति); उ. अभि√लू>रू इत्यपि विकल्पयति (पूप.दीर्घत्वम् इत्यभिसंधिः)]। अथ द्वितीयः कल्पो द्वे पदे इति। के ते इति 'भीरु (क्रिवि.)-ऋणम्'>*भीरु रुणम्>*भीरुणम्> अ° (यनि.) इति वा 'शेपे अभीरु ऋणम्'>°पे अभीरु (क्रिवि.)रुणम्>०पे अभीरुणम्> इति वा वर्णाऽऽमापत्तिलोपानुपातिसौवरसंक्रमश्च पक्षे छन्दोनुरोधप्रयोजितो मिथ्याप्रत्यायितपूर्वसवर्णैकादेशादिव विसर्ज्यमानोऽकारोपजनश्च द्र. (वैतु. सा. [शौ] अभि रुणम् (ऋणम्) इत्युपसर्गभूतस्य प्रथमस्य पदस्य दीर्घभावश्चाऽध्याहृतयोग्यक्रियायोगश्च)। एस्थि. भूयोविमर्शसहताऽस्य विषयस्य सुस्पष्टेति दिङ्मात्रम्।

[j]) अभ्युपचयभूतस्य'इव' इत्यस्य तदङ्गत्वेनोपसर्गवदुपचारः द्र. (यनि. सत्तात आलोचनार्थं तु. नाउ. टि.)।

[k]) =अभि-इव-आर (तिङो निघाताऽभावे तु. पा ८, १,६५; वैतु. ?WI.'अभि-इव-आर' इति)। एवं तावत् यनि. इवोपचिताऽभ्युपसृष्टत्वेन निष्पन्नमिदं क्रिप. स्यात्। न त्वेषा पा. वस्तुस्थितिः स्यात्। कथमिति। स्वारसिकार्थविघाताच्च शाखान्तरीयसंकेतान्तराच्चेति। कथं तावत् स्वारसिकार्थविघात इति। यद् विश्वं द्यौरभ्यवृधद् इति वा [तु. तैब्रा ३, ७, १०, ३); अभ्यवारीद् इति वा (तु. पै १, २३, ४)], तत् [विश्वं (कर्तृ)] पृथिव्यामधिश्रितम् इति हि यः स्वारसिकोऽर्थः प्रतीयेत, प्रथमे पादे 'विश्वम्' इत्यस्य कर्मतयाऽनुजिगमयिष्यमाणस्य सतः कर्तृतयोपगमात् तस्य विघातः स्यादिति। शाखान्तरीयाच्च संकेतात् (गपू. पै.) 'विश्वमन्याऽभिववार' (<अभि√२वृ यद्र.) इति प्रथमस्य पादस्य मूलभूतः

अभी(भि√ई)श्

अभी(भि-ई)शु[a]– -शवः ऋ १,३८, १२; ५, ६१, २; ८, ३३, ११; जै ४, २०,४†; शौ ८, ८,२२; २०, १३१, †४; पै १५, १२, ८; १६, ३१, २; –शुना शौ ६, १३७,२; पै १,६७,४; –शुभिः ऋ ५, ४४, ४; खि ४, ११, ६; ५, १५, ११; मा ३४, ६; –शुम् खि १, १२, ५; –शून् ऋ ६, ५७, ६; –†शूनाम् ऋ ६, ७५, ६; मा २९, ४३; का ३१, २, १०; तै ४, ६, ६, २; मै ३, १६, ३; काठ ४६, १; पै १५, १०, ६. [°शु- अन्°, दशन्>श°, स्मत्°, सु>स्व° हिरण्य°]

अभी(भि√२इ)ष्>च्छ्, अभीच्छात्[b] शौ १२, ३, ३४;४१; अभि··· इच्छात् शौ १२, ३, ४२.

ϕअभी(भि-इ)च्छ(त्>)न्ती[c]– -न्ती ऋ १, १६४, २७.

१¶अभी(भि-इ)ष्ट,ष्टा[d]– -ष्टः मै १, १०,१७; २०; काठ ८,७; ३६, ११; १४; क७, ४; –ष्टम् काठ २८, ५; क ४४, ५[२]; –ष्टाः मै १, १०, १७[४]; २०[२]; ३, ४, २; ४[२]; ८, १०; ९, ४; १०, ४; ४, ४, ८; १०; ८,३[२]; काठ ८, ५; ११, १०; २८,५[२]; ३६, ११[४]; १४[२]; क ७, १; ४४, ५[३]; –ष्टे मै ३, ४, २; ४.

२¶अभी(भि-इ)ष्ट[d]– -ष्टाः तै २, ४, १०, ३. [°ष्ट- अन्°]

¶अभी(भि-इ)ष्टि- -ष्ट्यै काठ ८, ८; २८, ३;४; क ७,२; ४४,३;४.

अभी-षह्-,अभी-षाह्-, अभी-षाह्य-, अभि√षह्, षाह् द्र.

अभी-षेणि-, अभि√षेणि द्र.

अ-भुज्[e]– -भुक् ऋ १०, ९५, ११.

*अ-भुजिष्ठ्य[f]– -ष्ठ्यः शौ २०, १२८, ४.

*अ-भुजिष्य[g]– -ष्यः खि ५,१२,४[h].

अ-भुञ्जत्[g]– -†ञ्जतः ऋ १, १२०, १२; ८, १, ६; कौ १, २९२; जै १, ३०, १०; –¶ञ्जन्तः तै ६, ५, ९, ४; मै १, १०, ७; काठ ३६, १; क ४४, ९.

अ-भूति[g]– -तिः शौ ११, १०, २१; १२,८,८; पै १६,८७,१; –तिम् खि २, ६,१,८; ¶मै ४,२, १३; –त्या शौ १६,७,१; –त्याः शौ ७, १०५, १; १६,५,५; ८,६; –त्यै मा ३०,१७; का ३४,३,४.

¶अ-भूत्वा[g] तै ५, ५, १, ६.

?अभेद्या[i] पै १३, ४, १३.

*अ-भोज्[g]-

अभोग्घ्(ज्-ह)न्[j]– -घ्नः ऋ १, ६४, ३.

(*अभ्यक-) अभीक- टि. द्र.

अभ्यक्त- अभ्य(भि√अ)ञ्ज् द्र.

?अभ्यगौः[k] पै ५, ९, ५.

अभ्य(भि√अ)घाय्, अभ्यघायति शौ ७, ७३, ३; १९, ५०, ४; पै १४, ४, १४; अभ्यघायन्त शौ ५, ६, ९; पै ६, ११, ११.

---

आथर्वणिकः पा. सन् काले विकारमुपागमदिति संभाव्यते (वैतु. गपू. तैब्रा. 'अभिवावृधे' इति)। यत्तु सा. अभीवारः (<अभि √१,२ वृ) इति प्र१ इति कृत्वा पठन्नस्य प्राति. सतो धातुविकल्पेन घञि प्र. निष्पत्तिमभिसंधाय वर्णकत्रयेण विभक्तिपरिणामादिप्रपञ्चं रचयेत्, तन्निताऽन्तमत्त्वोदत्तममिव स्यात्। थाथीय-स्वरे प्राप्ते उप. आद्युदात्तस्याऽसंभवादिति दिक्। विस्तरस्तु कुतूहलिभिराकरतोऽन्वेष्यः।

[a]) गस. उपप्रस्व. (पा ६, २, १३९)। उप. उन् प्र. उसं. नित्स्वरश्च [पाउ १, १०; पा ६, १, १९७ (तु. दे १, ५; वैतु. या ३, ९; दे १, ५; PW. प्रमृ. च अभ्य [भि√१अ]श्+शुण् प्र. इति)]।

[b]) 'अभि' इति कप्र. इतीव योजुकः W. चिन्त्यः (तु. सस्थ. टि. 'निधिपा- >पाः)'।

[c]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९)। यनि. योगस्य कृते तु. पपा.; वैतु. सा. PW. प्रमृ. च 'अभ्या(भि-आ)गात्' इति (द्वैस्वर्ययोगाच् चिन्त्याः)।

[d]) सस्व. कृते १अभीद्ध- २अभीद्ध- इत्यत्र यक. टि. द्र.।

[e]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. भावे क्विप् द्र. (वैतु. सा. कर्तरि प्र. इति कृत्वाऽनुपपन्नस्वरं तस. ब्रुवाणः)।

[f]) तस. नञ्-स्वरः (पा ६, २, २)। उप. √भुज् >*भुजिष्ठि->*भुजिष्ठ्य- इति तादर्थ्ये यता प्र. निष्पन्नं द्र. [तु. नाउ. (पाभे.) च WR. 'अ-भुजिष्ठ-' इति शोधश्च; वैतु. मूको. अघुजिष्ठ्य- (यदनु '√*घुज् >घुजिष्ठि- >*घुजिष्ठ्य-' इति कल्प्यमानम्)। एस्थि. अपि यत् पाण्डु. तदनु सात. चाऽन्याय्यद्वैस्वर्यदूषितमपि मूको. मुपा. प्रामाण्यं प्रापयत् तन्नाद्रियेत]।

[g]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[h]) मुपा. उत्तरादिस्वरः शोधार्हः द्र.। अलक्षणत्वाच, श्रुत्यन्तरसंकेतविरोधाच्च (तु. नापू. पाभे.)।

[i]) 'अमेध्यान्' इति शोधसापेक्षः मुपा.। 'हविर्दान्' इति शौ (४, ३७, ८) पाभे.।

[j]) उस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

[k]) संदिग्धः संस्करणान्तरापेक्षो मुपा.।

अभ्य(भि√अ)ञ्च्

अभ्य(भि-अ)ञ्च्- -भ्यञ्चः पै ६,२,५.

अभ्य(भि√अ)ञ्ज्, ¶अभ्यङ्क्ते तै २, ५,१,७; ६, १,१,५; काठ २३, १; ¶अभ्यंङ्क्ते तै ६, १, १, ५; मै ३, ६, २[३]; काठ २२, १३; क ३५,७; ¶अभ्यनक्ति तै ५,२, ८, ६; काठ २०, ७[३]; २३, १; २५, ८; क ३१, ९[३]; ३५, ७; ४०, १; ¶अभ्यंनक्ति तै २, ५, ११, ३; ५, २, ८, ६; ?अभ्यनुक्ति खि ४, १०[२], १; †अभ्यंञ्जते ऋ ९, ८६, ४३; कौ १, ५६४; २, ९६४; जै १, ५७, ११; ४,२०,८; शौ १८,३,१८.

अभ्यं(भि-अ)क्त,क्ता[a]- -क्तः मै ४,९, १९; –क्ता शौ १०, १, २५; पै १६, ३७,५; –क्ताः खि ४, ५, ३०[b]. [°क्त- अन्°, सु-स्व्°]

अभ्यु(भि-अ)ञ्जन[c]- -°न पै ७,१५, ८; –नम् ऋ ८, ३, २४; ७८, २; १०, ८५, ७; ¶तै २, ५, १, ६[२]; ¶मै ३, १, २; शौ ६, १२४, ३; १४, १, ६†; पै १६, १११, १२†; –नस्य पै ४,१०, ८. [°न- आञ्जन°]

ϕअभ्य(भि-अ)ञ्जान[d]- -नः ऋ २, ८, ४; ¶मै ३, ६, ६.

¶अभ्य(भि-अ)ति√क्षर्, अभ्युतिक्षरन्ति मै ४, ४, ४[२].

¶अभ्य(भि-अ)ति√मुच्, अभ्यतिमुच्यते काठ ३०, ७.

¶अभ्य(भि-अ)ति√रिच्, अभ्युतिरिच्यते तै ७, १, ५, ६; मै १, ११, ९; २, २, १३; ४, ७,६[२]; काठ १४, १०; २६, ४; २८, ९; ३४, ४; क ४१, २; ४४, ९; अभ्युतिरिच्यन्ते मै ४,७,४.

¶अभ्य(भि-अ)ति√ष(<स)ज्,ञ्ज्, अभ्यतिषजति काठ १२, ५.

अभ्य(भि-अ)ति√सृज्, अभ्युतिसृजामः शौ १०, ५, १५–२१; १६, १, ५; ¶अभ्यत्यसृजन्त काठ २४, ७; क ३७, ८.

¶अभ्य(भि-अ)त्यू(ति√१ऊ)ह्,अभ्युत्यूहति मै २, ३,७; अभ्यत्यूहत् काठ १२, ५.

अभ्य(भि-अ)ध्व[e]- -ध्वे शौ ४, २८, २; पै ४, ३७, २.

अभ्य(भि-अ)नु√दिश्, अभ्यनुदेष्टु पै ५, ११, ५; ९.

¶अभ्य(भि-अ)नु√वच्, अभ्यनूवाच तै ५, ६, ६, ३; काठ २८, ४; क ४४, ४.

अभ्यनूच्यते तै ७, १, ५, ५.

अभ्य(भि-अ)प√क्रम्, अभ्युपक्रमीः शौ १२, २, १८.

अभ्यपा(प√अ)न्

अभ्य(भि-अ)पान- -नम् पै ८,९,७.

अभ्यपे(भि-अप√इ), अभ्युपेहि शौ ७, ९३, १.

?अभ्यप्रयुङ्ग[f] पै २, ६५, ३.

अभ्य(भि√अ)म्,अभ्यंमीति[g] मा २२, ५; का २४,१,५; तै ७, ४,१५, १; मै ३,१२,१; काठ ४४, ४; †अभ्यंमीषि ऋ १०,८६,८; शौ २०,१२६,८; अभि ··· अमुन्ति ऋ ७, २५, २[h]; अभ्युमन्त ऋ १, १८९, ३; मै ४, १४, ३†.

अभ्य(भि√अ)य्

¶अभ्य(भि-अ)य्य काठ १३,८.

अभ्य(भि√*अ)र्धृ

*अभ्य(भि-अ)र्ध-

अभ्यर्ध-यज्वन्[i]- -ज्वा ऋ ६, ५०, ५.

¶अभ्य(भि-अ)र्धस्[j]- -र्धः तै २,३, ७, १; मै २, ५,४[३]; ३, ६, ६; ८, ३; काठ १०, ११; १३, ३.

?अभ्यर्भवम्[k] पै १, २६, ५.

†अभ्य(भि√अ)र्षृ, अभ्यंर्षति ऋ ९, ६६, २२; अभ्यंर्षन्ति ऋ ९, ६२, ३; ६३, ६; ८५, ७; कौ २, १८२; जै ३, १७, ३; अभ्यर्षसि ऋ ९, ६४, ८; कौ २, ३०९; जै ३,२५,५; अभ्यंर्ष ऋ ९, ८५, ४; ८.

†अभ्यु(भि-अ)र्षत्[l]- -र्षन् ऋ ९,

a) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९) ।

b) सुपा. स्वर-भ्रेषः द्र. ।

c) गस.ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

d) गस.शानजन्त-कृत्-प्रस्व.(पा ६,१,१६३;२,१३९)। क्रियाफलस्य कर्त्राऽऽत्मगामित्वेनैव सुसंगतत्वात्तथा न पश्यन् अभिं पृथक् अव्य. इतीव क्विप. चान्तर्भावितण्यर्थमितीव कृत्वा व्याचक्षाणः सा. चिन्त्यः ।

e) प्रास. समासान्तः अच् प्र. चित्-स्वरश्च (पा ५, ४, ८५; ६, १, १६३) ।

f) अकिंचित्-करः संस्कारान्तरापेक्षः पा. ।

g) उ.अभि√मी इत्यस्य रू.इति । तच् चिन्त्यं भवति ।

h) 'अभि'इति स्वाप्र.अव्य.इतीव कृत्वा यत् सा.'मर्तासः' इत्येतत्-समानाधिकरणतया निनीषति, तदप्रमाणम् ।

i) उस. ङ्वनिबन्त-कृत्-प्रस्व. । अत्र नाउ. एव पूप. इत्यैकदेशिकं मतम् (तु. MVG २४७) अपुष्टमिव द्र. ।

j) गस. उप. असुन् प्र. कृत्-प्रस्व. च [पा ६, १, १६३; २, १३९; वैतु. भा. अकारान्तस्य प्राति. प्र१ इत्यभिवादुकः] । वा. क्रिवि. भवति ।

k) शोध-सापेक्षः सुपा. चिन्त्यः [तु. 'अध्युत्कृता' इति शौ (१, २४, ४) पाभे.] ।

l) गस. शत्रन्त-कृत्-प्रस्व. [पा ६,१,१८६; २,१३९ (तु. वें. सा.; वैतु. PW. प्रभृ. अगतिं मन्यमानाः)] ।

१६,६φ;६२,१९φ; १०६,१३; कौ १, ४८९φ; जै १,५१, ३φ; ३,५,५; १२, ७.

अभ्य(भि√अ)र्ह्, अभि···अर्हत्[a] पै १४, ४, २.

†अभ्य(भि√अ)व्, अभि···आवीत् ऋ ९, ९७, ३९; कौ २, ७०९; जै ३, ५८, ६.

¶अभ्य(भि-अ)व√क्रन्द्, अभ्यवक्रन्दति काठ २५,७; क ३९,५.

अभ्य(भि-अ)व√क्षि,अभि···अव···क्षेषि ऋ ७, १८, २?[b].

अभ्य(भि-अ)व√चक्ष्
अभ्यव-चक्षाण- -णौ पै १२,३,४.

¶अभ्य(भि-अ)व√चर्, अभ्यवचरति काठ ३६, १४.
अभ्यव-चारम् अनु >न्व्°
अभ्यव-चारुक- अन्°

अभ्य(भि-अ)व√तन्, अभ्युवतनोमि शौ ८, ८, २४.

¶अभ्य(भि-अ)व√दह्, अभ्युवदहेत् मै १, ६, ६.

अभ्य(भि-अ)व√निज्, अभ्युवनिक्षि शौ १०, ५, १५–२१; १६, १, ४; पै १६, १२९, १–१०.

¶अभ्य(भि-अ)व√नी, अभ्युवनयेत् काठ ३५, १६; क ४८, १४.

अभ्य(भि-अ)व√पश्, अभ्यवपश्यसि, अभ्यवपश्य पै ८,२०,७.

अभ्यवर- कुशिक°

¶अभ्य(भि-अ)व√रुह्, अभ्युवरोहति मै १, ११, ८[2]; ४, ४,६[2]; काठ १४, ८[3].
अभ्यव-रोहत्[c]- -हन् मै ४, ४,६.

अभ्य(भि-अ)व√सृज्, ¶अभ्यवसृजन्ति काठ २१, ४; ९; क ३१, १९; अभ्युवसृजामि शौ १६, १, ६.

अभ्य(भि-अ)व√स्ना
अभ्यव-स्नात- -तेन पै ९,२२,१८.

अभ्य(भि-अ)व√हृ, ¶अभ्युवहरति मै ४, ४, ६[2].
अभ्य(भि-अ)व-ह्रियुमाण[d]- -णः मा ८, ५९; का ९, ७, ७.

¶अभ्यवे(भि-अव√इ), अभ्यवैति मै ३,६,२;७;८,४; अभ्यवयुन्ति मै १,१०,१३[2]; मै ४,८,५[2]; अभ्युवयन्ति मै ४, ८,५[4]; काठ २९, ३; क ४५, ४; अभ्यवैत् काठ ८, १०; क ७, ६; अभ्यवायन् तै २, ६, ३, २; काठ २४, ७; क ३७, ८; अभ्यवेयुात् मै ३, ८, ४; अभ्यवेयुः मै ४, ८, ५[2]; काठ २९, ३[3]; क ४५, ४[3].

अभ्यवा(व-आ)यन°- -नम् मै ३,८, १०.

अभ्यवे(व-इ)त्य[f] तै १, ५, ४, ४.

अभ्यवे(व-इ)त्य[g]- -त्यम् तै ३, १, ९, ६.

अभ्य(भि√१अ)श्, अभ्यंश्नुते, अभ्यश्नुते तै ७, १, १, २¶; †अभि···अश्नोति ऋ ३, ११, ७; कौ २, ९०७; जै ४, १५, ३; अभ्यंश्नवातै शौ १२, ३, ३४; अभ्यश्नुवातै पै १, ७०, १; अभ्यंश्नवाव ऋ १, १७९, ३.
अभ्यानशे पै ३, २, ५[h]; अभि···आनशुः ऋ २, २४, ६; अभ्यांनश्म ऋ १०, ३१, ३; अभि···अश्याः ऋ ४, ५, ७; †अभि···अश्याम् ऋ १, १५४, ५; १६६,१४; ६,१३,६; मै ४, १२,१; अभ्यंश्याम ऋ ७,९३, ८; अभि···आष्ट तै १, ३, १४, ६[2i]; काठ १०, १३[j]; अभि···आष्ट्र शौ ४, १, ५[k]; पै ५, २, ४[l].

a) 'अुति···अरुहत्' इति शौ (१९, ४९, २) पाभे. ।

b) विमर्शसहं स्थ. द्र. [=जनिभी राजेव युभिस्त्वम् (अस्माकं स्तुतीरिव)विदुर् अभ्यवक्षेषि(=दिव अवेत्याऽस्मदभिमुखीभूयेहैव निवससि);तु.वें.'अभ्युपगच्छसि'इति; वैतु. सा.(सुपा.?) अभि√अव्>'अभि···अुव'(=लोटि मपु१) इतीव पृथक् कुर्वाणः; ORN. सा. कल्पं कर्माश्रुतेरवगणयन् समानमत्तोदत्तममपि सद् असत्-कल्पान्तरत्रयमपरमुपदर्शुकश्च ऋ १,७१,१०; ७, ६४, २ इत्यत्रत्यन्यायमनुसिसीर्षुरपि संस्तमन्याय्यमिवाऽऽभासुकश्च 'क्षु-' इति दिनपर्यायीकृत्य अुव >उप इति पा. परिवर्तुकश्च] ।

c) गस. शत्रन्त-कृत्-प्रस्व. (पा ६,१,१८६;२,१३९)।

d) उप. कर्मणि शानच् प्र. । शेषं नापूटि. द्र. ।

e) गस.ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

f) सस्व. नापूटि. दिशा द्र. । उप. ल्यप् प्र. ।

g) गस.क्यबन्त-कृत्-प्रस्व (पा ३,१,१०९;६,२,१३९)।

h) ब्यानशे इति (शौ ३, ७, ६) पाभे. ।

i) एकतरत्र तु. अनुपदमेव याज्यात्वेन श्रूयमाणं 'बुध्नाद् यो अग्रमभ्यार्ति' इति यदनु यनि. √१अश् इत्यस्य योगेन कर्माकाङ्क्षापूर्तेरपरिहार्यत्वेनौचित्यदर्शनाद् 'अभि' इति तद्युक्तः ग. इत्येव साधु द्र. [वैतु. भा. सा. K. च 'अभि' इति कप्र. 'अुग्रम्' इत्येतदन्वित इति]।

j) नापूटिदि. भा. प्रभृ. समानपक्षत्वेन 'अभि' कप्र. इत्यातिष्ठमानः SIM. उपेक्ष्यः ।

k) आख्याते रेफोपजनः प्रामाणिकः द्र. [तु. मूको. पपा. च; वैतु. सा., WR., शाखान्तरीयः पाभे. च (=नापू. रू.)] । अभेर्गतित्वे एपूटि. एव प्रमाणं स्यात् । आलोच्यश्रुत्यभेदात् (वैतु. सा. W. चासौ कप्र. इति) ।

l) नापू. स्थ. आलोच्यविषयस्य साम्यं द्र. ।

१अभ्य(भि√१अ)स्, †अभ्यस्ति ऋ ४, २१, ७. ८, २४, १९; २१; कौ १, ३८७; जै १, ४३, ७; ४, १७, ७; ९; शौ २०, ६५, १; ३; अभि…अस्ति ऋ ८, १, २७[a]; अभि…सन्ति ऋ ३, १६, २; अभ्यसि ऋ ६, २५, ५; †अभि…असि ऋ ८, ९९, ५; ९, ५९, ४; मा ३३, ६६; का ३२, ५, १२; कौ १, ३११; २, ९८७; जै १, ३२, ९; शौ ११, १, ६; २०, १०५, १; पै १६, ८९, ६$; अभ्यस्मि ऋ ८, १००, ४; अभि[२]…अस्मि ऋ १०, ४८, ७; अभिष्मः ऋ ८, १०२, ३; ¶अभिस्मः मै १, १०, १८; काठ ३६, १३; अभ्यसत् ऋ १, १५६, २; २, २६, १; †अभ्यस्तु ऋ १, ९४, ८; २, ४, २; २८, १; ४, १२, १; ८, १, ३२; पै १२, १, ८; अभिसन्तु ऋ ७, १, १०; अभि…असानि शौ ६, ९७, १; अभि…असाम ऋ १०, ५३, ४; अभिष्यात् ऋ १०, ११७, ७; अभिष्युः ऋ १०, ९९, १५; अभिष्याः ऋ १०, ६९, ६; काठ २, १५; अभिष्याम् ऋ ७, १, १३; अभिष्याम ऋ १, १०५, १९; १७८, ५; २, ८, ६; ३, १, १६; ५, ४, १; ९, ३५, ३; १०, १३२, २; खि ५, ७, ३, १०; †तै १, ४, ४६, ३; मै १, ४, १४¶; ४, १२, ४†[b]; १३, ८†; काठ ७, १६†; १२, १४†; १९, १३; कौ १, ३३६; जै १, ३५, ५; शौ ७, ९८, १; १३, १, २२; †अभि…स्याम ऋ ७, ४८, २; ५६, २४; काठ २३, ११.

अभि…आस ऋ ४, २७, २.

¶२अभ्य(भि√२अ)स्, अभ्यस्येत् काठ २१, ७.

अभ्य(भि-अ)स्त- हस्त°

?अभ्यस्यनहमि[c] पै ३, २८, २.

?अभ्या[d] पै १, ८६, ७.

अभ्या(भि-आ)√क्रम्

अभ्या-क्रामम्[e] शौ १०, ७, ४२.

अभ्या(भि-आ)√गा, अभ्या(भि-आ) गात्†[f] शौ ९, १५, ५; पै १६, ६८, ५.

अभ्या(भि-आ)√चर्

अभ्या-चार[g]- -रम् शौ १०, ३, २; पै १६, ६३, २.

अभ्या(भि-आ√अ)ज्, अभ्याजति खि ३, ७, १[h]; ¶अभ्याजन् मै १, ६, ३.

¶अभ्या(भि-आ)√तञ्च्, अभ्यातनक्ति तै २, ५, ३, ६.

¶अभ्या(भि-आ)√तन्, अभ्यातनुते तै ३, ४, ६, २; अभ्यातन्वत तै ३, ४, ६, १; २[२].

अभ्या-तान[g]- -नाः, -नान् तै ३, ४, ६, १; -नानाम् तै ३, ४, ६, ३; -नैः तै ३, ४, ६, २[३].

अभ्यातान-त्व- -त्वम् तै ३, ४, ६, २.

¶अभ्या(भि-आ)√२दु

अभ्या-दाव्य[i]- -व्यः, -व्येन मै १, ८, ९.

¶अभ्या(भि-आ)√द्रु, अभ्याद्रवति मै ४, ६, १[२].

अभ्या(भि-आ)√धा>दधा, ¶अभ्यादधाति मै ३, ४, ५; काठ २२, २; ६; क ३४, १; अभ्यादधामि?[j] मा २०, २४; का २२, २, १; ¶अभ्यादध्यात् तै २, २, १०, ५; ५, ८, ६.

अभि…आधित खि ५, ७, २, ८.

¶अभ्याधीयते मै १, ८, ७.

अभ्या (भि√आ)प् > अभी (भि√ई) प्स,

¶अभीप्स(त् >)न्ती- -न्तीः काठ २७, १; क ४२, १.

---

a) √१वा २वा दंस्(यद्र.) > १वा २वा दंसन-(यद्र.) > -ना (न.द्वि ३) इत्यत्र कर्म द्र. [वैतु. सा. कर्माकाङ्क्षापूर्त्यर्थं शत्रु-शब्दमाक्षिपँश्च 'दंसना' (तृ १) < √१दंस् इत्येवं वदंश्च; GW. चानुपसृष्टं क्विप. इति संगिरमाणोऽवशिष्टांऽशे सा. समानः]।

b) 'अचिष्याम' इति मुपा.? (तु. ऋ १, १०५, १९)।

c) संदिग्ध-स्थलीयः पा. भवति संस्करणान्तरसापेक्षः।

d) मुपा. अभ्य् आ > अद्या इति शोधः द्र.। [तु. मौलिकतरः मूको. (√मृड् इत्यस्य लक्षणार्थया 'नः' इति च विभक्त्या योगे सति निराकाङ्क्षत्वे स्वतः सिध्यमाने 'नः' इति द्वि. स्यात्। तद्योगार्हतया 'अद्या' > 'अभ्या' इति मूको. प्रान्तीयः शोधश्चाऽऽस्थीयेत, मुपा. अन्वित्यस्याऽन्यथासिद्धत्वाच्च, आ√मृड् इत्यस्य निगमान्तराऽश्रुतपूर्वत्वादप्रमाणत्वाच्चेत्यभिसंधेः)]।

e) गस. णमुलन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)।

f) 'अभि। आ। अगात्' इति ऋ (१, १६४, २७) पाभे.। तथात्वेऽभिः स्वाप्र. अव्य. द्र.।

g) गस. घञन्ते कृति थाथादि-स्वरः (पा ६, २, १४४)।

h) 'अभ्यायुति' इति मूको. पाभे.।

i) गस. ण्यदन्त-कृत्-प्रस्व. (पा ६, १, १८५; २, १३९)।

j) पपा. यद् अभेः स्वरः प्रादर्शि, तदतन्त्रं द्र. (तु. उ. PW. प्रभृ. 'अभि-आदधामि' इतीव निनीषवः)। यद्वा ६अ+(√भी>) भी- (बस.) > अभि (न. द्वि १ = अभीरहं यथा स्यां तथेति कर्तृविशेषणपरम्परितं क्रिवि. स्यादिति विमर्शविषयतां भजेत)।

अभ्या(भि-आ) √पृ, अभि(*आपप्रिथ)[a] ऋ ३, ३०, ११.

¶अभ्या(भि-आ) √प्लु

अभ्या-प्लवमान- -नात् काठ ७, ६; क ५, ५.

?अ···भ्याम्[b] पै १, ७६, ३.

अभ्या(भि-आ) √१यम्, ¶अभ्यायच्छति मै २,१,८; काठ १०,११; २१,१; ¶अभ्यायच्छन्ति मै २, १,८; काठ १०, ११; ¶अभ्यायच्छन् मै ४, ६, ८.

अभि···आयमत्‡[c] कौ १, १२८; जै १, १४, ४; अभि···आयमन् ऋ ८, ९२, ३१.

अभ्या(भि-आ)यंसेन्य[d]- -न्या ऋ १, ३४, १.

¶अभ्या-यत्य[e] मै ३, ८, ३; ४, २, १२.

अभ्या(भि-आ) √या, अभि···आयाहि ऋ ५, ५१, ५[f]; अभि[2] (आयाहि) ऋ ५, ५१, ६; ७.

¶अभ्या(भि-आ) √यु, अभ्यायुवते मै ४, ५, ६.

अभ्यायुक- १अभी द्र.

अभ्यारम् अभ्यृ(भि √ऋ) द्र.

¶अभ्या(भि-आ) √रुध्, अभ्यारुणत् काठ २३, १०; क ३७, १.

¶अभ्या (भि-आ) √रुह् > रोहि, अभ्यारोहति तै २, ५, ५, ६; अभ्यारोहति तै २, ५, ५, ५; ५,६,६,४[2]; ८,३[3]; ६,२,३,३; मै १,९,८; ३,३,९;४,६;६,१; ६; ८,१०; ४,[?]३,१;४,९; १०; काठ ९, १५; २३, ३; शौ ३, २९, ३$; अभि···आरोहति तै १, ५, ९,५; अभि[2]···आरोहति मै १, ९, ८; काठ ९, १५; अभ्यारोहन्ति तै ७, २, १, १; ३, ५, २; ३; ७, ३; ४; ९, २; ३[2]; १०, १; ४, १, २[2]; ५; ३, ५; ४, २[2]; ३; ५, १.

अभ्यारोक्ष्यति मै ३, ४, ६.

अभ्यारोहयति काठ २४, ६; २६, ४; २७, ६; क ३७, ७; ४१, २; ४२, ६.

अभ्या-रुह्य[e] तै ७, ४, ४, १.

अभ्या-रूढ[g]- -ढः तै १, ५, ९, ५; २, ५, ५, ६; ७, ४, ५, १. [°ढ- अन्°]

अभ्या-रोह- अन्°

अभ्या-रोहत्[h]- -हन् मै ४, ४, ४; -हन्तः तै ७, ५, १, ६; काठ ३३,७[2]; ८; $शौ ४, १४, ६ϕ[i]; -हन्तम् काठ २४, ६.

.अभ्या-रोहु(क>)का[j]- -का मै ३, ८, ७; १०.

अभ्या(भि-आ) √वह्

अभ्या-वोढृ- -ढा पै ८, ११, २.

अभ्या(भि-आ) √वृत्>वर्ति, अभ्यावर्तते, अभ्यावर्तते मै ३, २, १¶; अभ्यावर्ते शौ १०, ५,३८-४१; अभ्यावर्तस्व तै ४, २, ७,१; मै २, ७, १४; काठ १६, १४; क २५,५; शौ ७,११०,१; ११,१, २२; पै १५, २,६; १६,९०,९; अभि···आवर्तस्व[k] तै ४, २,१, २; मै १, ७, १; अभ्यावर्तध्वम् तै ५, ७, ४, ४; ¶अभ्यावर्तन्त मै ३, २, ४.

अभि···आ(आ-अ)वर्त ऋ ७, ५९, ४.

अभ्याववृत्स्व तै ४, २, ५, ६[l]; मै २, ७, १२; काठ १६, १२; क २५, ३; शौ ३, १७, ९.

---

[a]) 'नः (=अस्मान्) इषश्च वाजांश्चाभ्यापप्रिथ' इति स्वारसिकं वा. अनभिरोचयन् 'अस्माकं समीके त्वम् इषः (=तिष्ठासुः ?) सन् वाजान् (=अश्वान् ?) अभिप्रेरय' इत्येवमप्रसिद्धं चाऽन्यमर्थं च वा. ब्रुवाणः सा. चिन्त्यः ।

[b]) त्रुटितमध्यशरीरं पदं भवति ।

[c]) बाह्वृचस्य पाभे. कृते तु. नाउ. रू. ।

[d]) गस. उप. एन्यः प्र. सकारोपजनः कृत्-प्रस्व. च (तु. पाउ ३, ९८; ६, २, १३९) ।

[e]) गस.ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[f]) तिसृष्वप्यृक्षु गायत्रीमानादतिरिच्यमाने 'अभि। प्रयः' इति पदे मन्त्रगतार्थस्यानुवादकतया च तत्परिणतार्थतया च देवताप्रेरणात्मकेऽर्थे पर्यवस्यतः । अतः 'अभ्यायाहि' 'अभ्यागच्छतम्' इत्याद्याकारकोऽन्वयो द्र. । सप्तम्यामृचि 'प्रयः' इति कर्मपदं कर्तृविशेषणतया नियुञ्जानो 'यन्ति' इति क्रियया चाऽभेर्योगं पश्यन् सा. नितरामुपेक्ष्यः ।

[g]) सस्व. कृते तु. टि. अभिनिषण्ण- ।

[h]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६,१,१८६;२,१३९)।

[i]) 'नाकम् (=दिवम्) अभ्यारोहेम ततश्च सुकृतलोकभूतं स्वर् गच्छेम' वा.द्र.(तु.एपू.मन्त्रो यत्र दिवो नाकस्य पृष्ठात् [=पृष्ठं प्राप्य] स्वर्गमनं साक्षाच्छ्रावितं भवति; वैतु. सा. 'स्वर्' इत्यस्य 'नाकम्' इत्यनेन सामानाधिकरण्यं दर्शुकः; PW. प्रभृ. च अभिः कप्र. इति कृत्वा 'नाकम्' इत्यनेनैनमभिसंबन्धुकाः) ।

[j]) गस.उकञन्त-कृत्-प्रस्व. (पा ६,१,१९७;२,१३९)।

[k]) अभिः कप्र. अभिलक्षणार्थे इति यथा सा. आह, तन्न । तथा सत्य् आभिमुख्यविशिष्टाऽऽवर्तनस्याऽऽशंसनविषयत्वे घटकतया सहश्रुतिमतः 'अभ्यावर्तिन्-' इत्यस्य वि. वैयर्थ्याऽऽपत्तेरिति यावत् ।

[l]) पपा. स्वरसंधौ शाखाभेदो भवति [तु. टि. २अभि (मा १२, ७०)] ।

¶अभ्यावर्तयन्ति मै ३, २, ५; काठ ८, ५[२]; क ७, १[२]; अभ्यावर्तये[a] पै १६, १३२, २.
अभ्या-वर्तिन्[b]- -०र्तिन् मा १२, ७; का १३, १, ८; तै ४, २, १, २; मै १, ७, १; २, ७, ८; काठ १६, ८; १९, ११; २२, १२; क ३१, १; पै १, ४१, १; -र्तिने ऋ ६, २७, ५; -र्ती ऋ ६, २७, ८.
अभ्या-वृत्त[c]- -त्तः मा ८, ५८; का ९, ७, ७; काठ ३४, १६.
¶अभ्या-वृत्य[d] तै ६,२,५,५[२]; काठ ८, ४[२]; २३, ५[२]; क ६, २.
¶अभ्या(भि-आ) √शंस्, अभ्याशंसेत काठ ११, २.
अभ्या(भि-आ) √सृ
अभ्या-सरि(न्>)णी- -णीः काठ २५, ५.
¶अभ्या(भि-आ) √स्था > तिष्ठ, अभ्यातिष्ठति मै १, ११, ७[२]; ४, ४,५; काठ ८, ८; १४, ७; २३, ९; क ७, २; ३६, ६.
¶अभ्या(भि-आ) √ह्वे, अभ्याह्वयते तै ३, २, ९, १; ४; ७.
¶अभ्यु(भि √उ)च्, अभ्युच्यति मै १, ८, ९; अभि···उच्यति तै २, २, २, ५[२].
¶अभ्यु(भि-उद्>)त् √क्रम्, अभ्युत्क्रामति काठ ६, ४; ८, ७; क ४, ३; ७, ४; अभ्युदक्रामन् काठ ८, ७[४]; क ७, ४[४].
अभ्युत्था (भि-उद् √स्था) > तिष्ठ, अभ्युत्तिष्ठति काठ ३४,९¶; अभ्युदतिष्ठत् शौ १५, ८, २; अभ्युदतिष्ठन् काठ ३४, ९¶.
अभ्यु(भि-उद्>)त् √ सद् > सीद, सादि, अभ्युत्सीदति मै १, ७, २; ३[२].
*अभ्युत्-सादया[e]-
*अभ्युत्सादयां √कृ[f], अभ्युत्सादयामकः मै १, ६, ५.
¶अभ्यु(भि-उद्>)त् √सृज्, अभ्युत्सर्जेत् तै ६, २, ९, १.
अभ्युत्सृजति काठ २०, ३[२]; क ३१, ५[२].
अभ्युदि(भि-उद् √इ), ¶अभ्युदेति मै १, ८,९; २, २,१३; ४, १,९; अभ्युदिहि शौ ३,२०,१०;१७, १, ६; ७; ¶अभ्युदैत् मै २, ५, ३; ¶अभ्युदियात् मै १, ८,७[२]; ९[३]; २, २, १३; ¶अभ्युदियात् मै ३, ६, ९; काठ २३, २; क ३५, ८.
अभ्यु(भि-उ)दित- अन्°, सूर्य°
अभ्युदे(भि-उद्-आ √इ), ¶अभ्युदैति मै ३, ९, १.
अभ्युदे(दा-इ)त्य[d] शौ १५, ११,२; १२, २.
अभ्यु(भि-उ)द् √वस् > वासि, अभ्युदवीवसः मै १, ८, ४.
¶अभ्युद्धृ(भि-उद् √हृ), अभ्युद्धरन्ति मै १, ८, ८; अभ्युद्धरेयुः तै २, २,४,६; अभ्युद्धरेयुः मै १,८,८.
अभ्यु(भि √उ)द्, न्द्, अभि···उनत्त ऋ ५, ४२, ३.
अभ्यु(भि-उ)त्स[g]-
*अभ्युत्सि(न्>)नी[h]- -नी पै १२, ३, ५.
†अभ्यु(भि-उ)न्दत्[i]- -न्दतः[j] ऋ ९, ६१,४; कौ २,१३७; जै ३, १३, १३.
¶अभ्यु(भि-उ)प √क्रम्, अभ्युपक्रामति मै ३, ९, ७.
¶अभ्यु(भि-उ)प √धाव्, अभ्युपधावेम मै १, ७, २; काठ ८, १५; क ८, ३.
¶अभ्युपा((भि-उप-आ) √कृ, अभ्युपाकुर्यात्, अभ्युपाकुर्यात् मै४,८,८.
अभ्युपा(भि-उप-अ)व √हृ, अभ्युपावहरामि मा १०, २५.
¶अभ्युपा(भि-उप-आ)वृत्, अभ्युपावर्तते मै १, ४, ७; अभ्युपावर्तेमहि मै १, ७, २.

[a]) 'स्वमभ्यावर्तये' इति मौलिकस्य मकारस्य च्युतस्य सतः पुनः पा. शोधः द्र.।
[b]) गस. णिन्यन्त-कृत्-प्रस्व. (पा ६, २,१३९)।
[c]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।
[d]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।
[e]) गस. ण्यन्तात् स्त्रियां भावे शः प्र. उसं. [पा ३,३, १०७ ('णेः शश्च' इत्यभिनवं शिष्येतेत्यभिसंधिः) तु. नाउ. टि.]। कृत्-प्रस्व. (पा ६, २, १३९)।
[f]) गस. उसं. [नापू. समाननिष्पत्तिकस्य शब्दजातस्य परिग्रहार्थमभिनवगतिसंज्ञाविधानार्थं च 'अभ्युत्सादयादयश्च द्वितीयान्ता विभक्तेरलुक् च' इति 'ते प्राग् धातोः' (पा १, ४, ८०) इत्यतः प्रागनुशिष्यमित्यभिसंधिः]। किमिति प्रागभिमतं निपातनम् (पा ३,१, ४२) नोक्तमिति। यनि. लक्षणसंभवादिति। एस्थि. अपि 'आम्' इत्यस्य कृञनुप्रयोगस्य चैव लिटोऽन्यत्र उसं. स्यादित्येवं किमिति नोक्तं भवतीति। लाघवात् यनि. एव मौस्थि. नेदीय इव स्पर्शुकं स्यादिति दिङ्मात्रम् (तु. टि. √गम् > गमि > *गमया √कृ)।
[g]) कर्तरि सः प्र. (तु. पाउ ३, ६९)।
[h]) मत्वर्थीयः इनिः प्र.। ततश्च स्त्री. ङीप् (पा ५,२, ११५; ४,१,६)। एवं सति विगतसंदेहं स्थलं स्यात्।
[i]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, २, १३९)।
[j]) विभक्तिरुदात्ता (पा ६, १, १७३)।

†अभ्युपे(भि-उप√इ), अभि···उपयन्ति ऋ ६, २८,४; काठ १३, १६; शौ ४, २१, ४[a].
अभ्युप्य अभि√वप् द्र.
¶अभ्यु(भि√उ)ष्
अभ्युँषस्(>:)[b] काठ २६, १; क ४०, ४.
अभ्यूढ- अभि√वह् द्र.
अभ्यू(भि√ऊ)र्णु, अभ्यूर्णुते शौ १४, १,२७‡[c]; अभ्यूर्णोति ऋ ८,७९, २; अभि····ऊर्णोमि शौ १८,२, ५२; †अभि····ऊर्णुहि ऋ १०, १८, ११; शौ १८, २, ५०; ५१; ३,५०; ४, ६६.
अभ्यूर्ण्वा(न>)ना[d]- -ना ऋ ५, ४१, १९.
¶अभ्यू(भि√१ऊ)ह्[e], अभ्यूहति तै ५,२,३,७[2]; मै ३, ४,५[3]; ७,४; ४, १, ९; काठ २२, २[3]; ३१, ७; क ४७, ७; अभ्यूहति मै ३, ७, ४[2]; काठ २०, १; क ३१, ३; अभ्यौहताम् काठ ३६, १०.
अभ्यृ(भि√ऋ>√*अर्), अभ्यर्ति तै २, ३, १४, ६; पै ५, २, ८.
†अभि···ऋणोति ऋ १,३५,९; मा ३४, २५; का ३३, १, १९; अभ्यृणोः पै १३, १, १५.
अभ्य॑रुः ऋ ३, १, ४.
†अभ्यारम्[f] ऋ ८, ७२, ११; खि २, १३, १; कौ २, ९५३.
¶अभ्यृ(भि-२ऋ)ति-
√अभ्यृतीय, अभ्यार्तीयत काठ १०, ११.
अभ्यृ(भि√ऋ)ऋज्, अभि····ऋज्यते ऋ १, १४०, २.
अभ्ये(भि-आ√इ), अभ्यैति खि ३, २१,१; मा १७, ४७[g]; का १८, ४, १५; ¶काठ २४, ६; २८, ४[h]; ३२,२; ¶क ३७,७; ४४, ४; पै ३, ५, ६; अभि····एति शौ ३, २, ६; अभ्यैमि शौ ६, ११८, ३; पै १६, ५०, ५; अभ्येहि शौ ८, २, २; पै १६, ३, २; अभि····एहि पै २, २३, १.
?¶अभ्योपदधाति[i] काठ २०, ७; क ३१, ९.
अभ्र- √*अप्>२अप्- द्र.
अ-भ्रातृ[j]- -तरः ऋ ४, ५,५; शौ १, १७, १; -ता ऋ १, १२४, ७.
१अ-भ्रातृव्य,व्या[j]- -†व्यः ऋ८,२१, १३; कौ १,३९९; २, ७३९; जै १, ४५, १; शौ २०, ११४,१; -¶व्याः काठ २१,२; क३१,१७.
¶२अ-भ्रातृव्य[k]- -व्यः तै २, ४, २, ४; मै १, २, १०.
*अ-भ्रातृहन्-
अभ्रातृघ्नी[l]- -घ्नीम् शौ १४,१, ६२.
अभ्रि[m]- -भ्रिः मा ११,१०; का १२,

[a]) वैतु. सा. अभिः कप्र. इति कृत्वाऽपार्थम् उप+√इ इत्यस्य दुष्पूरकर्मसाकाङ्क्ष्यमुत्पादुकः।
[b]) गस.कसुन्नन्त-कृत्-प्रस्व. (पा ६,१,१९७;२,१३९)।
[c]) 'अभिघ्रिस्सते' इति ऋ (१०, ८५, ३०) पामे.।
[d]) गस.शानजन्त-कृत्-प्रस्व.(पा ६,१,१६३;२,१३९)।
[e]) रू. द्विविधः स्वरः श्रूयते। यदा गत्यंशे स्वरो निहतश्च तिङ् भवति, तदा 'उदात्त-' (पा ८, २,४) इति स्वरितो भवति। यदा चाऽनिहतत्वात् तिङो गत्यंशे निघातः (पा ८, १, ७१), तदा त्वनुदात्तयरा उत्तरः स्वरस्तदवस्थ एव भवतीति।
[f]) गस.णमुलन्त-कृत्-प्रस्व.(पा ६,१,१९३;२,१३९)। यत्तु आर- इत्यनेन विभक्त्यर्थ इवाऽव्ययीभाव इतीवाऽभिप्रेतः PW. MW. च, तन्मन्दम्। तथा सत्यन्तोदात्तस्य (पा ६, १, २२३) दुर्वारित्वप्रसङ्गात्।
[g]) 'अभि। आ। एति' इति पपा. चिन्त्यः। यद्योगीयनिघाताऽभाववति तिङि गतिद्वन्द्वनिघातस्य न्याय्यत्वात् (पा ८, १, ७१)। 'अभि' इति 'नः' इत्येतदन्वितः कप्र. अप्यभ्युपगतश्चेत् स्यात्तदप्यु 'आ' इत्यस्याऽन्वयान्तराभावादवश्यं तेन निघातेन भाव्यम् (तु. पपा. शौ ३,२,६)।
[h]) 'अभ्येति' इति मुपा. सु-शोधः द्र. (तु. संटि. क ४४, ४)।
[i]) यनि. रूपमवास्तविकं संभाव्यते। काठ. च क. च पा. संस्करणान्तरसापेक्षतयोपलम्भात्। तथाहि। काठ. संस्कर्तुः यस्थ. टि. 'कर्मण्यभ्योप°' इति 'कर्मण्यत्वाप°' इति च क. मूको. पा. इत्युक्तं भवति। तेनैतत् संभाव्यते यदत्र मूलतः 'कर्मण्यत्वायोप°' इत्येवं सतः पा. उभयत्र वैकृतमुक्तचरं समजनीति। क. मूको. पा. यत् संस्कर्त्रा न प्रादर्शि, काठ. पा. एव च तत्रत्यं टि. अप्यनवलोकयता स्वकीये संस्करणे संन्यवेशि, तद् रुचिरेतरं भवतीति दिक्।
[j]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।
[k]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।
[l]) सस्व. नापू. द्र.। स्त्रियां ङीप् प्र., हन उपधालोपश्च (पा ४, १, ४; ६, ४, ९८)।
[m]) व्यु.?। (√*घृ>) *घ्रा- >घ्राम्+*भ्रि- (कर्तरि वा करणे वा <√*भृ) कस्यचित् पृथिव्यादेः पदार्थस्य शरीर आत्मानं प्रवेश्य तदीयस्य प्रच्छिद्यमानस्यांशस्य भर्त्री भरणसाधनभूता वेति कृत्वा खनित्रकविशेषसंज्ञा [*घ्राम्भ्रि- (उस. कृत्-प्रस्व.) >*हम्भ्रि- >*अम्भ्रि- >यनि. (तु. पंजा. (ह्)रम्बि-; हिं. खुर्पि- इति

१, १०; तै १, ३, १, १; ४, १, १, ३; ५, १, १, ४¶; ६, २, १०, १²¶; मै १, २, १०; २, ७, १; ३, १,२¶;८,८²;¶; ४, ९, १; काठ १६, १; –भ्रिभिः शौ १०, ४, १४; पै ५, ९, २; १६, १६, ४; –भ्रिम् मा ११, ११; का १२, १, ११; तै ४,१, १, ४; ५, १, १, ४¶; ६, २, १०, १; मै २, ७, १; ¶३, १, २; ४; ¶काठ १६, १$; १९, १; २५, ९; १०; २६, ५; ¶क २९, ८; ४०, २; ३; ४१, ३. [°भ्रि- अन्°]

?अभ्रिया[a] पै ९, ३, ३.

अभ्रि-खा(त>)ता[b]– -ते शौ ४, ७,५; ६[c]; पै २, १, ४; ५; ४, २१,२. [°ता- अन्°]

√अभ्रि, १अभ्रियु-, २अभ्रिय- √*अप्>२अप्->अभ्र- द्र.

१अभ्व[d]– -भ्वः ऋ १, ३९,८; –भ्वम् ऋ १, २४, ६; ९२, ५; १४०, ५; १६८, ९; १६९, ३; २, ४, ५; ३३, १०; ४, ५१, ९; ५, ४९, ५; ६, ४, ३; ७१, ५; –भ्वा[e] ऋ १, ६३,१; –†भ्वात् ऋ १, १८५, २–८; मै ४, १४, ७².

२अभ्व[f]– -भ्वम् शौ ४, १७,५; ७, २४, १; १३, ६, ४; पै ५, २३, ७.

√१अम्, अमीष्व तै २, ३, ५, १. आमीत् तै २, ३,५,१. [अभि° सम्°]

१अम[g]– -मः ऋ ५,५६,३;६,६१, ८; ८, ९३, १४; मा १८, ४[h]; का १९, २, ४; तै ४, ७, २, १; मै २, ११, २; काठ १८, ७; क २८, ७; शौ १३, ८, ५; –मम् ऋ १, ६६, ४; –†मात् ऋ ५, ५९, २; ८, १२, २४[i]; कौ २, ४६७; जै ३, ३४,२; –माय ऋ ८, २०, ६; –मे ऋ १, ६३, १; ६७, २; ४, १७, ७; ८, ५३, ८; खि ३, ५, ८; –मेन ऋ ४, २२, ३; ९, ९०,६; –मेभिः ऋ ७, ३४,१९; –†मैः ऋ ८,७५, १०; तै २, ६, ११, २; मै ४, ११, ६; काठ ७, १७; कौ १, ११; २, ९९८; जै १, २, १. [°म- स्तनयत्°]

†अम-वत्[j]– -वत् ऋ १, ५२, ९; ४, ५५,४; ५, ३४,९; ५८, १; ८६, ३; ८, ७५, १२; तै २, ६, ११, ३; मै ४, ११, ६; –वत्सु ऋ ६, ६६, ६; –वन्तः ऋ १, ३६, २०; ३८, ७; ८, २०, ७; जै ४, ८, ६; –वान् ऋ १, ५२, १०; ४, ४, १; ५, ८७, ५; १०, ११, ७; मा १३, ९; का १४, १, ९; तै १, २, १४,१; मै २,७,१५; काठ १६, १५; क २५,६; शौ १८,१,२४.

अमवती[k]– -ती ऋ १, १६८, ७.

अमवत्-तर[l]– -रेभ्यः ऋ १०, ७६, ५.

१अमति[m]– -तिः ऋ १,६४,९;७३, २; खि ३, २२, ४; मा ४, २५;

---

साजात्यसंकेतदिङ्मात्रम्; वैतु. भा. तै (१, ३, १, १) √अभ्+इन् प्र.इति च,२अप्-+√१भृ+इः प्र.इति च)]।

[a]) 'अभ्रिया। अखनम्' इति पद-विभागोऽत्र भवतीति कृत्वा तादृशो निर्देश एवेहाऽकारि। तत्-साधुता तावत् परीक्षकाणां दिष्टिमनुसरेत्।

[b]) तृतस. उप. कर्मणि क्ते पूपप्रस्व. (पा ६,२,४८)।

[c]) इह सा. '-षाते' इति यत् पठन्निव प्रादर्शि, तन् मूर्धन्यकण्ठ्ययोरुच्चारणसांकर्येण व्यामोहितस्य लिपिकृत एव प्रमाद इति संभाव्यते।

[d]) व्यु.?। भावार्थप्राधान्ये सति *१आ-भू- (प्रास. वा बस. वा)>*१आभूक->*१अभूअ->यनि.इत्येवमाद्यान्त्योपान्त्यवर्णतत्तत्परिणामाः नैप्र. द्र. (प्रकृतिसंवादार्थं तु. दे १, १२; ३, ३; सा. यस्थ.; PW. प्रमृ.)। न. वृत्तोपलब्धि द्र. (तु. एवटि.)।

[e]) यद् 'अभ्वाः' इति PW.GW.आहतुः,तन्न (तु.ORN.)।

[f]) कर्त्रर्थपरत्वेन नापू. भेदे सति *२आ-भू- (गस.) >*२आभूक->*२अभूअ->यनि.इत्युदात्तयणोऽनुदात्तस्वरितपर्यवसाना नैप्र. द्र.।

[g]) अप् प्र.उसं.(पा ३,३,५८)। प्र.पित्त्वान्निघाते धास्व.।

[h]) म. ६अ+कर्मणि *२म- (<√१मा) इति कृत्वा तस. नञ्-स्वर इति [पा ६, २, २ तु. सा. तै (७, ४, २, १)]। एस्थि. वा. 'भाम-' इत्यस्य वि. एवैतद् न 'अभ्भः' इत्येतत्-सकक्षं सत् तद्वत् कर्तृपदमिति यदभिप्रेतं भवति, तन् मन्त्रपदस्वारस्यविघातप्रसङ्गाच्चिन्त्यम्।

[i]) सा. √?२अम् इत्यतो निष्पत्तिमाह।

[j]) म(>व) तुपः पित्त्वान्निघाते स्वरः पूर्वाऽवस्थः।

[k]) ङीपः (पा ४, १, ६) पित्त्वान्निघाते स्वरेऽभेदः।

[l]) तरपः पित्त्वान्निघाते स्वरेऽभेदः।

[m]) पाप्र. अतिः प्र. (पाउ ४,६१), तत्-स्वरश्च [वैतु. या ६, १२ (मुपा. तदुपरि स्क. च दु. च दे. च विकल्पेन तति- इत्यपि उप. अभिप्रेतमित्युपकल्पयमानाः सु-शोधाः द्र.) <*अमा-मति-वा <*आत्म-मति-वा; म. (मा ४, २५) ६अ+मति- (<√१मा); RJ ३१९ ३अ+मति- (बस.)]।

का ४, ८, ३; तै १, २, ६, १; मै १, २, ५; काठ २, ६; क १, १९; कौ १, ४६४; जै १, ४८, ५; शौ ७, १५, २; पै १६, १४४, २; –तिम् ऋ ३, ३८, ८; ५, ४५, २; ६२, ५; ६९, १; ७, ३८, १; २; ४५, ३. [°ति- हत°]

†१अमत्र[a]– -त्रः ऋ १, ६१, ९; ३, ३६, ४; तै २, ४, १४, २; मै ४, १२, २; काठ ८, १७; शौ २०, ३५, ९; –त्रम् ऋ ४, २३, ६.

†२अमत्र[b]– -त्रम् ऋ १०, २९, ७; शौ २०, ७६, ७; –त्रे ऋ ५, ५१, ४; त्रेभिः ऋ २, १४, १; ६, ४२, २; कौ २, ७९१.

अमत्रिन्[c]– -०त्रिन् ऋ ६, २४, ९.

अममान- सम्°

*अमस्[d]-

अमस्-व(र>)री[e]– -०रीः मै २, ४, ७; ८.

√?२अम्[f]

√*३अम् २अमत्र- टि. द्र.

*१,२अम्- ?२अम-, अमिन-, अम्भस्-, अम्मृण- टि. द्र.

१अम- √१अम् द्र.

?२अम[g]-

अमा ऋ [१, १२४, १२; ६, ६४, ६]; २, ३६, ३; ३८, ६; ६, २४, १०; ५१, १५; १०, २७, २; ६३, १६; १२८, ६; १८५,

---

[a]) अत्रन् प्र. नित्स्वरश्च (पाउ ३, १०५; पा ६, १, १९७)। मौस्थि. त्व् अम- + *त्र-(<√त्रा) इति कृत्वा बस. पूपप्रस्व. इतीव संभाव्येत [तु. WW १, १७८; वैतु. या ६, २३ (तु. दे ४, ३) अमात्रतया व्यु. विकल्पयंश्चिन्त्यः, 'अविद्यमाना मात्रा यस्य' इति कृत्वा बस. अन्तोदात्तप्रसङ्गात् (पा ६, २, १७२) इत्यभिसंधेः; RJ ३११, २अमत्र- इत्यतोऽपि लिङ्ग-भेदनिम्नवृत्तिवैशिष्ट्यमात्रतयाऽपि विकल्पेन निर्भुवाणश्च]।

[b]) व्यु.?। आ+*मत्र- इति कृत्वा बस. (पावा २, २, २४) पूपप्रस्व. स्यात् पूप. नैप्र. ह्रस्वत्वञ्च। *मत्र- इति पुनः सेचनार्थात् √*मद् इत्यतो वा √मद् इत्यतो वा कर्मणि त्रनि प्र. द्र. (*मत्र- इत्यत्र वा *मत्त्र- इत्यत्र वा नैप्र. संयोगादेर् हलो लोप इत्यभिसंधिः)। अथ *४अ-म- + १अत्र- (<√अद् यद्र.) इति बस. पूपप्रस्व. इतीव कृत्वा शकन्ध्वादित्वपरः या ५, १ द्र. [=अमानां मानमकुर्वताम् (६अ+कर्तरि *३म- [<√१मा] इति कृत्वा तस. नञ्-स्वर इत्यभिसंधिः। 'अनिर्मितं भवति' इति यदुक्तं भवति तत् एस्थि. पर्यायान्तरेण व्याख्यानमात्रं स्यान् न वैयाकरणं प्रदर्शनम् (=अमा अमिन्वन्तः सन्तो येऽद्युस्तेऽनिर्मितम् अनिःशिष्टमानं यथा स्यात् तथैवाऽद्युः। स्थिरपीतानां सतां शरावादिलघुपात्रमानैरतृप्यतां घटादिबृहत्पात्रसंलग्नमुखत्वपरजनोक्तिप्रसिद्धेरिति यावत्); वैतु. GW. मौस्थि. अमात्र- (यद्र.) इत्येतेन योजयन् नैप्र. तत एव निष्पादुकः; WW १, ५२, √*३अम् इत्यतो धारणार्थविशिष्टवृत्तेः प्रसाधुकश्च]।

[c]) मत्वर्थे इनिः प्र. तत्स्वरश्च।

[d]) असुन् प्र. नित्स्वरश्च। नाउ. व्यु. औपयिको निर्देशः द्र.।

[e]) मत्वर्थे क्वरप् प्र. उसं., स्त्री. ङीपः पित्त्वान्निघाते स्वरस्तदवस्थ इत्येवं सुवचं द्र. (पावा ५, २, १०९; पा ४, १, १५)। वन्नन्ताद् रादेशे गौरवादित्यभिसंधेः।

[f]) संदिग्धसत्त्वोऽयं धा. द्र. [तु. यस्था. टि. आम- >√*१आमि (यत्रैवैतदीयनयाऽभिप्रेयमाणानि रू. अपि द्र.); वैतु. पाधा. चु.]।

[g]) नाउ. व्यु. औपयिकतयोपकल्प्यत्वे सिद्धेऽपि स्वरूपतः संदिग्धनिर्देशं प्राति. द्र.। कः संदेह इति। '*अम्-' इति स्यात् यनि. वेति। कथमिति। 'अमा' इति रू. हि द्वयोरर्थप्रवृत्त्योः स्थानं भवति। सामीप्यसायुज्यप्रकारिकैका च गृहाभिप्रायिकाऽपरा च। ततः प्रथमां प्रवृत्तिमभिलक्ष्य '*सम्-(>सम् इति क्रिवि. इति कृत्वा न. द्वि१ इत्युच्यमानं यद्र.)>*हम्->*अम्->अमा (=तृ१ तु. पार. 'हमा') इत्युच्येत (यतु. सम<>सम् इति सानाभ्यप्रकारविवेकः)। अथ द्वितीयां प्रवृत्तिमादाय *घर्म- (तु. ग्राम-)>*हर्म- (तु. हर्म्य-)>*हम्म->*हम- (तु. जल्प->*जप्प->जप-; eng. 'home')>यनि.>अमा (=तृ१ क्रिवि. वृत्तेः स्वरप्रक्रमः) इत्युच्येत। '?अमात्'(यद्र.) इत्यपि संदेहविषयतामुपैति। कथमिति। एकं पदमित्येवं विप्रतिपत्त्यन्तरे सत्यपि पपा. प्रभृ. सर्वैर्दृष्टत्वाच्च प्रकरणाऽनुसंधानतस्तु 'अमा। आत्' इत्येवं द्वैपद्यस्य सुविभजत्वौचित्याच्च। तथाहि। प्रथमे निगमे ऋ (५, ५३, ८) मरुतां संभूय [=यथा न तेषां कश्चनापि परावतोऽवतिष्ठते (तु. तृतीयः पादः)] दिवश्चाऽन्तरिक्षाच्च सपद्य् आयानमाशंसितं भवति (=सामीप्यजुषां सतामायानाऽऽशंसनस्याऽनवसरप्राप्तत्वाभिसंधिः)। द्वितीयेऽपि स्थ. ऋ (९, ९७, ८) हंसानां संभूयैवाऽस्तम् (=सोमगृहम्) प्रति प्रयाणम् (तत्र प्राप्य च) साकं सोमं प्रति प्रवदनं श्रावितं भवति (=गृहाद् गृहगमनस्याऽविस्पष्टतात्पर्यकत्वाभिसंधिश्च निगमस्य गृहाऽर्थत्वाभ्युपगमे सत्युत्तरार्धे 'साकम्' इत्यस्य क्रिवि. पुष्टिलाघवाऽभिसंधिश्च [वैतु. सा. १अम- इत्यस्य रू. इत्यसंगतवचनश्चाऽवमतस्वरसंस्कारश्च, PW. प्रभृ. गपू.

२; मा ३, ३२†; २६, २४; का ३, ३, २४†; तै २, ५, ३, ६; ४, ७, १४, ३†; ६, १, ९, ३¶; मै १,५,४†; काठ ७,२†; १०[२]¶; ४०, १०†; क ५, २†; ९[२]¶; शौ ४, १८, ३; ५, ३, २†; ११, ७,१५; १२, ४,३८; ५३; २०, १२७, ५[२]; पै ५, ४,२†; २४,३; १६, १५४, ५.

अमा-जुर्[a]– -जुरः ऋ ८,२१,१५; १०,३९,३; –जूः ऋ २,१७,७.

अमा-त्य[b]– -त्यः मा ५,२३; का ५, ६,२; तै १,२, ६, १; ६, १, ९, ३; –त्यम् ऋ ७, १५, ३; कौ २, ७३१.

*अमा-मति– १अमति- टि. द्र.

¶अमा-वस्या[c]– -स्या काठ ७, ५; १०; ९, १३[२]; १४; १०, ५[२]; १२, ८; ३९, ८; क ५, ४; ९; पै १, १०३, ४$; –स्याम् काठ ६, ६; १०, ५[२]; ११, ३[२]; क ४,५; पै १,१०३,१$;–स्यायाः काठ १२, ८; –स्यायाम् काठ ८, १[२]; १०; ९, १४; १०, ५; ३१, १५: ३२,७; क ६, ६[२].

अमा-वास्या[c]– -¶स्यया तै ७, ५, ६,१[२]; –स्या ¶तै १, ६, ९,१; २, ५, ४, १; ३, ४, ९, ६; ५, १, ४[२]; ¶मै १, ४, १५; ६,९[२]; ९,५; ४, ३,५; शौ ७, ८४,२; १५, २, १४; १६, ३; –स्याम् ¶तै १, ६, ९,१;२; २, २, २, १[२]; ५, ४[२]; ५, ३,६; ४,३; ६, ४; ¶मै १,६,१०; २,२,१३;४, २,१२; शौ १,१६,१;१५,१७, ३; पै १, १०, ३; –¶स्यायाः तै २, ५, ३, ७; ३, ५, १, ३; मै ४, ३,५; –¶स्यायाम् तै १, ६,७,२; २,३, ५,३; ५, २,५[२]; ३, १; २; ४, १; ५, ४[२]; ५; ६, ४; ६; ६, ३, ३; ७, १,४, ३; ५, ७, १; मै १, ४, ५; ६, ९[२]; २, २, ७[२]; ३, ६, १०; –स्यायै शौ ७, ८४, ३; –स्ये शौ ४, ३६, ३; –ऽस्ये तै ३, ५, १,१¶; शौ ७, ८४,१;४‡[d].

¶अमावास्य-त्व[e]– -त्वम् तै २, ५, ३, ७.

अमे(मा-इ)ष्ट[f]– -ष्टम् मा १०, २०; का ११, ६, ६.

अमो(मा-उ)त[g]– -तम् मै ४, ५, ७¶; शौ ९,५,१४; १२,३, ५१; पै १६, ९८, ४.

३अम[h]– -मः काठ ३५, १८[२]; क ४८, १६[२]; शौ १४, २, ७१.

*४अ-म- २अमत्र- टि. द्र.

अ-मज्जक[i]– -काय तै ७,५,१२,२; काठ ४५, ३.

अ-मणि[j]– -णिः खि ५, १३, १; शौ २०, १२८, ६.

उभौ निगमौ <३अम- द्र. (तु. यस्था. टि.)] ।

[a]) उस. उप. √जॄ>जुर्+क्विप् प्र. । कृत्-प्रस्व. (पा ६, २, १३९) ।

[b]) त्यपः (पा ४,२,१०४) पित्त्वान्निघाते स्वरेऽभेदः ।

[c]) उस. उप. √१वस्+ण्यत् प्र. वृद्धिभावाऽभावौ च द्र. । कृत्-प्रस्व.(पा ३,१,१२२; ६,१,१८५;२,१३९) ।

[d]) 'प्रजापते' इति विशिष्टः ऋ(१०,१२१,१०)पाभे.।

[e]) भावे त्वः प्रत्ययस्तत्-स्वरश्च (पा ५, १, ११९) ।

[f]) उस. थाथादि-स्वरः (पा ६, २, १४४) ।

[g]) उप. √वे+क्तः प्र. । सस्व. कृते नापूटि. द्र. ।

[h]) 'सामन्'>'साम' इत्यत्र 'सा' इति 'अम' इति चेत्येवं विभजनपुरस्सरम्'अम' इत्यस्योत्तरांऽशस्य शब्दाऽनुकृतिमात्रस्वरूपस्य सतोऽपि तत्तत्प्रकरणार्थसांगत्य-चमच्चिकारयिषामात्रप्रयोजितं तत्र तत्र यनि. प्राति. पुं. प्र१ इति कृत्वा भाक्ती श्रुतिरनुमता भवति [तु. वैप २, १२१ (अम- इत्यत्र टि. च); वैतु. PW. प्रभृ. इदमर्थीयम् सना. इति निष्प्रमाणमुपकल्पयन्तः (तु. ?WW २,२३६) 'अमा' '?अमात्' इति निगमयोस्तदाधारेण सायुज्यगृहप्रकारकोभयार्थयोरुपपत्तिं दिदर्शयिषवो भवन्तश्चिन्त्याः । तद् यथा । यनि. याजुषयोः शौ. च स्थ. विवाहप्रकरणे पत्न्याः 'सा' इत्येतद्वाच्यः पत्युश्च 'अमः' इत्येतद्वाच्य इत्युपचारः श्रूयते । तन्नाऽयं परमतेनोपपद्येत । पुरोवर्तिसंनिहिताऽर्थकतयाऽभिप्रेयमाणस्य 'अमः' इत्युक्तस्याऽपुरोवर्तिपरोक्षाऽर्थकतया प्रसिद्धस्य (तद्->) 'सा' इत्युक्तस्य च वैवाहिकोपचारस्याऽसंभवात् (तु. ऐब्रा ३, २३ यत्र पराभिमतस्य 'सा' इत्येवं स्त्रीत्वसामान्यश्रुतेः पत्न्या विषये कथमप्यभिमतस्य सतोऽप्युपचारस्य पुंसः सतो राज्ञो विषये नितरामसंगतिः सुस्पष्टा द्र.; माशब्रा १४, ४,१, २४ यत्र प्राणस्य सामोपचार-श्रुतिः गपू. सामेतिशब्दानुकृतिमात्रानुप्राणितया विभजनशैल्या विशदय्यते)]। एतावता तावत् यनि. प्राति. नितान्तम् सना.न संभवतीति नेह प्रतिपाद्यते । किंतर्हि । गपू. स्थ. एव तादृशस्य व्याख्यानस्य निवर्तनमिष्यते । किमत इति । 'अमु-' 'अमी-' इत्यादिवत् '३अम-' इत्यस्याऽपि कस्यचिद् अदसीयपरिवाराद्भिन्नस्य सतः ३अ+अस्मदर्थे *१म- इत्यादिप्रकारिका सामासिकी वृत्तिः कामं संभाव्येत, तदुपाश्रयेण च 'अमा' इत्यस्याऽर्थसंगतिरपीष्येत । एस्थि. 'अमा' इति शब्दरूपमप्याऽपि भूयोविमर्शसहं भवतीति ।

[i]) सस्व. कृते तु. टि. 'अ-चर्मक-' ।

[j]) अत्र कौन्तापसामान्यसुलभं वैकृतं भवति । तद्

१अमति- √१अम् द्र.

२अ-मति[a]– -तये ऋ ३,१६,५;७,१, १९; –तिः ऋ १०,३३,२;३९, ६; शौ १०,२,१०; पै १६,६०, २; –तिम् ऋ १, ५३,४; ३,८, २;५३,१५; ४, ११,६; ८,१८, ११; १०,[४२,१०; ४३, १०; ४४,१०];७६,४; मा १७, ५४; १९, ८४; का १८,५,५; २१, ६, ५: तै ४, ३, ४, २; ६, ३, २; ५, ४, ६, २; मै २, १०, ५; ३, ११, ९; †४, १३, १; १४, ६; काठ १५,१२†;१८,३; ३८, ३; क २८, ३; शौ ४, १०, ३; ७, ५२,७†; १२, २,४८; १९, ३१, ११; ३४, ३; २०, १७, १०; २१,४; ८९, १०; ९४, १०; पै ११, ३, ३; –तीः तै ४, १, ४, ४; ५, १, ५, ९; –†तेः ऋ ५, ३६, ३; ८, ६६, १४; १०, ४३, ३; शौ २०, १७, ३.
[*अमतिद्-, *अमती- √*अमतीय[b] *अमतीया-, *अमतीया-वन्- ] नाउ. टि. द्र.

?अमती-वन्[c]– -वा ऋ ८, १९, २६.

¶अ-मत्त– -त्तः काठ १४, ५.

?अमत्त्यु[d]– -त्त्युः पै ५, १४, ३.

१,२अमत्र-, अमत्रिन्- √१अम् द्र.

अ-मध्यम[e]– -मासः ऋ ५,५९, ६.

¶अ-मनस्[f]– -नसः मै २, ३, २[2]; काठ ११, ६; –नसे तै ७, ५, १२, २$; –नाः काठ १२, २.

¶अमनस्-तर– -राः काठ १२, २.

अ-मनस्क[g]– -स्काय काठ ४५, ३.

†अ-मन्तु[f]– -न्तवः ऋ १०,१२५,४; शौ४,३०,४;-न्तुःऋ१०,२२,८.

अ-मन्त्र– -न्त्रम् खि ३, १०[2], ७.

अ-मन्द[e]– -न्दान् ऋ १, १२६, १.

†अ-मन्यमान[e]– -नान् ऋ १,३३,९; २, १२, १०; शौ २०,३४,१०.

?अ-मन्युता[h]– -ताः शौ १२, ३, ३१.

अममान- √१अम् द्र.

अ-मन्त्रि[i]– -न्त्रिः शौ ८, २, २६; पै १६, ५, ६.

*अमर-

*अमर-वल्लभ– -०भ खि ७, २, २.

¶अ-मरुत्वतीय– -यान् काठ २८,३; क ४४, ३.

अ-मर्त[e]– -र्तः ऋ ५, ३०, ६.

अ-मर्त्य,र्त्या– -†०र्त्य ऋ १, ४४,१; १२९, १०, ५, १८, २; ८, ४, १८; १०, २१, ४; १४०, ४; मा १२, १०९; का १३, ७, ८; तै ४, २, ७, २; मै २, ७, १४; काठ १६, १४; क २५, ५; कौ १, ४०; २, ११३०; ११६९; जै ४,११,८; $शौ११, २, ३; १३, १, ४४; $पै १६, १०४, ३; –र्त्यः ऋ १, [३०, १८; ५, ७५, ९]; ५८, ३; १६४. [३०; ३८]; १७५, २; ३, [२, ११; २७,५]; ११, २; २४, २; [७; ८, १९, २४]; ४, ९, २; ५, १८, १; ६, ३, ६; ९, ४; ७; १२, ३; १६, ६; ७, १५; १०; ८, १९, २५; [४८, १२; (४, ५८, ३)]; ९, ३, १; ९, ६; २८, ३; ६८, ८; ६९, ५; ८४, २; १०३, ५; १०८, १२; १०, ८७, २१, १२२, ३; १४४, १[j]; मा २१, १४;१५; २२,१६†; ३७,१६;

यथा । 'अमणिः, अमणिवः, अमणिवः' इत्येवं पाभे. उपलभ्यन्ते (तु. पाण्डु.)।

[a]) व्यु. कृते तु. टि. यस्था. 'आम-'।

[b]) नाउउ. व्यु. औपयिकः संकेतः द्र.।

[c]) व्यु.?। *अमती- इति दीर्घान्त उपपदे √वन्+ कर्तरि क्विप् प्र. (पा ३, २, ७६), उस. उपप्रस्व. (पा ६, २, १३९) इति प्रथमः कल्पः। √*अमतीय् > *अमतीया- (पा ३, ३, १०२) इत्युपपदे पूर्ववत् उस. कृते सति नैप्र. *अमतीया-वन्- > यनि. इत्यन्तोदात्त-प्रयोजिततत्पूर्वलोपाऽऽत्मकः परिणाम इति द्वितीयः कल्पः। अथ पाप्र. √*अमतीय्+वन् प्र. उसं. (पा ३,२,७५)। ततोऽकारयकारयोर्लोपः (यक. पा ६, ४,४८; १, ६६) इति वा। *अमतीया- +वन् प्र. तद्धितः उसं. (पावा ५, २, १०९) इति कृत्वा भत्वे उसं. (पा १, ४, २०) अवर्णलोपे (पा ६, ४, १४८) पूर्ववद् यलोप इति वा। *अमतिद्- +वन् प्र. (गपू.) इत्येवं वा कल्पपञ्चतयं समूढं द्र.। तत्राऽपि द्वितीये कल्प आस्थाविशेषश्चेति दिक् (तु. अराती-वन्-; वैतु. पपा. W. प्रभृ. च अमति-वन्- इत्यव-ग्रहमुखा भवन्तो मध्ये दीर्घं नोपपादुकाः; सा. उत्तरांऽशं वनिप् प्र. इति वचनतः पित्-स्वरतः प्रसज्यमान-लब्ध्यविघातं प्रति पर्यनुयोज्य इत्यपरो विशेषः)।

[d]) 'अ-मृत्यु-' इति शोधो विमृश्यः।

[e]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[f]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[g]) तु. टि. अ-च्छन्दुस्क-।

[h]) सस्व. कृते एपूटि. द्र.। उप. मन्यु- +ता- [<√तन्+विट् प्र.; वैतु.PW.प्रभृ.मन्यु-(त>)ता-]।

[i]) सस्व. कृते द्विपू. टि. द्र.। उप. √मृ+क्रिः प्र. लिड्वद्भावश्च (पा ३, २, १७१)।

[j]) सं१ एतदिति GW. बभ्राम।

का २३, २, ३; ४; २४, ४, ८†; ३७, ३, ३; तै ४, १,११, ४†; ५, ७, ९, १; मै १, ६, १; ३, ११, ११[2]; ४, ९, ६; १०, १[2]†; ११, ५; १४, १५†; काठ २, १४†; ७, १२; १९, १४†; ३८, १०[2]; ४०, १४[2]†; क ६, २; †कौ २, ६०६; ६३२; ७८३; ८२७; †जै ३, ४९, ४; ५१, १०; ४, २६, ८; शौ ६, २६, ३: ७, ८९, १; †८, ३, २०; २६; †९, १५, ८; १६; पै ३, १०, ४; ५, २१, ७; १३, १, १४; १६, ७, १०; ८, ४†; ३७, ७; ६८, ९†; ६९, ७†; –र्त्यम् ऋ १, ४४, ११; ८४, ४; १३९, ८; २, ११, २; ३७, ४; ३, [१०, ९; ४, ८, १; ८, १०२, १७]; ५१, १; ४, १, १; ५, ४, १०; १४, १; २; ८, ११९, ३; १०, ११८, ६; खि ५, ७, ५, १०; मा २२, १५; २८, ३; २७; ३३, ६०; का २४, ४; ७; ३०, १, ३; ३, ४; ३२, ५, ६; तै १, ४, ४६, १†; ४, १, ११, ४†; ६, २, ६; ५, ५, ४, ३¶; †मै २, १३, ५; ४, १०, १; १२, ३; †काठ १२, १५; १९, १४; †कौ १, १२; ११२; ३४४, ३७४; २, २९९; ७६३; †जै १, २, २; ४, ६‡[a]; १२, ६; ३६, ३; ३९, ५; ३, २४, १५; ४, १९, ५; शौ १८, ४, ४१; १९, ८, ३[b]; २०, ६७, २†; पै १३, ३, ४; –र्त्यस्य ऋ ८, ११, ५; १०, ७९, १; १४९, ३; तै १, ६, २, २; –र्त्या ऋ ३, ६१, २; ७, ७३, १; १०, १२७, २; काठ १७, १८; –०र्त्या ऋ ८, ५, ३१; २६, १७; खि १, १२, ८; –र्त्याः ऋ १, १६८, ४; ६, १८, १५; ९, २२, ४; मा २१, १७; का २३, २, ६: मै ३, ११, ११; ४, १२, ३†; काठ ८, १६†; ३८, १०; शौ ६, ४१, ३; १२, १, २४; पै १३, ४, ४; १२; –०र्त्याः शौ ४, ३७, १२; –र्त्यान् शौ ७, ५, ३; –र्त्ये ऋ ७, १, २३; कौ १, ८५‡[c]; जै १, ९, ५‡[c]; –०र्त्ये ऋ १, ३०, २०; –र्त्येन ऋ ६, १८, ७; [१०, ६३, १७; ६४, १७]; शौ ७, ५, ३; –र्त्येषु ऋ १, ११०, ५; –र्त्यौ शौ ८, ७, २०; पै १६, १३, १०.

अमर्त्य-जा– -जाः पै १६, १५१, ९.

†अ-मर्धत्[d]– -र्धन्तः ऋ ७, ७६, २; ५; –र्धन्ता ऋ ३, २५, ४; मै ४, १२, ६.

अमर्धन्ती– -न्तीः ऋ ५, ४३, १.

अ-मर्मन्[e]– -र्मणः ऋ [३, ३२, ४; ५, ३२, ५]; ६, २६, ३.

अम-वत्- √१अम् द्र.

अ-मविष्णु[f]– -ष्णवः ऋ १०, ९४, ११.

अमस्-, अमस्वरी- √१अम् द्र.

अ-महीयमा(न>)ना[d]– -नाम् ऋ ४, १८, १३.

अमा ?२अम- द्र.

*अ-मा- २अमत्र- टि. द्र.

अ-मांसक[g]– -काय तै ७, ५, १२, २; काठ ४५, ३.

अमा-जुर्- अमा-त्य- अमा- द्र.

?अमात्[h] ऋ ५, ५३, ८; ९, ९७, ८.

अ-मात्र[i]– -त्रम् ऋ १, १०२, ७.

अ-मानुष[d]– -षः ऋ १०, २२, ८; –षम् ऋ २, ११, १०; ८, ७०, ११; १०, २२, ७; खि ५, १४, १[j]; शौ २०, १२८, १२[j].

अमानुषी– -षीषु ऋ १०, ९५, ८.

अमा-वस्य-, °वास्या- ?२अम- द्र.

अ-मित[d]– -तम् ऋ ४, १६, ५; कौ ३, ४, ८; जै २, २, १; शौ १०, ७, ३९; २०, ७७, ५†; –ता ऋ ५, ३४, १; ६, ६२, २; ७, ८४, ४; १०, ५६, ५; शौ ४, २६, १; पै ४, ३६, १; –ताः ऋ १, ११९, ३; ५, ५८, २; –†तानि ऋ ८, २४, २१; जै ४, १७, ९; शौ २०, ६५, ३; –तेभिः तै ४, ७, १५, ६;

---

[a]) 'अमर्त्यं' इति ऋ (१, ४४, १) पाभे. ।

[b]) अस्मिन् मन्त्रे भूयिष्ठ-विकारः पा. भवति । अर्थं छन्दश्च समवधाय '·····अमर्त्यं मर्त्यं·····' इत्याकारकः पाभे. (तु. सात.) अभिरुचितो भवति । यसु. त्व् अमर्त्यम् इत्यत्र स्वरोऽपलक्षण इति सुस्पष्टम् ।

[c]) 'अमर्त्यः' इति ऋ (५, १८, १) पाभे. ।

[d]) तस. नञ्-स्वरः (पा ६, २, २) । उप. यद्र. ।

[e]) बस. अन्तोदात्तः (पा ६, २, १७२) । उप. यद्र. ।

[f]) सख. कृते तु. टि. 'अनतिवादुक-' । उप. √मू +इष्णुच् प्र: । 'अम-विष्णु-' इत्येवमवग्रहं कामुकः GW. उपेक्षाविषयो भवति ।

[g]) बस. समासान्ते कपि ह्रस्वान्तेऽन्त्यात् पूर्वे स्वरे प्राप्ते कपिपूर्वीयः स्वरः उसं. (पा ६, २, १७४; १७३) ।

[h]) तु.टि. ?२अम->अमा, यदनु नैतत् पं१ भवति । किंतर्हि । 'अमा । आत्' इति पदद्वयीति ।

[i]) बस. अन्तोदात्तः (पा ६, २, १७२) । उप. मात्रा- यद्र. । वा.क्रिवि.इति यत् PW.NW. आहतुस्तद्विमृश्यम् ।

[j]) अत्र मानुषम् इति पाभे. अप्यनुसंधेयः (तु.सात.)।

मै ३, १६, ५; काठ २२, १५; —तैः ऋ ७, ३, ७.

अमित-क्रतु[a]— तुः ऋ १, १०२, ६.

अमित-वीर्य[a]— -०र्यं शौ १९, ३४, ८; पै ११, ३, ८.

†अमितौ(त-ओ)जस्[a]— -जाः ऋ १, ११, ४; कौ १, ३५९; २, ६००; जै १, ३७, ८; ३, ४८, १६.

**अमिति**— -तिः पै १६, ४६, ६.

(√अमित्र) अमित्रायत्- टि. द्र.

**१?अ-मित्र[b]**— -त्रः ¶मै ४, २, १४.

**२अ-मित्र[c]**— -त्रः शौ ४, २२, २; ६, ६७, ३; ११, ११, १९; १२, २२; २६; पै १, २०, ३; ३, २१, ३; —†त्रम् ऋ ६, ७३, ३; [७, ७७, ४; (७८, ५)]; ८, ७५, १०; तै २, ६, ११, ३; मै ४, ११, ६; काठ ४, १६; ७, १७; ४०, ११; कौ १, ११; २, ९९८; जै १, २, १; शौ २०, ९०, ३; $पै १०, ४, १२; —†त्रस्य ऋ ६, २५, २; १०, १५२, ३; तै १, ६, १२, ५; मै ४, १४, १२; कौ २, १२१७; शौ १, २१, ३; पै २, ८८, २; —त्राः ऋ १, १३३, १; २, १२, ८; [१०, ८९, १५; १०३, १२]; खि ३, २१, २; †मा १७, ४४; †का १८, ४, १२; †कौ २, १२११; शौ २, २८, ३; ५, २१, २; ८; ६, ६७, २[d]; १०४, २; ८, ८, २; ११, १२, २१; २३; २०, ३४, ८†; पै १, १२, ४; ९, ४, ९; १३, ७, ८†; —०त्राः कौ २, १२२१; शौ ८, ८, १९; पै १६, ३०, ९; —त्राणाम् खि ५, ३, १; ¶तै ३, ४, ८, ४; ¶काठ २१, १०; शौ ३, १, ५; ५, २१, ९; ६, ६७, १; ८, ८, १; ११, ११, ३; ५; १८; २०; २३; १२, १६; २०[२]; पै १६, २९, १; —त्रात् शौ १९, १५, ६; पै ३, ३५, ६; —त्रान् ऋ १, ६३, २; ५; १००, ५; ३, १८, २; ४, ४, ४; १२, २; ६, ३३, १; ३; ४४, १७; ४६, ६; ८; ७३, २; ७५, ४; ७; १६; ७, १८, ९; २५, २; [(६, ४६, ४; ४८, १५;) ३२, २५]; ८५, २; ९२, ४; ८, १६, १०; ९, ९७, ५४; १०, १०३, ४; १३१, १; खि ५, २, ३; †मा ११, ८२$; १३, १२; १७, ३६; ४५; २९, ४१; ४४; †का १२, ७, १७$; १४, १, १२; १८, ४, ४; १३; ३१, २, ४; †तै १, २, १४, २; ४, १, १०, ३$; ६, ४, २; ४; ६, २; ३; †मै २, ७, ७$; १५; १०, ४; ३, १६, ३[२]; †काठ ४, १६; १६, ७$; १५; १८, ५; १९, १०$; ३५, १४; ४६, १[२]; †क २५, ६; २८, ५; ३०, ८$; ४८, १३; †कौ २, ४५६; १२०२; १२१३; †जै ३, ३४, १४; ४, ५, ३; शौ १, १९, २; ३; ३, २, ५; १९, ३; ८†; ४, २२, १; ५, २०, ८; २१, ४-७; १२; ६, १०४, १; ११, ११, १२[२]; १८; २१; २३; १२, १; ३; १३; १८; १९; १९, १३, ८[२]†; †२०, ४६, १; ८०, २; ९०, २; १२५, १; पै १, २०, २; ३; २७, २; ५६, ४; २, २५, ५; ७३, ४; ३, ५, ५†; १९, ४; २१, १; ७, ४, ८[२]†; ९, २४, ७; १५, †१०, ४; ७; १२, ६; १६, २९, ६; —त्रेभ्यः शौ ५, २१, ३; ६, १०४, ३; ११, ११, १; १५; २२; २४; १२, ६; पै ३, ६, ५; १०, १३, १-१०; १४, १-१०; —त्रेषु ऋ १०, ८९, ९; शौ ५, २१, १[२]; ११, ११, ९; ११; २५; —त्रैः ऋ ३, ३०, १६; पै ४, १४, ५. [०त्र- अन्°, अन्ति°, दूरे°]

†आमित्र[e]— -त्रः ऋ ६, २८, ३; शौ ४, २१, ३.

आमित्री[f]— -त्री शौ ५, २०, ५; ११, १२, २५; पै ९, २४, ५.

†अमित्र-खादु[g]— -दः ऋ १०, १५२, १; पै २, ८८, १.

†अमित्र-दुम्भन[h]— -नः ऋ ४, १५, ४; —नम् ऋ २, २३, ३; काठ २६, ११.

अमित्र-साहु[i]— -हः शौ १, २०, ४‡.

---

[a]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[b]) स्वरश् चिन्त्यो भवति। पाभे. कृते तु. संस्कर्त्तुः टि.। नाउ. २संख्याकात् सरूपात् तात्पर्येऽभेदो भवति। एवं सति संदिग्ध-स्वतन्त्र-सत्ताकं प्राति. द्र.।

[c]) 'नञः' (पा ६, २, ११६) इत्यत्रोक्तो बस. तात्पर्यतः तस. इत्येव पर्यवसीयते [वैतु. सा. व्यु. (शौ १९, १५, ६) √१अम्+इत्रः प्र.]।

[d]) आमन्त्रितापेक्षि प्रकरणं भवति (तु. सा. W. च)। तथा सति सुपा. चिन्त्यो भवति।

[e]) संबन्धार्थे अण् प्र. तत्-स्वरश्च (पा ४, ३, १२०)।

[f]) उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् (पा ६, १, १६१)।

[g]) उस. अण्णन्त-कृत्-प्रस्व. (पा ३, २, १; ६, २, १३९)।

[h]) सस्व. नापूटि द्र.। उप. √दम्भ्+कर्तरि ल्युः प्र.।

[i]) सस्व. कृते एपू. टि. द्र.। उप. सांहितिकमात्रो दीर्घ इतीव पपा. सकृत्समानप्रकृतिकनिगमसामान्येनैव समकेति (तु. टि. अभिमाति- षाहु- प्रभृ.)। 'अमित्रखादुः'

अरं √घुष्

अरं-घुष्[a]- -षः शौ १०, ४, ४.

अरितृ[b]- -ता ऋ२,४२,१;९,९५,२.

१अरित्र[c]- -त्रम् ऋ १, ४६, ८; -त्राः ऋ १०, ४६, ७; मा ३३, १; का ३२, १, १.

२अरित्र[d]- -त्राणि शौ ५, ४, ५. [°त्र- दश°, नित्य°, शत°, सु°]

अरित्र-पुर(ण>)णी[e]- -णीम् ऋ १०, १०१, २.

¶अर्तोस्(>:)[f] काठ ९, १६.

*अर्- अम्रस्-, अम्भस्-, १अरण-, द्र.

१अर्- √अर् द्र.

२अर्[g]- -रम् काठ ३४, १७; -राः ऋ ५, ५८, ५; १०, ७८ ४; खि ४, ११, ५; मा ३४, ५; मै ४, १४, १८; काठ १०, ४[2]; शौ ३, ३०, ६; १०, ८, ३४; पै ५, १९, ६; १६, ३१, ३; १५२, १; -राणाम् ऋ ८, २०, १४; -रान् ऋ [१, ३२, १५; १४१, ९]; ५, १३, ६; ८, ७७, ३; तै २, ५,९,३$; मै ४, १४, १३; पै १३, ६,१५. [°र- त्रि>त्र्यु°, त्रिंशद्°, द्वादश°, पञ्चन्°, प्रत्य्°, षष्>ड्°]

अर्-मणस्[h]- -णसम् ऋ ६,१७,१०.

३अर्- अरणि- टि. द्र.

४अर्- अराल- टि. द्र.

५अर्- अराटक-,अराड-,अरावन्- टि.द्र.

६अर्- अराय- टि. द्र.

?अरंसम्[i] पै २, ८१, २.

?१अरक[j]- -कः खि ५, १५, ५.

*२अरक- अरावन्- टि. द्र.

†अ-रक्षस्[k]- -क्षः[l] ऋ ५, ८७, ९; -क्षसः ऋ १, १९०, ३; -क्षसम् ऋ ७, ८५, १; ८, १०१, ८; -क्षसा ऋ १, १२९, ९; २, १०, ५; मा ११, २४; का १२, २, १३; तै ४, १, २, ५; ५, १, ३, ३; मै २, ७, २; काठ १६,२; १९,३; क ३०,१.

¶अ-रक्षोहत[m]- -तः तै ६, १, ७, ३[2]; -तम् मै १, १०, २०[n]; काठ ३६, १४.

¶अ-रक्षस्य[o]- -स्य मै३,७,७;४,८,५.

अरगराट[p]- -टेषु शौ ६, ६९, १.

अ-रज्जु[k]- -ज्जुभिः ऋ ७, ८४, २; -जौ ऋ २, १३, ९.

अरद्व[q]- -द्वे ऋ ८, ४६, २७.

अरदु[r]- -दुः खि ५, १५, १४.

?अरदु-परम[s] शौ २०, १३१, १५.

१अरण[t]- -णः ऋ २, २४, ७;

[a]) गस.उप.कः प्र. थाथादि-स्वरश्च (पा ६,२,१४४)।

[b]) तृच् प्र. चित्-स्वरश्च (पा ६, १, १६३)।

[c]) इत्रः प्र. तत्-स्वरश्च (पा ३, २, १८४)।

[d]) आद्युदात्तार्थं प्र. निदवधेय इति नापू. विशेषः।

[e]) कास. कृत्-प्रस्व. (पा ६, २, १३९)। उप. अन्तर्भावितण्यर्थात् √पॄ+कर्मणि ल्युट् प्र.।

[f]) ईश्वरे तोसुन् प्र. नित्स्वरश्च (पा ६, १, १९७)।

[g]) व्यु.?। ६अ+*१रा-[<भावे √*ऋ(तु.ऋदन्तेभ्यः धा. समाननिष्पत्तिकानि प्राति. *भ्रा-, *त्रा-, *द्रा-, *श्रा-, *स्रा-, *व्रा- प्रभृ.)] इति कृत्वा बस. अन्तोदात्तः [तु. टि. १अरण-; पा ६, २, १७२ (चक्रनाभिनेमिगतस्वस्वस्थानाधिकरणकतत्स्थैर्यपर्यवसानके तत्संसर्ग-राहित्ये तात्पर्यम्; वैतु. गतिप्राप्तिसामान्यमादाय या. (४,२७) प्रभृ. √*१अर्+अच् इतीवाऽभिप्रयन्तः; WW. (१, ६९) गतिराहित्याऽऽख्यं गुणं पश्यन्नप्याद्यमकारमुच्चारणार्थकमात्रतया प्रतिपन्नः)]।

[h]) बस. पूपप्रस्व. (पा ६, २, १)। उप. <√मन् यद्र.। अत्र पूप. 'अरम्' इति मतमसद् भवति (तु.PW. प्रभृ.)। तथात्वे हि यनि. स्वरस्याऽनुपपत्तेरर्थासंगतेश्च। 'वृध्रम्' इत्यनेन पराभिमतस्य संबन्धस्याऽपेक्षया (तु. PW.) अहिम् इत्यस्य वि. इत्येव मन्त्रस्वारस्यं नेदीय इव स्पर्शुकमिति दिक्।

[i]) शोध-सापेक्षः पा. (तु. टि. √२अक्ष्>?अक्षौर्)।

[j]) अस्पष्टोऽत्र पा.भूयांश्च पाभे.(तु. संटि.च 'अजक-' इत्यत्र गपू.टि.च)। एस्थि. भूयसी विमृश्येव शरणायताम्।

[k]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[l]) MW. क्रिवि. (वैतु. सा.)।

[m]) तस. नञ्-स्वरः (पा ६,२,२)। उप. तृतस. द्र.।

[n]) 'अरक्षो हतम्' इति सुपा. स्वरो भ्रष्टः।

[o]) तस. अन्तोदात्तः (पा ६, २, १५६)। उप. यद्र.।

[p]) व्यु.?। [तु सा. २अर्- +?गर्-*(<√२गॄ)+?अट्-(<√अट्) इति उस. इव भावयन् स्वरतो मिथ्यात्वं प्रति पर्यनुयोज्यः]। वाच्यस्याऽस्पष्टत्वाद् भूयोविमर्शस्याऽप्रतिहतोऽवसरः द्र.।

[q]) व्यु.?। वैसं. इति प्रकरणात् संभाव्येत।

[r]) व्यु.?। प्रकरणतो वृक्षविशेषस्य नामेति सुलभम् [तु. नाउ. टि. (पाग. ४, २, ८०)। यत ऋश्यायन्तर्गते 'अरड्ड(ड)-' इत्यत्रेह तात्पर्यमिति संकेतलाभः स्यात्]।

[s]) तु. खि ५, १५, १४ 'अरदुः परमः' यत इहाऽपि पदद्वयाऽऽत्मक एव पा. मौलिकतया व्यवसीयेत [वैतु. WR. 'अरदुपर्णः' इत्येकं पदमिति ('परमः' इत्यस्य स्थाने *पर्णः इति सुपठः शोधस्तु यद्र.)]।

[t]) व्यु.?। √*२अर्+कर्तरि ल्यु>अनः प्र. लित्-स्वरश्च (पा ३, १, १३४; ६, १, १९३)।

५, २, ५; ६, ७५, १९; ७, ४, ८; खि ४, ५, ३७; काठ २, ११; क २, ५; कौ २, १२२२†; शौ १, १९, ३†; ५, ३०, २; ७, ११३, १; पै ९, १३, २; १०, ११, १; १३, ३, १४; –णम् ऋ ३, ५३, २४; ५, ८५, ७; ८, ४, १७; १०, ११७, ४; काठ ३१, १४; शौ ५, २२, १२; पै ६, २२, १७; ८, १२, १०; –णस्य ऋ ७, ४, ७; मै ४, ६, ६; –†णाः ऋ ८, १, १३; शौ २०, ११६, १; –†णानि ऋ ६, ६१, १४; तै ७, २, ७, ५[२]; काठ १७, १८; ३०, ३[२]; $; क ४६, ६[२]; $; –णाय मा २६, २; का २८, १, ३; शौ ६, ४३, १; –णे ऋ १०, ६३, १६; –णेभिः शौ ७, ५४, १; –णेभ्यः खि ५, १, २; मै २, २, ६; काठ १०, १२. [°ण- आ°, उप°, सम्°]

?१आरण[a]– –णाय मै ३, १४, २०.

१अरण्य[b]– -ण्याय मा २४, ३९; का २६, ८, ४; तै ५, ५, १६, १; काठ ४७, ६.

*?२अरण[c]-

१अरणी[d]– -णी शौ ७, ११३, १: –णीम् ऋ १०, १२४, २.

२अरण्य[e]– -ण्यम् मा २५, ३; का २७, ३, २; तै ५, ७, ११, १; ¶६, २, १०, ७; ५, ११, २; मै ¶१, ९, ७; ११, ६; ¶२, १, ६; ३, १५, ३; ¶काठ ९, १६; १४, ७; ३०, १; ५३, १$; क ४६, ४¶; शौ १२, १, ११; ५६; पै ६, २२, १७; –¶ण्यस्य मै ४, १, १; काठ ३०, १०; क ४६, ८; –ण्यात् मै ४, १, १¶; काठ १९, ११¶; क ३१, १¶; शौ २, ४, ५; पै २, ११, ५; ६, २२, १७; –ण्यानाम् मा १६, २०; का १७, २, ४; तै ४, ५, ३, १; मै २, ९, ३; काठ १७, १२; क २७, २; –ण्यानि ऋ १०, १४६, १?[f]; मै ४, ११, २‡[g]; –ण्याय तै ७, १, १७, १; काठ ४१, ८; –ण्ये ऋ ६, २४, १०; खि ७, १, १; मा ३, ४५; २०, १७; का ३, ५, २; २२, १, ४; तै १, ८, ३, १; ¶२, १, १०, २; ५, १, ६; मै १, १०, २; २०¶; २, ५, ५¶; काठ ९, ४; ¶२१, ९; १०[३]; ¶३०, १०; ३८, ५; क ८, ७; ४६, ८¶; पै १, ९९, ३; †ण्येषु ऋ १, १६३, ११; मा २९, २२; का ३१, ३, ११; तै ४, ६, ७, ४;

या. (३, २; ११, ४६) अनु =६अ(=अप)+*?१रण- [=ऋण- (तु. पावा ६, १, ८९; ऐब्रा ७, १३; यस्थ. स्क. दु. च) इति वा, =अर्ण- (MW) इति वा, =√रम्> *२रण- इति वा] इति कृत्वा बस. इति वा [यस्मिन् कल्पेऽन्तोदात्तः प्रसज्येत (पा ६, २, १७३)]। नैप्र. *अपार्ण- (प्रास. पूपप्रस्व.) >*अआर्ण- >*आर्ण->यनि. इति वाऽभिसंधीयेत। ६अ + *?२रण- (कर्त्रर्थे ?<√रम्) इति कृत्वा तस. पूपप्रस्व. (पा ६, २, २) इत्यपरा काचित्की व्यु. [तु. वें. (ऋ ६, ७५, १९ प्रमृ.), सा. (ऋ २, २४, ७; ६, ७५, १९; ७, ४, ८ प्रमृ.)]। अथ *?१अर्- इति परार्थे सना. इति कृत्वा ततः व्यु. पर्येष्येत्यपि मतं भवति (WW १, ८४)।

[a]) पा.? पपा. ह्य् १अरण्य- (यद्र.) इति प्राति. प्रादर्शि (तु. मा २४, ३९)। यनि. तावदुभयी व्यु. संभवति ताद्धिती सामासिकी च [='अरणानाम् अग्राम्यप्रदेशानां राजा इति कृत्वा तद्राजीयः अञ् प्र. उसं. ञित्स्वरश्च (पा ४, १, १६८; ६, १, १९७)। यद्वा. 'आगतमधिकारेऽरणं यस्य' इति कृत्वा मध्यपदलोपः '२आ-अरण-'(यद्र.) इति बस. स्यात् पूपप्रस्व. (पावा २, २, २४; पा ६, २, १ (तु. आ-देव-))]।

[b]) 'अरणेऽधिकृतः' इति कृत्वा तद्राजीयः ञ्यः प्र. उसं. वृद्ध्यभावश्च [पा ५, ३, ११२ (तु. नापूटि.)]।

[c]) व्यु.?। √*३अर्+करणे ल्युट् प्र. लित्-स्वरश्च [पा ३, ३, ११७; ६, १, १९३ (=ज्वलनपरिणामितापजनने करणम्)]। अग्न्युत्पत्तिकारणताविशिष्टे तात्पर्यदर्शने सदृशः सन्तोऽपि √*१अर् इत्यतः व्यु. आहुः या. (५, १०) प्रमृ. (यत्तु या. मतमुदाजिहीर्षुरपि सन् MW. यनि. नापू. सरूपात् प्राति. अभेदमाह, तन्मन्दम्। या. मतमनु मौस्थि. च तयोः प्राति. पार्थक्येन निर्देशार्हत्वात्)।

[d]) स्त्री. ङीप् प्र. (पा ४, १, १५) स्वरेऽभेदकरः।

[e]) स्वार्थिकः यप् प्र. उसं. [पा ५, २, १२० (तु. या. [९, २९] दे. [५, ३] यौ १अरण- इत्येतदीयां व्यु. (यद्र.) एवाऽतिदिशन्तौ तस्मादभेदमिव यनि. तद्धितगम्यं प्रतिपादुकौ भवतः [तु. ऋ ६, ६१, १४ यत्रत्यस्य १अरण- इत्यस्य स्थाने मै ४, ११, २ इत्यत्रत्यः २अरण्य- इत्यात्मकः पाभे. अपि यनि. व्यु. श्रौतं लिङ्गं स्यात्]; वैतु. पाउ [३, १०२] √*१अर्+अन्य[न्] प्र. इति निर्माध्यमा व्यु. इति)]।

[f]) द्विरुक्तयोः सरूपयोर्मध्य एकं यनि. द्वि३ एकं च ?अरण्यानी- (तु. टि.) >सं१ [तु. या (९, ३०)] इति वोभे अपि रू. द्वि३ इति वेत्यत्र भूयोऽपि विमृश्यताम्।

[g]) 'अरणानि' इति ऋ (६, ६१, १४) पाभे.।

काठ ४६,३. [°ण्य- अन्यतस्°]

आरण्य[a]– -ण्यः मा ६, ६; २४, ३०; ३२; ३८; का ६, १, ७; २६, ६,५; ७, २; ८, ३; तै २, १, १०, २¶; ५,५,१२, १; मै २, ५, ५¶; ३, १४,११; १३; काठ ४७, २; पै १५, १२, ७; –ण्यम् मा १३, ४८–५१; का १४,५, २–५; तै १, ६, ७, ४¶; ४,२, १०, १; २; ३[2]; ४; ¶५, २, ८, ६; ९, ३; ५$; ४, ५, २; ¶मै १, ४,१०;६,५; ११, ८; २, ७, १७[5]$; ३, २, ५; ४, ३; १०; ४, ४, १; काठ १२, ७; १६, १७[4]; २०, ८; २१, ६; २९, ८; ३२, ७; क २५, ८[4]; ३१, १०; २१¶; –¶ण्यस्य तै १, ६, ७, ३[2]; मै १, ४, १०; काठ ३२;७; –ण्याः मा १४, ३०; १८, १४; ३१, ६‡[b]; का १५, ९, ४; १९, ५, २; ३५, १,६‡[b]; ¶तै १, ६,७, ३; २,४, ६, २; ३, १, ४, २$; ४, ३, ५; $४, ३, १०, २; ७, ५, २; ५, १, ४, ३; २, ५, ५; ९, ५; ४, ९, २; १२, २; ६, १, ८, १; ३, ७, ५; ५, ११, २; ७, २, २, १; ३, ४, १; ¶मै १, ६, ५; $२, ८, ६, ११, ५; ३, २, ३; ९, ७; ४, ३, २[2]; काठ ७, ८; १२, ७; १३, १२; १७, ५; १८, १०; २०, ३; २८, १०; २९, ८[2]; ३०, ८; ९[2]; ३५, १५; क २६, ४¶; २८, १०; ३१, ५¶; ४५, १¶; शौ ५, २१, ४; ६, ५०, ३; ११, २, २४; ७, २१; ८, ८; १२, १, ४९; १९, ६,१४‡[b]; पै ३,३२, ६; ५, २२, ५; १५, १३, ८; १६, १०६, ४; १५५, १; –¶ण्यात् काठ २५, ५; ३०, १०; क ३९, २;४६,८; –ण्यान् ऋ १०, ९०, ८; ¶तै १, ६, ७, ३; २, ५, ११, २; ५, १, ४, २; २, ९, ५; ६[2]; ४, ३, २[3]; ५, ५, २; ६, ६, ४, ५; ७, ३,१४,१$; ¶मै १,४,१०[2]; ३, १, ५; २, ७; ३, ६; ४, ४, ६; ८, ८[2]; ¶काठ १९,५; २०, ५; ८; २१, ७; २८, १०; ३२, ७[2]; ४३,४$; ¶क ३०,३; ३१, ७; १०; ४५, १; पै ९,५,१२l; –¶ण्यानाम् तै ५,४,३,२; काठ ३७, ४; –¶ण्येन मै १, १०, २०[2];३,३,४; काठ २१,६;३६, १४; क ३१, २१; –¶ण्येभ्यः काठ २६, २; क ४०, ५; –ण्येषु तै ५, ४,४,३¶; –ण्यैः शौ ३, ३१, ३.

अरण्यानि[c]– -निः ऋ १०, १४६, २; ३; ५; –निम् ऋ १०, १४६, ६; –न्याः शौ १२, २, ५३; –न्याम् ऋ १०,१४६ ४.

?अरण्यानी[d]– -॰नि ऋ १०, १४६, १[3]?[e].

अरण्ये(ण्ये-अ)नु√वच्

¶अरण्ये(ण्ये-अ)नुवाक्य[f]– -क्यः मै ३, ३, १०[4]; काठ २१, १०[3].

१अरणि[g]– -णयः पै १३, ३, ३; –णिभिः ऋ १, १२७,४; १२९, ५; –¶णिभ्याम् मै ३, ६, ९;

a) तात्रभविकः णः प्र. तत्-स्वरश्च (पावा ४,२,१०४)।

b) 'आरण्यान्' इति ऋ (१०, ९०, ८) पाभे.।

c) व्यु.? । १अरण्य-+(√जन् >जनि->ज्नि*->) *ग्नि- (=ग्ना- यद्र.) इत्येवम् 'अरण्या (=अरण्येऽधि-कृता) ग्निर्माता' इति कृत्वा कस. सासस्व. च। एस्थि. उप. गकारस्य नैप्र. नकारसमापत्तौ *अरण्यन्नि- > यनि. इत्यभिसंधिः [तु. या. (९, ३०) यत्र 'अरण्यपत्नी-' इति शब्दः व्यु. 'ग्ना-' इत्यनेन कमपि मौस्थि. संबन्धं संकेतयेत्; वैतु. सा. ऋ. (१०, १४६, २) नाउ. (?अरण्यानी- इत्यस्य) ह्रस्वाऽऽपत्त्या सिषाधयिषुः सन् मौस्थि. व्यु. व्यत्यासुकः (जनि->*जनी- इति परिणाम-क्रमो भवति न तु *जनी->जनि- इत्यभिसंधेः)]।

d) ङीष् प्र. तत्स्वरश्च (पावा ४, १, ४९; वैतु. पा ४, १, ४९ आनुगागमपूर्वकम् १अरण्य-(?) इत्यतः प्र. इति)। एस्थि. उप. दीर्घान्तमित्येव नापू. विशेषः। यद्वा मौस्थि. ङीषन्तेन सतैव उप. नापूदि. स्वतन्त्रः कस. द्र.।

e) तु. सस्थ. टि. २अरण्य- > -ण्यानि। यदन्वेकं रू. द्वि३ एकत्र सं१ स्यात् (तु.या. वें. सा.च; वैतु. GW.NW. चोभे अपि रू. सं१ इति, ORN. चोभे अपि द्वि२ इति)।

f) गतिसमासगर्भितः उस., उप. ण्यत् प्र., कृत्-प्रस्व. च (पा ६,२,१३९); वैतु. भा. तैब्रा. (१,७, ७,३) गस. अनुवाकु- इत्यतस्तद्धितः यत् प्र. इति [वैतु. अरण्येऽनूच्य- वैप. (२, १२७) यत्रत्यः कृत्यः क्यब् इहापि ण्यतं कृत्यमेवोद्भावयेत्]।

g) व्यु.?। √*३अर् >*३अर्- (=अग्नि-)+जनि- (=प्रादुर्भाव-) इति कृत्वा बस. पूपप्रस्व., नैप्र. वर्णलोपः शकन्ध्वादित्वञ्च द्र. [तु. *?२अरण- (तेजोहिरण्यवैशिष्ट्य-ञ्च निर्मन्थनक्रियायोगश्चाप्यत्र श्रौतं लिङ्गम् ऋ १, १२७, ४; १२९, ५; १०, १८४, ३); वैतु. या. (५, १०), तदनु पाउ (२, १०२), ते ते प्रागर्वाग्वो विवृतश्च <√*१अद् इति कृत्वा संभेदुकवृत्तय इव।

–णी ऋ १०, १८४, ३; मै १, ८, ९¶; ¶काठ ८, १०[२]; २३, ६; २६,३;७; ¶क ७,६[२]; ४१, ५; शौ १०,८,२०; पै १६, १०२, ७; –ण्योः ऋ ३, २९, २; ७, १, १; ¶तै ३, ४, १०, ४–५; †काठ ३४, १९; ३९, १५; †क ४८,१; †कौ १, ७२; ७९; २,७२३; †जै १, ७, १०; ८,७; ३,५९,१५; पै ११,१,३.

?२अरुणी[a]— -णी ऋ ५, ९, ३.

२अ-रणि[b]— -णिम् शौ १, १८, २.

?अरणीयुमान[c]— -नः मै ४, ९, ५.

१,२अरण्य-, अरण्यानि- १,२अरण-

१अरति[d]— -तये ऋ ७, ५, १; –†तिः ऋ १, ५९, २; [१२८, ६; (८, १९, १; ३९, ६)]; २, २, २; ४, २; ४, २, १; ६, ३, ५; १२, ३; ६७, ८; १०, ३,१; २; ६; ७; ४५, ७; ६१, २०; मा १२, २४; का १३, २, ७; तै ४, २, २, २; मै २, ७, ९; ४, १४, १५[२]; काठ १६, ९; कौ २, ८९६; ८९७; जै ४,१३, ९; १०; –†तिम् ऋ १, ५८, ७; [१२८, ८; (५, १, ७; ६, १४, २) ७, १६, १]; २, २,३; ३, १७, ४; ४, १, १; ३८, ४; ६, ७, १; १५, ४; ४९, २; ७, १०, ३; [(१, १२८, ६) ८,१९, १; (३९, ६)]; २१; १०, ४६, ४; मा ७, २४; १५,३२; ३३, ८; का ७, १०, १; १६, ५, १४; ३२, १, ८; तै १, ४,१३, १; ४, ४, ४, ४; ६, ५, २, १; मै १, ३, १५; २, १३,८; ४, १३, ५; १४,३; काठ ४,५; १८, २१; २८, १; ३९, १५; क ३, ५; कौ १, ४५; ६७; १०९; २, ९९; ४९०; १०३७; जै १, ५, १; ७, ५; १२, ३; ३, १०, १; ३८, ४; ४, २९, ३; –तीन् मै २, ६, १२; काठ १५, ८.

?२अरति[e]— -तौ ऋ ५, २, १.

१अरत्नि[f]— -त्निः तै २, ५, ७, ५¶;

[a]) यनि. सत्तातः संदेहो भवति । कथमिति । स्वरतश्च संबन्धतश्चाऽनुपपत्तेरिति । तथाहि । स्वरतस्तावत् । नापू.+ङीष् प्र. (पावा ४,१,४५) इति कृत्वाऽन्तोदात्त-प्रसङ्ग इति । अथ संबन्धतः । प्र१ इति कृत्वा हि PW. प्रभृ. 'जुनिष्ट'- इति क्रिप. अस्य संबन्धमाहुः । तन्नोपपद्येत । अरण्या अग्नेः प्रादुर्भावयितृत्वे सति स्वतस् तात्कालिक्याःक्रियाया योगतः प्रादुर्भवितृत्वाऽभावात् । ननु ण्यर्थे क्रिप. एतदिष्येतेति । नेति । कथमिति । श्रुतिलिङ्गतः सामर्थ्याऽभावात् । दाशतय्यां हि स्वरभावाऽभावाभ्याञ्चाऽड्भावाऽभावाभ्याञ्च चतुर्धा व्यूढस्य सतोऽस्य क्रिप. २० निगमा भवन्ति । तेषु मध्ये १९ निगमेषु ण्यर्थाऽभावे विप्रतिपत्त्यभावात् प्रकृते विंशे निगमेऽपि ण्यर्थो नैव संभाव्येतेत्यर्थात् (यनि. रू. नापू. एव प्र२ इत्येवं प्रतिपद्य क्रिप. तत्परतया वचनव्यत्ययं चिकारयिषन्तं सा. प्रत्यपि ण्यर्थविषये समानं चोद्यं द्र.) इति । अरण्याः कर्तृत्वे प्रतिहते कथं वा. इति । उच्यते । अत्र 'नुवो जुनिष्ट अरुणी' इत्येवं मूलतः सतः पादस्य स्थाने वर्तमानः शोध-सापेक्षः पा. द्र. (एतदनु युं>युः, शिशुं >शिशुर्, नुवं>नवो, धर्तारं>धर्ता अरं, अग्निं> अग्निः, स्वध्वरं>स्वध्वरः इति द्वितीयान्तानां प्रथमान्ततया शोधः क्रियेत, 'अरुणी' इति च स२ सद् अग्नि-प्रादुर्भावाऽधिकरणतया योज्येत (तु. ऋ ७, ३,९; १०, ३१, १० यत्र यक्र. 'मात्रोः' इति 'पित्रोः' इति पदे सप्र. श्राव्येते, ऋ ८, ७, ५ यत्रत्ये चरमे पादेऽप्येवं 'जातुम्' इति प्र१ सत् कर्तृत्वेन 'अनु···अष्ट' इत्यनेन क्रिप. योज्येत 'रोदसी' इति च स. विषयेऽत्यन्तसंयोगकरणी द्वि. द्र.; वैतु. सा. प्रभृ. 'रोदसी' इति प्र२ इति कृत्वा वाक्यपार्थक्येन कर्तृतया योजुकाः) ।

[b]) तस. नञ्-स्वरः (पा ६,२,२) । उप.<√२रण् यद्र. (वैतु. सा. विकल्पेन<√*१अर् इति) ।

[c]) पा.?, पपा.? (अहुः । अनी । युमानः) । 'अहरहर्णीयुमानः' इत्यनुष्टुप्पादतया शोधः द्र. (तु. तैआ ६,५,३; वैतु. BC. 'अहृणीयमानः' इति) ।

[d]) व्यु.? । √*१अर्+अतिच् प्र.इति संप्रदायः[तु.पाउ (४, ६०), ते ते प्रागर्वाञ्चो विवृतोऽर्थवैशिष्ट्ये सत्यप्येनां व्यु. अव्यभिचारुकाः; वैतु. VVS १०४ √*३अर् इत्यतो निष्पादुकः,उ.म.(मा.यस्थ.) नैप्र.=*अलंमति- इति, म. (गपू.) भा.(तैब्रा २,५,४,४) ६अ+(√रम्>) रति- इति कृत्वा बस. अन्तोदात्तः (पा ६, २, १७२) इति] ।

[e]) सा. (तु. यनि.स्थ.) अरमणीयप्रदेशाऽरण्यान्यतराऽभिधानं सत् नापू. सरूपात् प्राति. भिन्नमेतत् यनि. इतीव व्यु. भेदमपश्यन्नप्यभिसंदध्यात् । एवं BW. पा. असाधुरिति कृत्वा 'अ-रत्नि- इति प्राति. शोधतया ध्रियेतेति । न तु पृथक् प्राति. इहाऽपेक्ष्येतेति मतं भवति । नापू. प्राति. एव श्रुतिस्वारस्यस्य सुस्फुटत्वोपगमात् [जना अस्याऽनीकम् (अस्मिन्) अरतौ निहितं सन् न मिनत् (भवत्) पुरः पश्यन्ति (=क्षणमात्रमेव निहितमवतिष्ठते । क्षणेनैव च जनैस्तत् [अस्मिन् न मिनत्=] सर्वत्र संचरमाणं प्रत्यक्षीक्रियते)] ।

[f]) व्यु.? । १अर्- +(√तन्>) *त्नि- इति तस.

—¶त्निना तै ५, २, ५, १; —¶त्निम् तै २, ५, ७, ५; —त्नी मा २०, ८; का २१, ७, ७; मै ३, ११, ८; ४, ६, ३[२]¶; काठ ३८, ४¶; —त्नीन् शौ १९, ५७, ५; पै ३, ३०, ६; —त्नौ ऋ १०, १६०, ४; तै २, ५, ७, ५[२]¶; शौ २०,९६,४†; —त्न्योः पै १६,१४७,७. [°त्नि- अष्टन्°, एकत्रिंशद्°, एकविंशति°, एकादशन्°,त्रयस्त्रिंशद्°,त्रयोदशन्°, त्रयोविंशति°,दशन्°,द्वादशन्°,नवन्°,पञ्चन्°, पञ्चदशन्°, पञ्चविंशति°,सप्तन्°,सप्तदशन्°,सप्तविंशति°]

¶अरत्नि-मात्र[a]— -त्रम् मै ३, २, ४; काठ २०, ३; क ३१, ५. (*अरत्निमात्रक- *अरत्निमात्रिका-) नाउ. टि. द्र.

¶अरत्नि-मात्री[b]— -त्री मै ३, १, २; ७; काठ ६, १; क ३, १२; —त्रीम् काठ १९, १; ६; क २९, ८; ३०, ४.

?२अरत्नि[c]— -त्नयः ऋ ८, ८०, ८.

¶अ-रत्निन्[d]— -त्निनः मै ४, ३, ८.

अ-रथ[e]— -†थाः ऋ ५, ३१, ५; ९, ९७, २०; १०, ९९, ४; तै १, ६, १२, ६; मै ४, १२, २; काठ ८, १६; शौ ११, १२, २४$; —थेभ्यः मा १६, २६; का १७, ३, ५; तै ४, ५, ४, १.

अ-रथी[d]— -थीः ऋ ६, ६६, ७.

अ-रध्र[d]— -ध्रम् ऋ ६, ६२,३; —ध्रस्य ऋ ६, १८, ४.

अ-रपस्[e]— -†पः[f] ऋ [१०, १५, ४; ३७, ११]; मा ८, ५$; १९, ५५; का ८, २, १$; २१,४,५; तै २, ६, १२, ३; मै ४,१०,६; काठ २१, १४; शौ १८, १, ५१; —पाः ऋ २, ३३, ६; ८, १८, ९; १०, १३७, ५; तै ३, २, ८, ४; शौ १, २२, २; ४. १३, ४†; पै १, २८, २.

अर-मणस्- २अर- द्र.

†अरमति[g]— -तिः ऋ [(१, ३५, ८) २,३८,४]; ७, १,६; ३४,२१;

उस. वा (=प्राप्त्यर्थं तनने तात्पर्यम्) इति कृत्वा सासस्व. वा उपप्रस्व. वा द्र. [तेन नैप्र. *अर्त्नि- इत्यत्र पूप. अन्तेऽकारोपजन इत्यभिसंधिः (तु. कुर्मन्- >कुर्म> पंजा. करम- प्रभृ.); वैतु. पाउ. (४, २) √*१अर्+ अत्निच् प्र. इति कृत्वा चिदन्तोदात्त इति, WW १, १५७ <√*८अर् इति]।

[a]) उस. उप. √१मा+कर्मणि त्रः प्र. कृत्-प्रस्व. च (तु. पाउ ४, १६७; पा ६, २, १३९)। पाप्र. उप. तद्धितस्य मात्रचः प्र. सतः मौस्थि. स्वरूपमिति द्र.।

[b]) उप. मात्र->मात्री- इति परिणामस्य तिस्रो विधाः संभवेयुः। यनि. उप. अनाम्नि सति मात्रच् इति प्र. चित्स्वरकरस्तदन्तात् स्त्री. ङीप् (पा ४, १, १५) इति प्रथमा विधा परिचितचरी। √१मा+त्रिः प्र. इति कृत्वा *मात्रि- इत्यस्य भिन्नस्य प्राति. सतः स्त्री. ङीषन्तत्वं स्यात् (पावा ४,१,४५) इति द्वितीया विधा स्यात्। '—मात्र->*-मात्रक->*-मात्रिका->-मात्रि आ-> -मात्री-' इति चरमा विधा नैप्र. द्र.(तु. अम्बाली-)। तद् एस्थि. एतासामुपादेयत्वतारतम्ये विमृशां धीः प्रमाणम्।

[c]) यनि. सत्तातः संदेहो भवति। अपेक्षाया अदर्शनात्। नन्व् अपा√वृज् इत्यनेन निवारणार्थेन सता कर्मसंबन्धेन युक्ततया श्राव्यमाणं किञ्चिदशुभमेव स्यादिति कृत्वा यनि. १संख्याकात् सरूपाद् भिन्नार्थं सद् भिन्ननिष्पत्तिकतयाऽभ्युपेयमिति [तु. सा. BW. च ६अ+(√रम्>)*रत्नि- इति कृत्वा तस. इति (तथा सति स्वरतश्चोद्यस्याऽपरिहार्यत्वं तु द्र.)। अतोऽस्मिन् पक्षेऽपि उप. भावे इति कृत्वा बस. एव सुवचः स्यात्]। मा त्वेवं मानि। अपा√वृज् इत्यस्य परतः पृथक्कृतिपूर्वकम् आभरणे वृत्त्युपगमात् [अपाऽऽङोरर्थयोर्विषयविभागेन कस्यचिद् वस्तुतः कुतश्चिदपकरणे कस्मैचित्परस्मै चाऽऽवर्जन इत्यभिसंधेः (तु. अप√मे>मि, अपा√मे>मि इत्येतयोः शौ ६, ११७, १ इत्यत्र मै १, १० २ इत्यत्र च समानप्रकारको विवेक इहोक्तां दिशं परिपुष्णन्निवाऽऽञ्योगवति मै. स्थ. 'संभर' इति क्रिप. निदर्श्यमानः)]।

[d]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[e]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[f]) अदन्तं प्राति. इति परमतमनभिमतमिव भवति (तु. भा. K. च; वैतु. सा. उ. म. PW. MW. NW. च)। कथमिति चेत्। उच्यते। उ. म. च स्वपक्षपुष्ट्या उदाहृतस्य यास्कीयवचनस्य तन्मतविनाशकत्वाद् अरपः इत्यस्य न. द्वि१ सतः क्रिवि. इति कृत्वा वा. सुवचतरत्वाच्च। यच्च सा. (तै.) 'विश्वे' इत्यनेन सामानाधिकरण्यमिच्छन् 'अरपाः' इति प्र३ रू. आह, तदप्यसत्। 'एधते' इत्यैकवचनिक्या क्रियया 'अरपाः' इत्यस्य संबन्धस्य निगदस्पष्टत्वादिति [तु. 'जायते विन्दते' इति सांनिध्येन श्रूयमाणे ऐकवचनिके क्रिप. ('विश्वे' इत्यत्र तै. स्थ. संभाव्यमानो श्रेषः यद्र.)]।

[g]) अरम्→ अरम्→ अर-मति- इत्याकारिका मतिरर्वाचामभियुक्तानामत्र यद् भवति (तु. PW. प्रभृ.), तद् असद् इवाऽऽभाति। पपा. अवग्रहाऽभावात्

८, ३१, १२; १०, ६४, १५; ९२, ४; तै ४, ३, १३, ६; —तिम् ऋ ५, ४३, ६; ५४, ६; ७, ३६, ८; ४२, ३; १०, ९२, ५.

**अ-रममाण**[a]— -णः ऋ ९, ७२, ३.

**?अरमि(म्-इ)ष्**[b]— -मिषे ऋ ८, ४६, १७.

***१अररि-, *२अररि-** नाउ. टि. द्र.

**अररिन्द**[c]— -न्दानि ऋ १, १३९, १०.

**†अ-ररिवस्**[a]— -रिवान् ऋ १, १४७, ४; —रुषः ऋ [१, १८, ३; ७, ९४, ८]; १५०, २; ३, १८, २; ५, ७७, १; [(१, ३३, १५) ७, १, १३]; ९४, ८; ९, २९, ५; मा ३, ३०; का ३, ३, २२; मै ४, १२, ६; काठ ७, २; ३५, १४; क ५, २; ४८, १३; —रुषे ऋ ७, ५६, १९; मै ४, १४, १८.

**अररुषी**— -षीः शौ १९, १५, २; पै ३, ३५, २.

**अरुरु**[d]— -रुः तै १, १, ९, १-३; मै ४, १, १०$^{२}$; काठ १, ९; २५, ४$^{३}$¶; ३१, ८$^{५}$; ¶$^{३}$; क १, ९; ३९, १$^{३}$¶; ४७, ८$^{५}$; ¶$^{३}$; शौ ६, ४६, १$^{०}$; —रुम् ऋ १, १२९, ३; १०, ९९, १०; मा १, २६; का १, ९, ४; मै १, १, १०; ४, १, १०; काठ १, ९; २५, ४; ३१, ८; क १, ९; ३९, १; ४७, ८; —०रो मा १. २६; का १, ९, ४; पै २, ३७, ४.

---

कामं नञ्-समास इह भवतु, न तु पराभिमतः बस.। रमति- इत्येतत् प्राति. हि निद्-अनिद्-अन्यतर-अति-प्रत्ययान्ततया (तु. पाउ ४, ६५) मनोबन्ध-, तद्वद्- अन्यतर-वाचकतया च श्रुत्यन्तरप्रसिद्धं (तु. शौ ६, ७३, २; ३; ७, ७९, २)। अत्र चैतत् प्राति. उप. भवति नञ् च पूप. भवतीत्यत्र बाहृचश्रुत्यन्तरसाधारण्येन विशेषणमात्रतया 'अनर्वन्-' इत्येतेन 'अनेहु-' इत्येतेन च साहचर्येण च श्रूयमाणं (तु. ऋ ८, ३१, १२) ज्ञापकं भवेत्। उत्तरपदाद्युदात्तस्तावत् उसं. (पा ६,२,११६)।

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[b]) 'अरम् इषे' इति प्रास. पूपप्रस्व. (पा ६, २, २); वैतु. पपा. ARV. च द्वे पदे इति, वें. सा. च तथेति कृत्वा उप. √२इष्>इषे (लटि उपु१) इति पूप. च तत्संबद्धं सत् (१अर->) कर्मणि द्वि१ इति च, PW. प्रभृ. च यनि. प्राति. गस. (=*अरम्+√१इष् इत्यस्य कृद्वृत्तम्) इति च वदन्तः स्वरतः पर्यनुयोज्याः। तथात्वे हि कृत्-प्रस्व.स्यादित्यभिसंधेः। 'महुः' (द्वि३) वः (द्वि३) [अरमिषादिविशेषणयुताय (इन्द्राय= तदीया यूयमिति कृत्वा युष्मत्प्रीत्या तत्प्राप्तये)] 'स्तुवामहे' इति पूर्वार्धे वा. द्र. (वैतु. सा. वाक्यद्वयं प्रकुर्वाणः प्रथमे वाक्ये 'महुः' (ष१) इत्यस्य वः (>ष१=तव?) इत्यस्य च समानाधिकरणतां द्वितीये वाक्ये च 'स्तुवामहे' इति क्रिप. योगं वदन्, GW. सा. द्वितीयं वाक्यमनुवदन्)। एस्थि. ननु 'स्तुवामहे' इत्यत्र निघाताऽभावः किंहेतुक इति। छन्दोहेतुक इति। कथमिति। पादादित्वादिति। न हीति। कथमिति। जागतेन मानेनाऽपादादित्वादिति। सत्यमेतत्। आनुष्टुभं तु मानमत्र द्र.। तेन 'स्तुवामहे' इत्येतद् द्वितीयपादस्याऽऽदौ भवतीति (तु. ORN.)।

[c]) व्यु. ?। *१अररि- [=६अ+(√२रा>कर्तरि वा भावे वा) ररि- इति वस.वा (=अदातृक-) तस.वा(=अदत्त-यस्मिन् कल्पेऽन्तोदात्तस्तु दुरुपपदः द्र.)] इति कृत्वा तत्पूर्वः (√१दा>कर्तरि) दु- इति उस. इति दे. (१, १२) यस्थ. सा. च; पूर्वस्मिन्नेव कल्पे पूप. <√*१अर् इति वेति सा.; *२अररि- [=कपाटपर्यायः(व्यु.?)]+(√३दा> कर्तरि)दु- इति कृत्वा उस. इति PW. अनु GW. L ४४१। सर्वथापि त्वेवं पूपप्रस्व. अनुपपन्न इति कृत्वा कोऽपि भूयोविमृश्यस्वरूपः बस. एव शरणीयः।

[d]) व्यु. ?। (√*२अर्+भावे विच् प्र.=)*२अर्-+*१अरु- [=√*२अर्+कर्तरि उन् प्र. उसं. (पाउ १, ९)] इत्येवम् उस. उपप्रस्व. स्यात् (=बाधया बाधमान-) इति प्रथमः कल्पः। यद्वा (√*२अर्+ कर्तरि विच् प्र.=)२अर्-+६अ+रु- (<√२रा) इत्येवं कस. [=अः (बाधमानः) चासाव् अरः (अदाता) च इति कृत्वा निन्दाऽर्थे उल् प्र. तद्धितः उसं. (पा ५, ३, ७४) लित्त्वाच्च स्व. तदवस्थ इति द्वितीयः कल्पः। अथाऽपि वा *२अर्- इत्यस्यैवाऽतिशयितेऽर्थेऽभ्यासः स्यात्, नापूदि. प्र. स्व. चेति तृतीयः कल्पः। अपि वाऽऽद्युदात्तः क्वाचित्कः पाभे. (तु. पाण्ड. शौ. यस्थ.) ज्ञापकः स्याद् यथा पुराकाले प्रवृत्तिमान् सन्नपि सामासिकः स्वरः कालेनेहाऽऽख्याताऽभ्यस्तविधया (पा ६, १, १८९) आद्युदात्ततया पर्यणंसीदिति। स्याद्वा द्वितीये कल्प एव पक्षे उन् प्र. तद्धितः उसं.(पा ५, ३,७४)। एस्थि. √*२अर् इत्येतदर्थप्राधान्येन व्यु. द्र. इत्यभिसंधिः [तु. GW. शत्रुपर्यायवाचिना अरि- इत्येतेन पक्षे संजिगमयिषुः; वैतु.पाउ. (४,८४) √*१अर्+अरुः प्र. इति, PW. प्रभृ. ६अ+(√२रा>)ररु- (स्वरः?) इति तस.इति (तथा सत्युत्तरादि-स्वर उपपत्तिसाकाङ्क्षः द्र.)]

[e]) आद्युदात्तोऽपि पाभे. (तु. पाण्ड. मुपा. च टि.च)।

√*अरण् २अर्णव- टि. द्र.
¶अ-रशान्[a]- -नम् काठ २६, ६; क ४१, ४; -नान् मै ३, ९, ४.
अ-रश्मन्[b]- -श्मानः ऋ ९, ९७,२०.
अ-रस,सा[a]- ०स शौ ६. १३८, ३; -०स शौ ४, ६, ६; पै १, ६८, ४; ४, १७,४; ५, ८, ५; -सः शौ ४, ६, ६; ५, १६, १-१०; २२, २; पै १, ६८,४; ३, १६, ५; ५, ८, ५; ८, २, ६; ४, १-११; -सम् ऋ १, १९१, १६[२]; शौ ४, ६, १; ६[२]; ७,२[२]; ५, ४, ९; ८, ६; १३, ८; १०; ११; ६, २९, ३; १००, ३; १३८, ३; ७, ५८, ३; ७; १०, ४, ३; ४; ११, १२, १७; १९, ३४, ३; पै १, ४४, ४; ४८, ४; ६८, ४; ९३, ४; १११, ३; २, १, १[२]; २, १; ५; ३, ९, १[२]-६[२]; ७; ४, १७,३[b]; ४; ७; १९, ४; ५; ७; ५, ८, ५[२]; ८; ७, १८, ७; ८, २, ९-११; ७, १-४; ११; ९, १०, ५-८; १२[३]; ११, १२; ११, ३, ३; १०; १६, १५, २-४; -सस्य शौ ४, ६, ६; ७, ५८, ५; पै १, ४८, १; ५, ८, ५; -सा शौ १०, ४, ८; पै १६, १५, ८; -साः शौ २, ३१, ३; ४, १८, १; ९, २, १०; १९, ३४, ३; पै २, १५, ३; ५, २४, १; ७, ८, ५; ११, ३, ३; १५, १९, ३; १६, ७६, ९; -०साः शौ ५, १३, ७; -सान् शौ २, २७, १-६; १९, ३४, २; १०; ३५,५; पै २,१६,१;८,२,७; ७, ७;११,३,२;४,५;७,३;-सासः शौ १०,४,९; पै १६, १५,९.
अरस-तम- -मम् शौ ५, १३, ९; पै ७, ३, ५;८, २, ८.
अरस-तर,रा- -राः शौ ७, ८०,१; पै १, २१, १.
?अरसावधी[c] पै ३, १६, ४.
*?अराज्- अराजिन्- टि. द्र.
अ-राजन्- -जानः पै १, ९२, २.
¶अ-राजन्य[d]- -न्यः मै १, ५,८.
अराजिन्[e]- -जिनः ऋ ८, ७, २३.
*अराटकि- नाउ. टि. द्र.
अराटकी[f]- -की शौ ४, ३७, ६; पै १३,४, १०; ११.
¶अराड[g]- -डः मै २, ५, ९.
अराड्य[h]- -ड्यौ तै ५, ६, २१, १.
*अराढ- अराड- टि. द्र.
*अराढकी- अराटकी- टि. द्र.
अराण- सम्[०]
अ-राति[i],*ती[j]- -तयः ऋ १,२९,४; ४३, ८; २, २३,५; ९;३५,६;

[a]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[b]) 'त्ववारसम्'(मूको.)>'त्व् अवारसम्'(सुपा.?)।अत्र 'तव। अरसम्'इति द्विपदःशोधः द्र.(तु.टि.नपात्->-पात्)।

[c]) 'अरसः। अवधीत्' इति शोधः द्र.।

[d]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[e]) व्यु.?। √*२अर्>२अर्-+आजिन्-[=आ √अज्+ताच्छीलिकः इनिः प्र. (तु.पा ३,२,१५६) इति उस. उपप्रस्व. [पा ६, २, १३९ (=प्रतिवन्धकान् विद्रावयितृ-)]; वैतु. वें. w. GW. MW. च पर्वत-विषयतया ६अ+(√राज्>)*१राजिन्- इति तस. इति (तथा सत्यन्तोदात्त उपपत्तिसाकाङ्क्षः सन् कथमपि पा ६, २, १५५ उउ. उसं. स्यात्); सा. मरुद्विषय-तया ६अ+*२राजिन् (=राजन्-+मत्वर्थे तद्धितः इनिः प्र.) इति तस. इति वा, ?*अराज्- (=६अ+राजन्- इति बस.)+तद्धितः इनिः प्र. इति बस. इति वेति; पपा. अप्यवग्रहाऽभावो नञ्-पूर्वत्वस्य संकेतः स्यात्]।

[f]) मूको. दीर्घाऽऽदिरपि पा. द्र.। व्यु.?। √*६अर् [मौस्थि. <√*२हर्(=√*२हृ)<√*शर्(=√*शृ) <>√*कर् (=√*कृ)] >*५अर्- [=शृङ्ग-; तु. ३हरिण-; ww (१, ४०३उ)]+१अर्ध- (=प्रकर्षः <√ऋध्) इति षतस. सासस्व. इति कृत्वा *१अरार्ध-इत्यस्मिन् प्राति. उपपदे सति [√*कृ+डिः प्र. उसं. (पाउ ४, १३९)=] *कि- इति उप. योगे *अरार्ध-कि->[स्त्री. ङीष् (पावा ४, १, ४५)]-की- इति त्रिप्रस्थानस्य प्राति. मौस्थि. अभ्युपेयमानस्य सतः नैप्र. *अरार्धकी->*अराढ(>ड>*ट)की- इति परिणामः अनुसंधेयः (तु. सह श्रूयमाणं शृङ्गपदप्रधानं वि.; नाउ. ?सनि. प्राति. च, वर्धकि- प्राति. च लोके)।

[g]) व्यु.?। (√*६अर्>) *५अर्-+१अर्ध- (तु. नापू. टि.) इति कृत्वा बस. पूपप्रस्व. (पा ६, २, १) द्र. (=शृङ्गप्रकर्षवत्)। स्वरूपतस्तु नैप्र. *१अरार्ध->*अराढ->यनि. इति सुलभः क्रमः।

[h]) व्यु.?। नापू. स्वार्थे यत् प्र. (पा ५, ३, १०३) यद्वा *३अर्-+१अर्ध- इति षतस. सतस्तत्रसाधवीयः यत् प्र. (पा ४,४,९८)। उभयथाऽपि तित्स्वरः (पा ६, १, १८५)। दीर्घादि प्राति. अपि यद्र.।

[i]) द्विप्रकृतीनां ना.स्थानं द्र.। तद् यथा। यत्र भावपरोऽर्थस्तत्र ६अ+(√१रा>)*१राति- (=प्राप्तिप्रतिबन्ध-) इति। यत्र च तद्विशिष्टपरं सद् वा. वि. भवति, तत्र उप. कर्तरि क्तिजन्तः *२राति- इति विशेषः द्र.। उभयत्राऽपि तस. नञ्-स्वरः (पा ६, २,२)।

[j]) तु. टि. इहैव '-तिम्' (पै ५,२६,३-६)।

३८, ९; ५, २, ६; [६, ४८, १६; ५९, ८]; ७, ८३, ३; ५; ८, ९, १; ७१, ४; ९, ७९, १; १०, ५७, १; ८५, ३२; १३३, ३; १७४, २; मा १, ७[२]; १४; १६; १९; २९[४]; का १, ३, ३[२]; ५, १; ६; ७, १; ८, ३; १०, १[४]; तै १, १, २, १; ४, १; ५, १; २; ६, १; ७, १; ८, १; १०, १; २, ५, १; ३, १, १; ६, १, ८, ३; २, १०, १; †कौ १, ५५५; २, ११५३; †जै १, ५७, २; ४, १, ६; शौ १, २९, २†; ५, २३, २; ६, १२९, १–३; ११, १०, २१; १३, १, ५९†; १४, २, ११†; १९, ५०, ३; †२०, ७४, ४; ९५, ४; १३९, १; पै १, ११, २; ७, २, २; ९; ७, ८; १४, ४, १३; १६, ८७, १; –तये मा १, ११; का १, ३, ७; मै १, १, ५; ४, १, ५[२]; शौ ५, ७, १; ३; पै ७, ९, ४; १९, ३; ४; –तिः ऋ २, ७, २; ८, ४८, ३; १०, ३४, १४; खि ४, ५, १४; तै ३, २, ५, ४†; मै १, १, २; ४; ६; ७[२]; ८; ११; २, १६; ३, १०, १; ४, १, ७; काठ १, २; ४; ५[३]; ६–८; १०; ३, ६; ३१, ४[३]; ५; ६; क १, ५[३]; ६; ४७, ४[३]; ५; शौ २, ७, ४; ६, १२४, ३; १२, ३, १७: पै ८, ३, ४; १३, ३, १४; –तिम् ऋ ४, ४, ४; १०, ६३, १२; मा १३, १२†; २७, ६; का १४, १, १२†; २९, १, ६; तै १, २, १४, २†; ८, १०, २; ४, १, ७, ३; मै १, १, ११; २, ११; १४; ४, ३[२]; ५, १[a]; २, ७, १५†; १६; काठ १, १०; २, १२; ३, ३; ५, ४; १६, १५†; १६; ३१, १४; क १, १०; २, ६; १०; २५, ६†; ‡[b]कौ १, ५४०; २, ३६९; ‡[b]जै १, ५५, ७; ३, ३०, १२; शौ १, १८, १[२]; २, १०, ७; ३, १, १; २, १; १५, १; ५, ७, ३; ६; ८, २, १२; १२, २, ३; ४५; १९, ३१, ११; पै १, ६९, २; ८६, २; ३, ५, १; ६, १; ४, ८, १–१३; १८, ५; ५, २६, ३–६[c]; ९; ७, ९, ४; ८; १०, ५, ११; १६, ४, २; २५, ७; –*तियम्[d] पै ५, २६, ४; ६; ८; –तीः ऋ १, ११६, २१; ३, १८, १; २४, १; ४, [२६, ७; २७, २]; [५०, ११; (७, ६४, ५; ६५, ५; ९७, ७)]; ५, ५३, १४; ६, ४, ५[e]; १६, २७[२]; ४४, ९; ७, १, ७; ९७, ९; ८, ११, ३; ३९, २[f]; ९, ९६, १५; ९७, १०; खि ३, १६, ३[f]; ४, ५, ५; १३; मा ५, २६; ६, १; ९, ३७; १०, १; १२, ९९; १३, २६; का ५, ७, १; ६, १, १; ११, १, ३; २, १; १४, २, १२; तै १, ३, १, २; २, २; ६, १; ६, १, १; ८, ११, १; ४, १, ४, ४; २, ८, १; ९, २; ५, १, ५, ९; मै १, २, १; ५, ३; ६, २; २, ६, ८; ३, ६, ३¶; ४, १४, ६‡[g]; १७; काठ २, १; १५, ६; ३९, १; क १, १३; जै ४, २५, १†; शौ १, २, २; १०, ५, ३६; १३, १, २०; १६, ९, १; पै ३, ३३, ६; ५, ६, ८?[h]; ७, १५, ४; १२, ६, ८; १४, १, ९; १६, १३२, १; –तीनाम् खि १, ५, ५; –*तीम्[e] पै ५, २६, ७; ९; –०ते शौ ५, ७, ८; –०ते शौ ५, ७, १; २; ७; १४, २, १९; पै ७, ९, १–३; ५; –†तेः

[a]) 'आरातिम्' इति केषांचिद् मूको. पा. ।

[b]) '-तीः' इति ऋ (९, ९७, १०) पाभे. ।

[c]) प्रकृते सूक्ते प्रथमे मन्त्रे पूर्वोत्तरविरहितस्य 'रा?' इत्यस्य पूर्तिकरं द्वितीये च मन्त्रे 'अरात्याः' इति रू.; ४थे, ६ठे, ८मे च मन्त्रेषु मूको.'रातीयम्'(=*अरातियम्) इति रू.; ९मे च मन्त्रे मूको.'रात्रीम्' (=अरातीम्) इति रू. च *अराती-(>तु. खि १, ५, ५ '-तीनाम्') इत्यस्य ङीषन्तस्य (पावा ४, १, ४५) सद्भावप्रामाण्ये संकेतः द्र. । एस्थि. १मे मन्त्रे 'रा'=*अरात्याः, २ये मन्त्रे 'रात्यात्' =*अरात्याः, ४थे, ६ठे च मन्त्रयोः 'अरातिम्'=*अरातियम्, ७मे मन्त्रे 'अरातीन्'=*अरातीम्, ८मे मन्त्रे 'अरातीन्'=*अरातियम्, ९मे च मन्त्रे 'अरातिम्' =*अरातीम् इत्येवं शोध-परम्परा द्र. (अनयैव दिशाऽन्येष्वपि बहुषु स्थ. मूको. अनुसंधानतो दीर्घान्तस्य प्राति. सद्भावोऽङ्गीकार्येतेति संभाव्येत) ।

[d]) तु. नापूटि. ।

[e]) प्र१ छन्दोऽनुरुद्धं दीर्घत्वम् (तु. सा. =अरातिरिति, L ३७६; वैतु.सा. द्वि३ इत्येवमपि मृषा विकल्पुकः) । यद्वा *अरातिइ-[=६अ+*रा-तिइ-(=√२रा+भावे वा कर्तरि वा+तिइ-(<√तॄ) इति तस.) इत्यस्य प्र१ द्र. (तु. *अमतिइ-)] ।

[f]) सुपा. स्वरश्लेषः द्र. ।

[g]) विशिष्ट इह ऋ (७, ८२, १) पाभे. ।

[h]) नकारान्तः सुपा. सु-शोधः द्र. । अन्त्यनकारहीनः मूको. पा. विसर्जनीयेन पूर्येत, न तु नकारेण । पुंसि प्रयोगस्य श्रुत्यप्रसिद्धत्वात् ।

ऋ८,७१,१; कौ १,६; जै १,१, ६; –त्या शौ ३, ३१, १; –त्याः ऋ ९, ७९, ३[२]; शौ १०, ३,७; १३, ८, २; –त्याः पै ५, २६, १[a]; २[a]; १६,६३,७; –त्यै तै १, १, ४, २; काठ १, ४; ३१, ३; क १, ४; ४७, ३; शौ ५, ७,१०. [°ति- अन्°]

अराति-दम्भि[b]– -म्भिम् खि १, ५, ११.

अराति-दूषण[c]– -णः शौ १९, ३४, ४; पै ११, ३, ४.

अराति-दूषि[d]– -षिः शौ २, ४, ६.

अराति-ह[e]– -हम् शौ १९, ३५, २; पै ११, ४, २.

अराति-हन्– -हनम् काठ ३९, ५.

अरातिघ्नी– -घ्नीः काठ ३९, १.

√अरातिय[f], अरातियात् शौ ४, ३६, १.

*अ-रातिर्- *अरातिर्-वन्- *?अराती- अराती-वन्- टि. द्र.

√अरातीय[f], अरातीयति तै १, ३, २, १; ६, ३, १[g]; ३, ५, ८, १; मै १,२,१०; ३,८,८¶; काठ २, ५; ९; ११; १२; ३, ३; ७, ६; २५, ९; क २, ५; ५, ५¶; ४०, २; अरातीयन्ति खि २, ८, ३; मै ४, ३, १[२]; ८,२¶; काठ २८, ४¶; क ४४, ४¶; अरातीयात् मा ११,८०; का१२, ७, १५; तै ४, १, १०, ३; मै२, ७, ७; ३, १, ९; काठ १६, ७; १९, १०; क ३०, ८; पै १, ४२, ४.

अरातीयत्[h]– -यतः[i] ऋ १, ९९, १; मा १२,५; का १३, १, ६; तै १, ६, १, १; ५, २; ४, २, १, १; ९, २; मै १, २, १०; २, ७, ८; काठ १६, ८; क २, ५; –यन् काठ ३१, १४; –¶यन्तम् तै ३, १, ४, ४; मै ३, १, ३.

*अरातीया- अरातीया-वन्- अराती-वन्- टि. द्र.

अरातीयु[j]– -योः शौ १०, ६, १; पै १६, ४२, १.

†अराती-वन्[k]– -वा ऋ १, १४७, ४[l]; २, २३, ७; ८, ६२, ११; ९, ११४, ४; तै ७, ४, १५, १; काठ ४४, ४.

?अरादविदुरश्चसहनुः[l] पै ५, २, ५.

अ-राद्धि[m]– -द्ध्यै मा ३०, ९; का ३४, २, १.

†अ-राधस्[n]– -धसः ऋ ५, ६१, ६; ८, ६४, २; १०, ३२, २; ६०, ६; कौ २, ७०५; जै ४, ७, १०; शौ $१२, १०, १४; ११, ४; २०, ९३, २; –धसम् ऋ १, ८४, ८; ९, १०१, १३; कौ १, ५५३; २, ६९३; ७३६; जै १, ५६, ९; ३, १२, ८; ५६, २०; ४, २६, १; शौ $५, ११, ७; ८; २०, ६३, ५; $पै ८, १, ७; ८; १६, १४६, १०.

---

[a]) तु. टि. -तिम् (पै ५, २६, ३–६)।

[b]) षतस. सासस्व. (पा ६, १, २२३) । सुपा. व्यर्थमाद्यन्तोभयस्वरः सन् सु-शोधः द्र.।

[c]) उस.उप. √दुष् > दूषि + कर्तरि ल्युः प्र. कृत्-प्रस्व. च (पा ६, २, १३९)।

[d]) उस. इञन्त-कृत्-प्रस्व. (पा६,१,१९७;२,१३९)।

[e]) सस्व. एपू. द्र.। उप. √हन् + डः प्र.(पा३,२,४९)।

[f]) क्यजन्तः नाधा.। दीर्घत्वभावाऽभावौ यस्था. द्र.।

[g]) आत्मन इच्छायां क्यचं ब्रुवाणः भा. चिन्त्यः। अरातेरात्मन इच्छाया विषयत्वाऽयोग्यत्वात्।

[h]) शतृशपोर्निघाते धास्व. (पा ६, १,१८६;१६२)।

[i]) विभक्तिरुदात्ता भवति (पा ६, १, १७३)।

[j]) ताच्छीलिकः उः प्र. तत्-स्वरश्च (पा ३,२,१७०)।

[k]) व्यु.?। *अराती- इति दीर्घान्त उपपदे √वन् + कर्तरि क्विप् प्र. (पा ३,२,७६) इति कृत्वा उस. उपप्रस्व. (पा ६, २, १३९) इति प्रथमः कल्पः। √अरातीय् > *अरातीया- (पा ३, ३, १०२) इत्युपपदे पूर्ववत् उस. कृते सति नैप्र. *अरातीया-वन्- > यनि. इत्यन्तोदात्तप्रयोजिततत्पूर्वलोपात्मकः परिणाम इति द्वितीयः कल्पः। अथ पाप्र. √अरातीय् + वन् प्र. उसं. (पा ३,२,७५)। ततोऽकारयकारयोर्लोपः (यक्र. पा ६, ४, १४८; १, ६६) इति वा। *अरातीया + वन् प्र. तद्धितः उसं. (पावा ५, २, १०९) इति कृत्वा भत्वे उसं. (पा १, ४, २०) पूर्ववद् अवर्णलोपे यलोप इति वा। *अरातिर् + वन्- (गपू.) प्र. इति वेत्येवं कल्पपञ्चतयं समूढं द्र.। तत्राऽपि द्वितीये कल्प आस्थाविशेषश्चेति दिक् [तु. अमती-वन्-; वैतु. पपा. PW. प्रभृ. च अराति-वन्- इत्यवग्रहमुखा भवन्तो मध्ये दीर्घं नोपपादुकाः; भा. तै. (७, ४, १५, १) सा. ऋ (१, १४७, ४) चोत्तरांऽशं वनिप् प्र. इति वचनतः पित्-स्वरतः प्रसज्यमानलक्ष्यविघातं प्रति पर्यनुयोज्यावित्यपरो विशेषः]।

[l]) 'अर्धे विषिते ससन्तु' इति शौ. (४,१,६) पामे.। प्रकृते कूटे पा. 'अरात्' 'अविदूरः' 'सह-नुः' इति पिपठिष्यते।

[m]) तस. नञ्-स्वरः (पा ६, २,२)। उप. यद्र.।

[n]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

१अ-राय[a]– -यासः ऋ ८, ६१, ११.
२अराय[b]– -०य पै २, ६७, २; –यः पै २, ६७, १; ६, १४, ७; ८; –यम् शौ २, २५, ३; पै ४, १३, ४; ६; ७, ११, ६; –याः शौ १२, १, ५०; –यान् शौ ८, ६, ४–६; १२; ११, ६, १६; १६, ६, ७; पै १५, १४, ९; १६, ७९, ४–६; ८०, ३; ८१, २; ५; –येभ्यः शौ ८, २, २०; पै ५, ३४, ५[c]; १६, ४, १०.
अरायी[d]– -०यि ऋ १०, १५५, १;२; –य्यः शौ १, २८,४; २, १४,३; ४, १७,५; १८, ७; ८; ७, २३, १; पै २, ४, ५; ५, २३, ७; २४, ७; ८; –य्यम् ऋ १०, १५५, २.
अराय-क्षयण[e]– -णम् शौ २,१८,३.
अराय-चातन[e]– -नम् शौ २,१८,३.
?√*अराय्[f]
अराय्य[g]– -य्यम् खि ५, १०, २.
*अरार्धु- अराटकी-, अराड- टि. द्र.
अराल[h]– -लाः खि ५, १७, १.
†अरावन्[i]– -रावा ऋ ७, ५६, १५; ६८, ७; ८, २८, ४; ९, २१, ५; १०, ३७, १२; –राव्णः ऋ १, ३६, [१५; (७, १, १३)];

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. *राय- (=√२रा+कर्तरि णः प्र. युक् च), वैतु. या. (६,२५) प्रभृ. बस. इति कृत्वा उप. रै-पर्यायीकुर्वाणा घञन्तमिव प्रतिपादुकाः सन्तः प्रसज्यमानाऽन्तोदात्ताः (पा ६, २, १७२) चिन्त्याः।

[b]) व्यु.?। रक्षोऽसृक्पाव-गर्भाद-जिघत्सुत्वादिहिंसाप्रधानविशेषणसहश्रुतिभिः (तु. यनि. स्थ.) लिङ्गितं भवति; यथेह √*६अर् > *५अर्- +(√इ+भावे घञ् प्र.=) *आय- इति कृत्वा बस. पूपप्रस्व. (पा ६, २, १) ='अराऽऽय-' इति [वैतु. या. (६, ३०) प्रभृ. तस. इति कृत्वा नञ्-पूर्वत्वे सति √२रा इत्यत एव निष्पादुकाः सन्तः स्वरतश्चिन्त्याः]।

[c]) '-यम्यः' इति मुपा. शोधाऽर्हः।

[d]) रक्षोजातिविशेषीयत्वाद् योपधत्वे सत्यपि ङीष् प्र. उसं. (पा ४,१,६३)। यनि. रू. आमन्त्रिताद्युदात्तः द्र.। [वैतु. सा. (शौ १,२८,४) स्त्री. पुंयोगीयम् (पा ४, १, ४८) प्र. प्रस्तावुकः]।

[e]) कास. ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[f]) √*७अर् [मौस्थि. <√*ह (घ, ग, ख, क, श, क्ष, स्क)र् <√*अस्कृ खनने] >*६अर्- (अस्य गृहरक्षित्रोरर्थे शुरण- इत्येतत्-साजात्यमित्यभिसंधिः) >यनि. नाउ. व्यु. औपयिकः क्यङन्तः नाधा. रक्षितृभावे द्र.।

[g]) भावे यः प्र. कृत्येषु उसं. (पा ३,१,९५ उउ.) प्र. स्वरश्च [तु. मूको. √*मृ>मराय- इति शौ. (२०,१२७, ८), शांश्रौ (१२, १७, २) कुलाय- (=मौस्थि. साजात्यभाक् यद्र.) इति च पाभे.]।

[h]) व्यु. ?। √*८अर् (तु. WW १, १५७)। यद्वा √*४अर् [तु. WR. (शौ २०, १३४, १) ?*आ-सन्नाः' इति पठन्तौ]+आलः प्र. [वैतु. आलच् प्र. इति भो. इति पाउना. (तथा सति स्वरस्तु नोपपद्येतेति दिक्)] प्र.स्वरश्च। यत्तु *अरालाच्,ञ्च्->-लाक् इतीव गपू.शौ. (पाएडु.) अश्रावि, तन्नेष्टम्। नाउउ. मन्त्रेषु प्रागादीनाम् अधरागन्तानां चतुर्णामेव क्रिवि. सतां पदानामावृत्तिदर्शनाद् न प्रकृतं पदं तत्सजातीयमित्यस्य विषयस्य सुवचत्वाच्च नाउउ. मन्त्राणां वा. दि. एव च प्रपु३ संता क्विप.कर्तृसंबन्धेन युक्तस्य सतः प्र३ कस्यचिन्नाम्न एवाऽऽकाङ्क्षितत्वाच्च।

[i]) व्यु.?।(√*२ वा ६ वा अर्+भावे अप् प्र.=)*अर- (>स्वार्थे *अरक->नैप्र.) *अरा- +*वन्- (=√वन्+भावे क्विप् प्र.) ='अरे (प्रतिबन्धे वा हानौ वा) वन् (मनः) यस्य (पाप्र. वन् प्र. तद्धितः उसं. (पावा ५, २, १०९) इति बस. पूपप्रस्व. (वैतु. पपा. अनवगृह्णन् नञ् पूप. इतीव विज्ञापुकः)। PW. प्रभृ. तु ६अ +*रावन्- (<√२रा) इति तस. इति संवादुकाः। यत्तु ऋ ७,६८,७ इत्यत्र यनि. भिन्नं सदपरं सरूपं प्राति. इति कृत्वा भिन्नायाः व्यु. विषयः [तु. सा. (<√*१अर् इत्यभिसंधाय) 'अरणवानभिगन्ता' इति; PW. =२अर्वत्- (=रथ-) इति (तथा च सति स्वरस्तु दुरुपपदः द्र.)] इति पराऽभिप्रायो भवति, तदनिष्टम्। यनि. प्राति. प्राकरणिकाऽर्थतः सुसंगतत्वात् कल्पनान्तरस्याऽन्यथासिद्धेः ['यदा भुज्युं तस्याऽऽत्मीयत्वेनाऽनुभूयमानाः सखायोऽपि पापवृत्तयो भूत्वा मध्येसमुद्रं जहुः, तदा किल कश्चिदपर एव नितान्तमसंबद्धः (=१अरणः) शत्रुबुद्धिर्वाऽपि सन्नश्विनोः संभक्तत्वाऽभिसंबन्धेन मनोप्रदिम्ना नेदीय इव प्रेरितो भूत्वा तं निस्तारयामास' इति श्रुतिस्वरस इत्यभिसंधेः (वैतु. वें. सा. च भुज्युरेव 'अरावा' इति व्यशेषीति कृत्वा 'पर्षत्' इति क्विप. प्रपु१ सदपि मपु२ भावयित्वा व्याचक्षाणौ; PW. प्रभृ. च दैवताभिसंबन्धेन परस्याऽप्यात्मीयभावस्य महिमानमपश्यन्तः गपू. व्यु. चाऽर्थांश्च वितथं प्रतर्कुकाः)।

१६[a]; ८,६०,१०[a]; ९,[१३,९; ६३,५; (३९,५)]; ६१, २५; कौ १,५१०; २,५४५;५६३;८९५; जै १, ५२, १४; ३, ४३, १; ४४,९; ४, १४, २; –राण्णे ऋ ७,३१,५; शौ २०, १८,५.

१अरि[b]– -रयः खि ४, ५, १; –रये ऋ ६,१३,५; –॑रिः ऋ १, ४, ६;९,१०;१५०,१; ७, ६४, ३; ८, २, १४; ५१, ९; ७२, १६; ९, ७९, ३; १०, २८, १; ३९, ५; खि ३, ३, ९; ५, ११, १; मा ३३, ८२; का ३२, ६,१३; कौ १, ९७; २, ९५९; जै १, ११,१; ४, १९,१; शौ २०,६८, ६; ७१, १६;१२७, ११; –रिम् ऋ २,८,२;५,४८,५;–॑र्यः ऋ १,७०,१;७१,३; ७३,५;११८, ९; १६९, ६; १८४, १[c]; १८५, ९; २,१२,४[d]; ५; ३,४३, २[c]; ४,२,१८[c]; १६, १९; २०,.३[c]; २९, १; ३८,२; ४८, १; [५०, ११; ७, ६४, ५; ६५, ५; ९७, ९]; ५, २, १२; ३३, २; ६; ३४,९; ५४, १२; ६, १४, ३; [१५, ३; (१६, ३३); १०, ११५, ५]; १६, २७[e]; २०, १; २४, ५[c]; २५, ७; ३६, ५[c]; ४५, ३३; [४८, १६; ५९, ८]; ७, ८, १; २१, ९; ३४, १८; ४८, ३[e]; ५६, २२; ६०, ११; ६८, २; ८३, ५; ९२, ४; ८, १, ४; २१, १६[c]; २४, २२[c]; ३४, १०[f]; ३९, २; ४८, ८; ६०, १२; ६५, ९[c]; ६६, १२; ९४, ३; ९, २३, ३; [६१, ११; १०, १९१, १]; ७९, [१; १०, १३३, ३]; १०, २०, ४; २७, ८[e]; ४२, १; ५९, ३; ७६, २; ८६, १[c]; ११६, ६[c]; १४८, ३; मा १५, ३०[g]; २६, १८[g];

[a]) सतोबृहत्यां विषमयोर्जागतयोः पादयोरवसाने लगौ स्यातां (तु. तृतीये पादे) इति कृत्वा 'अरावणः' इत्येवमत्र मूलतः पा. संभाव्येत [येनाऽक्षरद्वयेनोनेऽत्र पादेऽक्षरमप्येकं सुपूरं स्याच्छन्दश्च सुपठमित्यभिसंधिः (तु. L ५२५)]।

[b]) √*अर्+इः प्र. उसं. (पाउ ४,१४०)। तत्स्वरः। ननु स्वामि-स्तोत्राद्यर्थपरं प्राति. अन्यच् शत्रुपरं चाऽन्यदिति प्रागर्वागभिमतं विवेकं [तु. या. (५, ७) प्रभृ.] आदाय पृथगङ्किते द्वे प्राति. किमिति न निर्दिश्येयातामिति। व्यु. च वृत्ते च विशेषाऽभावाच्छब्दतोऽभेदप्रतिपत्तेरिति। ननु शत्रुपरस्य प्राति. ६अ+*रि- (<√रा भावे) बस. इति कृत्वा प्रकाराऽन्तरेण व्यु. इष्यतां (वैतु. या. गपू.) तेन च प्राति. भिन्ने निर्दिश्येयातामिति। नेति। कथमिति। उक्ताया व्यु. अन्यथासिद्धत्वादिति। कुत इति। गतितत्प्रतिबन्धप्रभृत्यनेकाऽर्थवाचकत्वेनोपगतस्य सतः √*अर् (तु. यस्था. टि.) इत्यस्यैव तत्तदर्थवाचकस्य सतः अरि- इत्यस्य मूलतयाऽभ्युपेयत्वादिति। अथ तत्र तत्र विषयविभागे विदुषां वैमत्यादपि भिन्ने प्राति. न निर्दिश्येयातामिति। कथमिति। उच्यते। तद् यथा। ऋ १,४,६ इत्यत्र शत्रु-पर इति सा.। न तथेति PW. प्रभृ.। ऋ १, ७३, ५ इत्यत्र शत्र्वर्थ इति सा. PW. च। न तथेति GW.। ऋ १, ११८, ९ इत्यत्र शत्र्वर्थ इति सा. PW. च। न तथेति NW.। ऋ १, १८४, १ इत्यत्र शत्र्वर्थ इति PW.। न तथेति सा. GW. च। एवमन्येष्वपि भूरिसंख्याकेषु स्थ. प्रतिपत्तिभेदो भवति। अथाऽयाऽवधि प्रसिद्धिं प्राप्तवतो विषयविभागस्याऽपर्याप्तत्वादपि द्वे एव भिन्ने प्राति. निर्दिश्येयातामिति नोचितम्। तथाहि। मा ६, ३६ इत्यत्र प्रजाऽर्थः साक्षाच्छ्रौतप्रमाणोपबृंहितो भवति (तु. माशब्रा. ३, ९, ४, २१)। ऋ ९, ७९, ३ इत्यत्र वृक- इत्यस्य साहचर्याद् हर्यर्थः संभाव्येत। एवमनुसंधानभूयस्त्व-निबन्धना विशिष्टतराऽर्थभूयस्त्व-प्रसिद्धिः संभवेदिति किमु वक्तव्यम्। ननु तत्तत् स्थ. सम्यगनुसंधाय तत्तदर्थविषयविभागमनुपतन्ति कामं तानि तानि भिन्नभिन्नानि प्राति. निर्दिश्येरन्निति। सत्यम्। एवमेव कर्त्तव्यं न त्विहेति। तत् कुत्रेति। वैश. इति। कुत इति। अर्थविवेकाऽधीनविषयविभागाऽनुपातिनो निर्देशविभागस्य तत्रैव प्राप्ताऽवसरतरत्वाचाऽनुसंधेयसाधनसामग्रीसमृद्धिजस्य पर्याप्ततरस्य विभागप्रकारस्य संभवाच्चेति। अथ किमिति २अ-रि- इतीहाऽपि पृथग् निर्दिश्येतेति। स्वरतो भेदात् व्यु. भेदस्य शब्दस्वाभाव्य-प्राप्तत्वादिति। अत्र यत्र यत्र 'अर्यः' इति शब्दरूपं १अरि- इत्यस्य द्वि३ वा पं१ वा ष१ वा सत् १अर्य- इत्यस्य प्र१ इतीवाऽन्येषां मिथ्या प्रतीतं भवति तत्र तत्र यस्थ. टि. संमकेतीति दिक् (तु. टि. इहैव 'अरे' इति)।

[c]) १अर्य- इत्यस्य रू. इति सा. तद् विमृश्यम्।

[d]) १अर्य- इत्यस्य रू. इति PW. तच्चिन्त्यम्।

[e]) यत्तु '१अर्य->अर्ये' (स१)='इन्द्रे' इतीव PVS. (१७२ टि.१) इत्यत्रोक्तं भवति। तच्चिन्त्यम्। 'त्वया' इति पदेन तस्य गतार्थत्वात्।

[f]) 'अर्ये' इति सं१ इति पठन् सा. चिन्त्यः।

[g]) उ. म. द्विपूटि. दि. मन्वानौ चिन्त्यौ।

का १६,५,११; तै २,६,११,४; ४, ४, ४, ४; मै २, १३,७; ४, १४, १५; काठ २, १५; ८, १७; १७, १८; कौ १, ७०; ५५५; २, २४; ११५३; ३, १, ८; जै १, ७, ८; ५७, २; २, ५, ५; ३, ३, ३; ४, १, ६;१०, १०; शौ ६, ६३,४; १८, ३, २३; २०, ३४, ४; ५; ६६, १; ८५, ४; ८९, १; ९५, ४, १२६, ३; पै १३, ७, ४; ५. [°रि- ?अंह°, ?अङ्ग°, अद्व°, कव°, मित्र°, मृग°, सु>स्व्°]

अरी[a]– -रीः मा ६, ३६; का ६, ८,७; मै[b] १, ३,४; ४, ५, ७; काठ[b] ३, १०; क २,१७; –र्यः[c] कौ १,३२७; जै १, ३४, ५.

अरे[d] मा २३,५५;५६; का २५, १०,३; ४; मै ३, १, ४; पै ५, ३४, ६.

अरि-क्लव[e]– -वेभ्यः पै १६, १०४,२.

अरि-गूर्त[f]– -र्तः ऋ १, १८६,३.

अरि-धायस्[g]– -यसः ऋ १,१२६,५.

अरि-यमन्- अर्यमन्- टि. द्र.

अरि-ष्टुत[h]– -तः ऋ ८, १, २२.

२अ-रि[i]– -रिः शौ ७, ९३,१[2]; १३, १,२९.

अ-रिक्त[j]– -क्तः काठ ४०,५; –¶क्ताः तै ६, ४, ९, ५; काठ २७, ५; क ४२,५; –¶क्तानि तै ६, ४, ९, ५[2]; –क्ताय तै ७, ३, २०, १; काठ ४३, १०.

¶अ-रिक्तत्व[j]– -त्वाय मै ४, ६, २.

?अरित[k]– -तः पै ४, १४, ६.

अरितृ-, अरित्र- √*अर् द्र.

अ-रिप्र,प्रा[l]– -प्रम् ऋ ७, ४७, १; १०, ७१, १; –०प्रा ऋ ८,८, ९; –प्राः ऋ ७, ९०, ४; १०, १२०, ९; शौ १०, ५, २३; १६, १, १०; पै ५, २, ६; ६, १, ९†; १६, १३०,२; –प्रे‡[m] शौ ५, २, ९; २०, १०७,१२.

*अरिय ?३अर्य- टि. द्र.

अ-रिषण्य[n]– -ण्या ऋ २, ३९,४.

†अ-रिषण्यत्[j]– -ण्यन् ऋ १, ६३, ५; २, ३७, ३; ६, २४, ९; २५, २; मै ४, १४, १२.

अ-रिष्ट,ष्टा[j]– -०ष्ट[o] शौ १९, ७, ३; –०ष्ट शौ ८, २, २४; –ष्टः ऋ [१, ४१, २; (५, ५२, ४; ६७, ३;) ८, २७, १६; १०, ६३, १३]; ५, १८, ३; ३१, १; १०,१६६, २; मा १०,२१; का ११, ७, १; तै ३, २,८,४; शौ ४, ५, ७; ७, ५५, ५; ८, २, ८; १०, ३, १०; पै १, ६१, ४; ९६, ४; २, ८७, ५; ४, ६, ७; १३, ३, ११†; १५, १२, २†; १६, ३, ९; ५, ४; ६३, १०; –ष्टम् ऋ २, ३४, ७; मा २, १३; का २,३, ११; काठ ३४, १९; पै ४, ४०, २; –ष्टा मा ११, ६९; ३७, २०; का १२,७,४; ३७,३,६; तै ४, १, ९, २; ५, ५, ९, २; मै २, ७, ७; काठ १६, ७; १९,१०;

[a]) स्त्री.ङीष् [पावा ४,१,४५(तु.माशब्रा.३,९,४,२१)]।

[b]) 'अरिः' इति पा. (वैतु. मै. १मे स्थ. मूको. 'अरीः' इत्यपि पा.)। एस्थि. अपि मै. काठ. च रू. स्त्रीत्वपरत्वं शाखान्तरसामान्येन सुस्थितं द्र.।

[c]) तरुषी-> '-षीः' इत्येतत्-सामानाधिकरण्यात् यनि. द्र. (वैतु. सा. 'अरीन्' इति व्याख्यानात् '१अरि-' इत्यस्य पुं. द्वि३ एतदिति प्रतिपन्नः संश्चिन्त्यः)।

[d]) मौस्थि. प्रजाऽर्थस्य सतः १अरि- इत्यस्य सं१ संभाव्येत [वैतु. WW.(१,८९) शब्दाऽर्थकाद् √*अला (तु. पंजा. अलाअ-<आलाप-) इत्यतो निष्पादुकः]।

[e]) बस. पूपप्रस्व. [='कर्तनगुणविशिष्टक्लवविशिष्ट-'] तु. अलि-क्लव- इति शौ (११, २,२) पाभे.।

[f]) तस. [=अरिरिव वा अरिरिति वा अरि (=समृद्धं पुष्कलं यथा स्यात्तथेति कृत्वा क्रिवि. सत् न. द्वि१ [तु. PW. प्रमृ., WW १,६९; NW.]) वा गूर्त-]। थाथीयः स्वरः [वैतु. सा. सतस. इति; B.JAOS ४५, १६५ च तृतस. इति वदन्तौ स्वरतश्चिन्त्यौ (तु. पा ६, २, २; ४८; विश्व-गूर्त- इति प्राति. च)]।

[g]) बस. पूपप्रस्व.(='समृद्धधायोविशिष्ट-')। उप. भावे धायस्- यद्र. [वैतु. सा. उप. कर्मणीति कृत्वा तृतस. इति, GW. च उप. कर्तरीति कृत्वा उस. इति च वदन्तौ स्वरतश्चिन्त्यौ (सा. उप. गुणवचनत्वे सति पूप. कृतत्व-स्येष्टत्वादस्य विशेषणद्वयस्यापि प्रकृते चाभावात् GW. च कृद्-उपप्रस्व. प्राप्तत्वात् पूपप्रस्व. अनुपपत्तेरित्यभिसंधिः)]।

[h]) सस्व. द्विपू. दि. द्र. (तु. WW. गपू., PW., MW.; वैतु. सा. प्रभृ. तृतस. इति वदन्तः पूर्ववच्चोद्याः)।

[i]) तस. नञ्-स्वरः (पा ६, २, २)। उप. √ऋ+ कर्तरि इक् प्र. उसं. [पावा ३,३,१०८; यद्वा पाउ ४, १४२ (=अनृजुः सन् परान् परिपन्थुकः)]।

[j]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[k]) कूटं भवति। तु. सस्थ. टि. √षि>सित-।

[l]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[m]) '-प्राः' इति बाह्वृचः (१०, १२०, ९) पाभे.।

[n]) उप. √रिषण्य+कर्तरि अच् प्र.। शेषं त्रिपूटि. द्र.।

[o]) संबुद्धेरनपेक्षातः अरिष्टम् इति मूपा. संभाव्यते (तु. WI.)। 'अरिष्ट-मूलम्' इतीव सा. पिपठिषन्

क ३०, ८; पै ११, १, ७; –ष्टाः ऋ २, २७, २; ७; १६; ५, ४२, ८; ६, १९, ४; ७, ४३, ५; १०, १२८, ३; तै ४, ७, १४, २†; ५, ७, ९, १; काठ ४०, १०†; शौ ५, ३, ५†; १०, ५,२३; पै १, १०६, २; ३, २६, ६; ५, ४, ५†; १५, ३; १६, ७; ६, ८, ८; १६, १००, ३; १३०, ३; –†ष्टान् ऋ ७, ४०, ४; ९७, ४; काठ १७, १८; –ष्टानि शौ १९, ६०, २; –ष्टाभिः ऋ ६, ५४, ७; –ष्टाम् ऋ १०, ८५, २४; काठ २, ३; क १, १५; –ष्टासः शौ ७, ५२, ७; १९, ४७, २; २०, ८९, १०‡[a]; पै ६, २०, २; –ष्टे का २, ६, २; पै ८, ७, ३; –¶ष्टेन तै १, ६, ११, २[2]; मै ४, ५, ५; ६, ८; काठ २६, १०; क ४१, ८; –†ष्टेभिः ऋ १, ११२, २५; ८, २७, ४; मा ३४, ३०; का ३३, १, २४; –†ष्टैः ऋ ६, ६९, १; तै ३, २, ११, २; मै ४, १२, ५; काठ १२, १४.

अरिष्ट-गातु[b]– -तुः ऋ ५, ४४, ३.

अरिष्ट-गु[c]– -गुः शौ १०, ३, १०; पै १६, ६३, १०.

अरिष्ट-ग्राम[b]– -माः ऋ १,१६६,६.

†अरिष्ट-ताति[d]– -तये ऋ[१०,६०, ८-१०]; ९७,७; मा १२, ८१; का १३, ६, ७; तै ४, २, ६, ४; मै २, ७, १३; काठ १६, १३; क २५, ४; $शौ ३, ५, ५; ५, ३०, १२; ६, १९, २; ८०, २; ८, २, ६; ५, २०; ७, ६; २७; १९, ३८, ३; $पै १, ३१, ३; ३, १३, ५; ५, १७, ८†; ७, ५, ११; ८, ३, ९; ९, १४, २; १५, १८, ८; २१, ६; १६, ३, ६; १४, ६†; २८, ९; –तिभिः ऋ १०, १३७, ४; शौ ४, १३, ५; पै ५, १८, २.

अरिष्ट-नेमि[b]– -मिः ऋ १,८९, ६; मा १५, १८; २५, १९†; का १६, ४, ७; २७, ११, ६†; तै ४, ४, ३, २; मै २,८, १०; ४, ९, २७†; काठ १७, ९; ३५, १†; क २६, ८; कौ २, १२२५†; –†मिम् ऋ १,१८०, १०; १०, १७८, १; खि २, ४, १; कौ १, ३३२; जै १, ३५, १; शौ ७, ९०,१; –॰मे ऋ ३, ५३, १७; काठ ४०, ३.

अरिष्ट-पशु– -शुः पै १, ९७, ४.

अरिष्ट-भर्मन्[b]– -॰र्मन् ऋ ८, १८, ४.

अरिष्ट-रथ[b]– -थः ऋ १०, ६, ३.

अरिष्ट-वीर,रा[b]– -राः ऋ १,११४, ३, काठ ४०,११†; शौ ३,१२, १; पै ३, २०, १; –राम् पै ७, ६, ५.

अरिष्टा(ष्ट-अ)सु[b]– -सुः शौ १४,२, ७२.

अ-रिष्टि[e]– -ष्टिम् ऋ २, २१, ६; –ष्टयै मा २, ३[3]; ३०, १३; का २, १, ३; ४[2]; ३४, २, ५; ¶तै ७, ४, ११, ३; ५, १, ४; काठ ३३, ३¶; ३५, १०[2]; क ४८, १२[2].

अ-रिष्यत्[e]– -ष्यन् मै १, २, ९[2]; –ष्यन्तः ऋ[२, ८,६; ८, २५, ११; (९,३५,३)];४,५७,३; ८, २५,१२; मै ४,११,१†; शौ २, ४,१; १९,५०, ३; २०, १४३, ८†; पै २,११,१; १४,४,१३; –ष्यन्तम् ऋ १०, ६३, १४.

अ-रीळ्ह(ढ)[f]– -ळ्हम् ऋ ४, १८, १०.

१अरु[g]– -रुम् पै १,९४,४. [॰रु-पाक॰]

*२अरु[b]- अरुणि-,अरुणी-,अरुष-टि.द्र.

?अ-रुक्म[i]– -क्मम् पै १४, ४, ८.

अ-रुग्ण[e]– -ग्णम् ऋ ६, ३९, २; पै १, ९४, ३[j].

अ-रुच्[k]– -रुचः ऋ ६, ३९, ४.

अ-रुज्– -रुक् पै ६, ९, १०; –रुजा पै ११, २, ८.

अरुण,णा[l]– -॰ण मै ४,१४,९[m]; –णः ऋ १, १०५,१८; १३०,९; ९, ४०, २; १०, ३०, २; ५५, ६; मा १६,६; १७, ६०†; २४,३;

---

(तु. पाराड्ड.) चिन्त्यः । छन्दोदोष-प्रसङ्गात् ।

[a]) विशिष्ट इह बाह्वृचः (१०, ४२, १०) पाभे. ।

[b]) बस. पूपप्रस्व. (पा ६, २, १) । उप. यद्र. ।

[c]) सस्व. कृते नापूटि. द्र. । उप. <गो- यद्र. ।

[d]) भावे तातिल् प्र. लित्-स्वरश्च (पा ४, ४, १४४; ६,१,१९३) ।

[e]) तस. नञ्-स्वरः (पा ६, २, २) । उप. यद्र. ।

[f]) सस्व. कृते नापूटि. द्र. । उप. √रिह्+क्तः प्र. ।

[g]) व्यु.? । √*२अर् इत्यतः संभाव्येत (='प्रतिबन्धकः) । 'बिले' इत्यस्य स्थाने 'बिलम्' इति च पृथक् पदमिति कृत्वा मुपा. सु-शोधः द्र. ।

[h]) संप. न वि. (वैतु. WW १, १५९ वि. इति) ।

[i]) संस्कारान्तरसापेक्षः मुपा. भवति ।

[j]) मुपा. णत्वाऽभावश्चिन्त्यः ।

[k]) बस. अन्तोदात्तः (पा ६,२,१७२) । उप. यद्र. ।

[l]) √*३अर्+उनच् प्र. [वैतु. पाउ. (३, ६०) <√*१अर् इति; तु. टि. अरुणि-] । चित्स्वरः ।

[m]) 'असुर' इति ऋ. (२, २८, ७) पाभे. ।

२९, ५८; का १७, १, ६; १८, ५, ११†; २६, १, ५; ३१, ६, १; तै २, १, ६, ३¶; ४, ५, १, २; ६, ३, ४‡[a]; ५, ५, २२, १; ¶६, १, ९, २; ४, ५, १; ¶मै १, ४, १०[b]; ५, ९; २, ५, ९[२]; ९, २$; १०, ५‡[a]; ३, ६, ४; ६; ७, ४; ८, ६; १०, ५; १३, ४$; ४, १४, १४$; काठ १३, ४; १७, ११; १८, ३‡[a]; २१, ८; २६, १०; ३२, ७; ३७, ७; ४८, १; क २७, १; २८, ३‡[a]; ४१, ८¶; †कौ २, २७५; ११३३; †जै ३, २३, ७; शौ ५, २२, ३; ११, ७, १२; पै १, ४५, २; १३, १, ४; १४, २, ९; १६, १५४, ३; –णम् ऋ १, ७३, ७; ७, ९८, १; ८, १०१, ६; ९, ४५, ३; ७८, ४; १०, १४४, ५; तै २, १, ६, २¶; काठ १३, ४¶; शौ १२, १, ५२; १३, २, ३६; ८, ६; २०, ८७, १†; –¶णया तै ६, १, ६, ७; –णस्य ऋ १०, ९४, ३; –णा ऋ १, १३४, ३; मै ३, ७, ४¶; ४, २, ४; १४¶; –णाः ऋ १, ९२, २; तै ५, ६, १५, १; मै ३, १३, २०; ४, २, ११; काठ ४९, ५; कौ २, ११०६†; शौ १०, २, ११; ११, १२, ७; पै १६, ६०, ३; –णान् ऋ १, ९२, १५; मा २४, ११; का २६, ३, १; कौ २, १०८३†; –णानाम् ऋ १, १२४, ११; –णानि ऋ १०, १६८, १; पै १, १०७, १; –†णाम् ऋ ५, ६३, ६; मै ४, १४, १२; –णाय ऋ ९, ११, ४; मा १६, ३९; का १७, ६, ३; तै ४, ५, ८, १; ७, ३, १८, १; मै २, ९, ७; काठ १७, १५; ४३, ८; क २७, ५; कौ २, ७९४†; शौ ६, २०, ३; पै १३, १, २; –णासः ऋ ६, ६४, ३; –णेभिः ऋ १, ८८, २; ११३, १४; २, ३४, १३; ५, ८०, ३; –णेषु काठ ४०, ४; –णैः ऋ २, १, ६; ३४, १२; तै १, ३, १४, १†; शौ ११, १२, २. [°ण- त्रि > व्यु°]

¶आरुणि[c]– -णयः काठ १३, १२; –णिः काठ ७, ६; ९; क ५, ५; –णिम् काठ ७, ६; ८; क ५, ५.

¶आरुणि-विद्[d]– -विदः मै ३, ६, ४.

?आरुणी[e]– -णीभिः मै २, १२, ३; ३, ४, ४; –णीषु ऋ १, ६४, ७.

¶अरुण-पिशङ्ग[f]– -ङ्गः तै ६, ६, ११, ६.

†अरुण-प्सु[g]– -प्सवः ऋ १, ४९, १; ८, ७, ७; –प्सुः ऋ ८, ५, १; ७३, १६; कौ १, २१९; जै १, २३, ६; –प्सुम् ऋ ५, ८०, १.

अरुण-बभ्रु[h]– -भ्रुः मा २४, २; का २६, १, ३; तै ५, ६, ११, १; मै ३, १३, ३; काठ ४९, १.

अरुण-युज्[d]– -युग्भिः ऋ ६, ६५, २.

अरुण-ललाम,मा[g]– -माः तै ५, ६, १२, १; २०, १; काठ ४९, २; १०.

अरुणा(णा-अ)श्व[g]– -श्वाः ऋ ५, ५७, ४.

अरुणै(णा-ए)त[i]– -ताः तै ५, ६, १८, १; काठ ४९, ८; –ताय तै ७, ३, १७, १; काठ ४३, ७.

अरुणि[j]– -णयः ऋ १०, ९५, ६.

---

[a]) 'अरुषः' इति ऋ. (पा ५, ४७, ३) पाभे.।

[b]) यनि. काठ. स्थ. 'आहारुणः' इत्यत्र 'आरुणः' इत्येवं दीर्घाऽऽदितया द्वितीयं पदं विसंदधानः SIM. विसंस्कार इत्युपेक्ष्यः।

[c]) अपत्यार्थे इञ् प्र. (पा ४, १, ९५)।

[d]) उस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

[e]) यनि. सत्तातः संदिह्येत। मै. पा. प्रतियोगित्वेन 'अरुणी-' इत्यस्य शाखान्तरे श्रुतेश्च (तु. मा १२, ७४)। ऋ. स्थ. अपि 'यदारुणीषु' इत्यत्र (मूलतः='यदारुणीषु' इति संभाव्य) 'यत् आ अरुणीषु' इति त्रिपदविभागस्य सुप्रस्तावाच्च [तु. ऋ ५, ५८, ७; वैतु. पपा. (यत् आरुणीषु' इति), GW. ? ('यदा अरुणीषु' इति)]। यस्थि. व्यु.? यनि. तद्धिते अञि प्र. कृते सति स्त्री. ङीप् इत्येवं वा 'आ अरुणी-' इति प्रास. पूपप्रस्व. इत्येवं वेत्येतयोर्विकल्पयोर्मध्ये विनिगमनाया दुःशकत्वादिति दिक्।

[f]) तस. पूपप्रस्व. प्राप्ते 'पिशङ्ग-' इत्येतदपि पर्युदस्यतया उसं. (पा ६, २, ३)। तेन सासस्व. द्र. (पा ६, १, २२३)।

[g]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[h]) तस. पूपप्रस्व. (पा ६, २, ३)। उप. यद्र.।

[i]) 'वर्णः' (पा ६, २, ३) इत्यत्र एत- इत्यस्य पर्युदासात् सासस्व. (पा ६, १, २२३)।

[j]) पाप्र.व्यु.अरुण- इत्यस्य साजात्ये सति प्र. एव विशेषः स्यादिति सुवचम्। तद् यथा। तत्र अकारान्तः प्र. इह त्विकारान्तः उनिच् प्र. उसं. (पाउ ३, ६०) इति, तद्वच्च चित्-स्वरः। नैप्र. तूभयत्र तस. इति कृत्वा (√*३अर् >)*२अरु- (तापः, तद्विशिष्टविशेषो वा) इति पूप. द्र.। (√जन् <> √*गन् >) *गन्- इति अरुण-

१अरुणी[a]– -†णीः ऋ १, ११२, १९; १२१, ३; ४, १, १६[b]; २, १६; १४, ३[c]; मा १९,६९; का २१, ४, १९; तै २, ६,१२, ४; काठ २२,६¶; क ३४,१¶; कौ ३, ३, ५; जै २, १, ७: शौ १८, ३, २१; –†णी म् ऋ १०, १५, ७; मा १९, ६३; का २१, ४, १३, शौ १८, ३, ४३; –णीपु ऋ १०, ६१, ४; –ण्यः ऋ १, १४०, १३.

*?२अरु-णी- नापू. टि. द्र.

¶३अरु*णी[d]– -णीः तै ५, ६, ४,१; –णीभिः मा १२, ७४; का १३, ५, १३; तै ५, ६, ४, १; काठ २२, ५.

?*अरुरड[e]-

*अ-रुत[f]-

अरुत-हनु[g]– -नुः ऋ १०,१०५,७.

*अ-रुन्धत्[h]-

अरुन्धती[i]– -॰ति काठ ३७, १०[2]¶; शौ ४,१२,१; ५,५,५; ९; ६,५९,१; पै २, २०,५; ६, ४, ४; ९; १०; ८, ७, ९; १५, १५, १; ७; १६, २–९; १७, १–७; –ती खि ३, १७[2], ५; ४, ७, १, ५; ६; ७[2], ४; ९; १०; काठ ३७, १०[2]¶; शौ ६, ५९, २; पै १, ८५, ३; २,२०, ५; ९, ११, १०; १५, १५,४; ८; ९; –तीम् शौ ८, ७, ६; पै ८, ७, १०; १६, ३, ६; १२, ६; –त्यः पै १५, १६,१. [॰ती- वसिष्ठ॰]

अरुश[j]-

अरुश-हन्[k]– -हा ऋ १०,११६,४.

१†अरु*षु[l]– -षः ऋ ३, १५,३; २९, ६; ४, ५८, ७: ५, १, ५; ४७, ३; ५६,७; ६, ३, ६[2]; ४८,६[2];

इत्यत्र *ग्नि- इति चेह उप. इति (तु.टि. अरण्यानि-)। यत्तु PW. प्रभृ. अरुण- >अरुणी-(=नाउ.)> -ण्यः(प्र३) इति प्रतिपद्यमानाः यनि. पार्थक्यं नैवाऽनुजानीरन्, तन्नोचितम्। अरुण- इत्यस्मादननुदात्तान्तात् सतः स्त्री. ङीषः प्र. (पा ४, १,४०) असंभवात्। नाउ. प्रादुर्भावोऽपि यनि. प्रकृत एव समश्रायीत्येवं सुवचत्वात्। अथाऽपि ङ्यन्तस्य प्राति. पूर्वसवर्णैकादेशवद्वा यणादेशवद्वा रू. अजादौ सुपि प्रसिध्येद् न तु पराभिमतं सदप्युपुष्टं गुणाऽऽदेशवत् रू. इत्यपरा दिक्।

[a]) ङीष् प्र. (पावा ४, १, ४५) तत्स्वरश्च।

[b]) प्र१ भवति। तत् कथं सोरलोप इति। छान्दस इति सा. [=वेदे सर्वविधिविकल्प इत्यभिसंधिः (तु. L३७६)]। स्याद्वेह प्रकृतात् यनि. भिन्नं सदपरं *२अरु-णी- इति प्राति. द्र. [=*२अरु-+(√नी>) *नी-(= 'अरुं सूर्यमग्निं वा तत्पूर्ववर्तिनी सती नयति') इति कृत्वा उस. उपप्रस्व.]। अथवा 'अरुणी ईः (<*ई- यद्र.)' इति पदद्वयं द्र. (= 'इयमेवाऽरुणी')। अथवा 'अरुणी- ईः' इत्येकं समस्तं पदं द्र. (यत्र उप. *ई- इति मौस्थि. सना. सद् अवधारणाऽर्थे निपातायमानं (तु. हिं. ही) सामासिकं वृत्तमनुधावति [यथा 'चित्' (मौस्थि.=*चित्-) इति नि. इत्यभिसंधिः ('चित्' इत्यत्र निघातः बस. प्रयोजित इति कृत्वा यस्था. उपपाद्यमानः द्र.)]। एस्थि. प्रकृते सुप्सुपीयः स. सास्व. च। यदपीह सा. प्रभृ. 'अरुणवर्णा' इति वर्णवचनाद् 'अरुण–' इत्यतः ङीषः प्र. (पा ४, १,४०) आगममभिसंदधीरन्, तद् यथा न सत् तथा प्रतिपादितपूर्वमिति नेह पुनरुपात्तमिति दिक् (तु. टि. अरुणि-)।

[c]) द्वि३ भवति [=(उषाः) 'अरुणीः (=रश्मिगवीः) आवहन्ती ज्योतिषाऽऽगात्' इति वा. द्र. (वैतु. सा. स्वरूपतः प्र३ सदर्थतः प्र१ इति वदन् (नापू. टि. संकेतितचरीं स्वीयां सुलोपाऽभावपरां दिशमपि विस्मारुकश्चाऽऽवहनक्रियाया निगदसिद्धं कर्म परित्याजितः सँस्तदर्थमध्याहारमुखेन वा. पूरुकश्च); L३३६ प्र१ (तु. नापू.टि.) इति चेत्यावहनस्य कर्मणो विषये पर्यनुयोज्यः)]।

[d]) *२अरु-+(√नी भावे=) *२नी- इति बस. पूपप्रस्व. (भिन्नं स. उपजीव्य स्वरभेदवत्-समानार्थसरूपप्रवृत्तिर्वक्तृविवक्षाऽधीनेति किमु वक्तव्यम्)।

[e]) 'उरुण्ड-' (शौ ८, ६, १५) इत्यस्य स्थाने सा. यनि. पठति। तत् यस्था. द्र.।

[f]) तस. नञ्-स्वरः (पा ६,२,२)। उप. २रुत- यद्र.।

[g]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[h]) सस्व. एपूटि. द्र.। उप. यद्र.।

[i]) आक्रोशभिन्नेऽप्यर्थे 'संज्ञायाम्' (पा ६, २, १५९) इति नञः परस्याऽन्तोदात्तत्वम् उसं.।

[j]) नाउ. व्यु. औपयिकं प्राति. द्र.। व्यु.? १अरु-+शः प्र. (पा ५, २,१००) स्यात् [=शत्रुः (तु. सा.); वैतु. PW. प्रभृ. =नाउ. इति]।

[k]) उस. क्विबन्त- कृत्-प्रस्व. (पा ६, २, १३९)।

[l]) व्यु.१। *२अरु-+(√सन्+डः प्र.=)*स->*षु- इति उस. कृत्-प्रस्व. (='लालिमविशिष्टदीप्तिभाज्-')। पाप्र. अनु तु √*३अर्+उषच् प्र. उसं. (पाउ ४,७५)। चित्स्वरः [तु. सा. (ऋ १, ११४, ५) 'आरोचमान-' इति पर्यायं प्रयुञ्जानोऽपि तत्त्वमपर्यालोचुकः, WW १, १५९ (वैतु. टि. *२अरु-); वैतु. सा. (ऋ १, ६, १)

७, ३, ३; ९, ८, ६; २५, ५; ६१, २१; ७१, ७; ७२, १; [(९, ७,४; ६२, २३); ७४,१]; ८२, १; १११, १; १०, १, ६; २०, ९; ४३, ९; मा १७,९५; का १९, १, ८; तै ४, १, ३, ४; ४,४,४‡[a]; मै २, ७,३; ९$; काठ १६, ३; ९$; ४०, ७; कौ १,४६३;५६२;२,१६७; ५३३; ५७१; ६६६; ९४०; जै १, ४८, ९; ५७, ७; ३, १६, ३; ४१, ९; ४६, ६; ५५, ७; ४, १, १; शौ २०, १७, ९; पै ८, १३, ७; –षम् ऋ १, ६, १; ३६, ९; ११४,५; ३, १, ४; ४, १५, ६; ५, ४३, १२; ६, ४९, २; ७, ९७, ६; ८, ६९, १६; ९, ८९, ३; १०, ४५, ७; ८९, ९; मा ११, ३७; १२, २४; १३, ४३$; २३, ५; ३८, १७; का १२, ३, १०; १३, ३, ७; १४, ४, ६$; २५, ३, १; ३८, ४, १; तै ४, १, ३, ४; २, २, २; १०, २$; ७, ४, २०, १; मै २, ७, ३; १७$; ३, १२, १८; १६, ३; ४, ९,३; १४, ४; काठ १६, ३; १७$; १७, १८; ३७,९$; ४४, ९; कौ २, ८१८; जै ३, ५७, ८; ४, १९, ९; शौ २०, २६, ४; ४७, १०; ६९, ९; ९२, १३; –षस्य ऋ १, ८५, ५; ३, ७, ५; ३१, ३; [५,१२, २; ६]; ६, ८,१; ४९, ३; १०, ९२, २; कौ ३, ३, ८; जै २, २, ३; –षा ऋ १, ९४, १०; २, १०, २; ४, २, ३; ६, २७, ७; ७, १६, २; मा १५, ३३; का १६, ५, १५; कौ २, १००; जै ३, १०, २; पै १२, १, १०; –षाः ऋ १, ११८, ५; ५, ७३, ५; ७,४२,२; $पै ६,१८, ३; ९, ६, १०; –षाय ऋ ७, ७१, १; –षासः ऋ १, १४६, २; ४, ६, ९; ४३, ६; ५, ५९, ५; ७, १६, ३; ७५, ६; ९७, ६; ८, ३४, १७; तै ४, ४, ४, ५; काठ १७, १८; ३९, १५; शौ ३, ३, २$; पै २,७४,२$; –षेण ऋ २,२, ८[b]; –षेभिः ऋ १, १४१, ८; खि ५, ७, ४, १८; –षैः ऋ ३, ३१,२१.

*१अरुषी- नाउ. टि. द्र.

†?२अरुषी[c]– –०षि ऋ [१,३०, २१; (४, ५२, २)]; –षी ऋ ३, ५५,११; ४,५२,२;८,६८,१८; कौ २, १०७६; –षीः ऋ १, [१४,१२; ५,५६,६]; ७२,१०; ९२,१;२[२]; ४,५६,६;८,६९,५; १०, ५,५; ८, ३; कौ २,८४०; ११०५; ११०६[२]; शौ २०,२२, ५; ९२, २; –षीणाम् ऋ ८, ५५, ३; खि ३, ७, ३; –षीभिः ऋ ९, १११, २; कौ २, ९४२; जै ४, १, ३; –षीम् ऋ १, ७१, १. [°षी- त्रि>त्र्य्°]

†अरुष-स्तूप[d]– -पः ऋ ३, २९, ३; मा ३४, १४; का ३३, १, ८.

२अरु*ष-, अरु*षी- एपू. टि. द्र.

अरुस्[e]– -रुः खि ४, ७, १, ३; शौ ५, ५, ४; पै ६, ४, ३[f].

---

६अ+(√१रुष् हिंसायां+कर्तरि कः प्र. इत्यभिप्रायतः=) १रुष- इति, (ऋ १, ३६, ९) ६अ+(√२रुष् रोषे+भावे कः प्र.=)२रुष- इति च कृत्वा बस. अन्तोदात्तः (पा ६, २, १७२); म. (मा १७, ९५) ६अ+(√२रुष्+कर्तरि कः प्र.=) ३रुष-इति कृत्वा तस. इति वदन् स्वरतोऽनादरार्हः]।

a) 'अरुषा' इति ऋ (७, १६, २) पामे.।

b) 'उषेण'(<√१उष् दाहे>१उष-) इतीव शोधपरः PW. चिन्त्यः। जागतस्य पादस्य त्रुटिप्रसङ्गाच्च १उष- इत्यस्य यनि. दूर-सानाभ्याऽभ्युपगमात् (तु. टि. यस्था.) मिथ्याशङ्किताऽसंबद्धाऽर्थस्य नितान्तनिवृत्तेरप्रसङ्गाच्चेति दिक्।

c) स्वरतः प्राति. स्वरूपं संदिग्धं भवति। यनि. हि स्त्री. ङीप् प्र. (पा ४,१,४०) प्राप्नुयात्। ततश्चान्तोदात्तः प्रसज्येत। तद् ङीन् प्र. उसं. (पा ४, १, ७३) येन नित्स्वरः (पा ६, १, १९७) प्रवर्तेत। अथवा २अरु-ष- इति (अवयवतः १अरु-ष- इत्यनेन सामान्ये सति बस. इति कृत्वा) पूपप्रस्व. अपरं प्राति. स्यात् ततश्च स्त्री. ङीप् उसं. (पा ४, १, ३०)। अथापि वा बस. सति अरु-षी- इतीकारान्तं प्राति. स्यात्। तत्र च पूप. विषये १अरु-ष-इत्यनेन अभेदे सति (√सन्+भावे डीः प्र.उसं. =*सी>) *षी- इति उप. स्यात् पूपप्रस्व. च [१अरु-ष-इत्यस्मात् स्त्री. निष्पन्नस्य सतः *१अरुषी- इत्यस्य च संभाव्यमानायां निवृत्तौ यनि. पदभिन्नार्थवाचकस्य सतः प्रवृत्तिसंलाभो बीजमित्यभिसंधिः (तु. ३अरु-णी-)]।

d) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

e) √*६अर्+उसिः प्र. नित् [पाउ २, ११६ तु. टि. *१अरु-; वैतु. WW. (२,३५२) समानाऽभिप्रायत्वे सति विलेखने सरूपं पृथक् धा. उपकल्पुकः (तस्य यनि. धा. हिंसार्थस्य वैशिष्ट्यमात्रस्य वाचकत्वे सति तदन्तःपातात् तथाविधः पृथग् निर्देशो नेष्ट इत्यभिसंधिः]।

f) अदुर् इति मूको.लिपिसंस्कारदोषः (तु.शौ ५,५,४)।

¶अरु(स्>)ष्-चित्[a]- -चित् काठ २२, १०; क ३५, ४.
?अरुस्-त्राण[b]-
अरुस्-पान- -नः पै १, ८, ४; -नम् पै १, ८, ३[c].
अरुस्-स्राण[d]- -णम् शौ २,३,३;५.
¶अ-रूक्ष[e]- -क्षम् मै १, ८, ५[4].
†अ-रूक्षित[e]- -तम् ऋ ४, ११, १; तै ४, ३, १३, २.
अ-रूक्षण[f]- -क्ष्णम् शौ ८, २, १६.
अ-रूप[e]- -पेण तै ५, ७, १९, १; काठ ५३, ९.
अरे १अरि- द्र.
अ-रेडत्[g]- -डता तै १, ६, ३, २; मै १, ४, १; काठ ३२, ३.
†अ-रेणु[h]- -णवः ऋ १, ३५, ११; १५१, ५; १६८, ४; ६,६६,२; १०, १४३, २; मा ३४, २७, का ३३, १, २१; तै ७,५, २४, १; मै ४, १४, ११; काठ ४१, १; -णु[i] ऋ १, ५६,३; -णुभिः ऋ १, १६३, ६; ६, ६२, ६; मा २९, १७; का ३१, ३, ६; तै ४, ६, ७, ३; काठ ४६, ३.
*¶अ-रेतस्[h]- -ताः काठ २४, २.
अ-रेतस्क[j]- -स्काय तै ७, ५, १२, २; काठ ४५, ३.
अ-रेपस्[h]- -पसः ऋ १, ६४, २; ५, ५३, ३; ५७, ४; ६१, १४; ९, १०१,१०;१०,७८,१;[(५,५५, ३)९१, ४]; कौ १,४४२;४५८; ५४८†; २, ४५१†; जै १, ४६, ६; ४८, २; ५६, ६†; ३, २४, ९†; शौ ७, २३, २; -†पसम् ऋ ५, ६३, ६; ७३, ६; ९, ७०, ८; मै ४, १४,१२; -पसा ऋ १, १२४, ६; १८१, ४; ५, ७३, ४; -पसौ ऋ ५, ५१, ६; मा ५, ३; १२, ६०; का ५, १, ३; १३,४, १६; तै १, ३, ७, २; ४, २, ५, २; मै १, २, ७; ८, ८; ३, २, ३; ९, ५; काठ ३, ४; १६, ११; क २, ११; -†पाः ऋ ४, १०, ६; ६, ३, ३; १० १०५, १०; तै २, २, १२, ७; मै ४, १२, ४.
*अ-रोग[k]-
आरोग्य[l]- -ग्यम् खि २, ६[2], २४.
अ-रोगण[m]- -णम् शौ २, ३, २.
अ-रोगि(न्>)णी[n]- -णी पै १५,२१,३
¶अ-रोचुक[o]- कः मै १, ४, १२.
अर्क-, अर्क्य- √अर्च् द्र.
?अर्केऽधि[p] पै १३, १, ६.
*?अर्ग- √अर्ज् टि. द्र.
√*अर्घ् तु. टि. √अर्ह्
*अर्घ[q]- अगो°, गो°, बहु°, सहस्र°
√अर्च्(= √ऋच् यद्र.)[r] >अर्चि, †अर्चति ऋ ७, २२, ३; तै ३, ३, ७, ३¶; मै ४, १२, ४; काठ १२, १५; कौ २, २७९; जै ३, २३,१०; शौ २०,११७, ३; अर्चति ऋ १, ६, ८; [९, १०; (१०, ९६; २; १३३,१)]; १०१,७[s]; तै ३,३,७,३¶; †शौ २०, ४०, २; ७०, ४;७१,१६; †अर्चन्ति ऋ १, १०, १; ९२, ३; १६५,१; १६६, ७; ५,२९, १; ६; ३०, ६; १०, १४७,३; तै १, ६, १२, ३; ७, ३, १,

[a]) उस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)। यत्तु संटि.(काठ.) *२अरु- इति पूप. इति समकेति, तन्न। संबन्धाऽभावात् (सांवत्सरिकभृत्यभाव उख्योऽपूर्णः सन् विकीर्ण इव व्रणित इव भवतीति श्रुतिस्वारस्याभिसंधेः)।

[b]) अरुस्-स्राण- (एउ. द्र.) इत्यस्य स्थाने मौलिकत्व-संभावन-पूर्वकः शोध उपस्थाप्यते । शाखान्तरीयम् अरुस्-पान- (नाउ.) इत्यत्र ज्ञापकं भवति ।

[c]) 'अरुस्पाम्' इति मूको. विसंवादी शाखान्तरीय-संकेत-विसंवादी च मुपा. शोधार्हो भवति ।

[d]) कास. ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[e]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[f]) तु. टि. अ-द्रूक्ष्ण- यदनु पराभिमतं नेष्टं भवति ।

[g]) सस्व. एपूटि. द्र.। उप. √रेड्+शतृ- प्र.।

[h]) बस. अन्तोदात्तः (पा ६, २,१७२)। उप. यद्र.।

[i]) द्वि१ वा. क्रिवि. द्र.।

[j]) बस. समासान्तः कप् प्र. कपिपूर्वीयस्वरश्च (पा ५, ४, १५४; ६, २, १७३)।

[k]) नाउ. व्यु. औपयिकः संकेतः ।

[l]) भावे ष्यञ् प्र. ञित्-स्वरश्च (पा ५, १, १२४; ६, १, १९७)।

[m]) तस. नञ्-स्वरः (पा ६, २, २)। उप. √रुज्>रोजि+ल्युः प्र.।

[n]) तस. उप. रोग-+इनिः प्र. (पा ५, २, ११५)। स्त्री. ङीप् च ।

[o]) तस. कृत्योकीयस्वरः (पा ६, २,१६०)। उप. यद्र.।

[p]) 'अर्केऽद्धि' इत्येवं सुपठं स्यात् (तु. शौ ५,२२,८; यत्र 'बृन्ध्वद्धि' इति पाभे.)।

[q]) घञ् प्र. ञित्स्वरश्च (पा ६, १, १९७)।

[r]) अस्याऽनेकप्रकृतिपरिणामजत्वे सत्यमौलिकत्वप्रति-पत्तिसंकतार्थं तु.टि. अर्कु- इति। स्वरूपतः सकर्मकाकर्मको-भयविधश्रुतिसंभवेऽप्यकर्मकस्य व्यवहारस्यैव सुभिक्षं भवति । तेन विषयीभावेनाभिप्रेतस्य लक्षणार्थेन कप्र. योगेन निगमा भवन्ति (तु. वैप १,३१७ टि.)।

[s]) तु. सस्थ. टि. अभि ।

३¶; मै ४,११,३; काठ ९,१८; कौ १,३४२; ४४५$; २,६९४; ११०७; जै १,३६,१; ४६,९$; ३, ३४, २२$; ५६, २१; $शौ १,२,३; १२, १,३८; †अर्चन्ति ऋ १, १३२, ५; ५, २९,१२[a]; ६, २१, १०[a]; ५०, १५[a]; ७, २३, ६[a]; १०, १, ३[a]; खि १, २, १; मा २०, ५४[a]; का २२, ५, ८[a]; काठ ८, १६[a]; शौ १३, १, ३३$[a]; २०, १२, ६[a]; पै १४, १, ११$[a]; अर्चसे ऋ १०, ६४, ३[a]; अर्चथः ऋ १, १५१; ६; †अर्चे ऋ ५, ४१, ८[a]; ६, २२, १[a]; शौ २०, ३६, १; †अर्चामि ऋ १, १३८, १; ४, ४, ८; १०, १२, ४; खि ३, २२, ४[a]; मा ४, २५[a]; का ४, ८, ३[a]; तै १, २, ६, १[a]; २, १४, ३; मै १, २,५[a]; ४, ११, ५; काठ २, ६[a]; ६, ११; क १, १९[a]; कौ १, ४६४[a]; जै १, ४८, ५; शौ ७, १५, १[a]; १८, १, ३१; अर्चामसि ऋ ६, २१, ६; अर्चत् ऋ १, १७३, २; †अर्चत् ऋ १, १६५, १४; मै ४,११,३; काठ ९,१८; †अर्चात् ऋ ४, १६,३; शौ २०, ७७, ३; अर्चन् ऋ ३, १४, ४; ४, १, १४[a]; †अर्चान् ऋ ५,३१,५; तै १, ६, १२, ६; मै ४, १२, २; काठ ८, १६; अर्चतु ऋ १०, ३६, ५; †अर्चन्तु ऋ ८, ६९,८; कौ १, ३६२; जै १, ३८, ५; शौ २०, ९२, ५; †अर्चन्तु ऋ ८, ९२, १९; कौ १, १५८; २, ७२; जै १, १७, ४; ३, ७,१०; शौ २०, ११०, १; †अर्च>र्चा ऋ १, ५४, २; ३; ५, १६, १; ८, ४१, १; कौ १, ८८; २, ४६४; †अर्च>र्चा ऋ ३, ५४, २; ५. २५, ७; ६, ५०, ६[a]; ८, २३, २४;४०,४[a]; १०, ७६, ५; ८९, ३; ११२, ९; १४८, ३[a]; मा २६, १२; तै १, १, १४, ४; काठ ३९, १४; कौ १, ८६; २, १६१; जै १,९, ६;८;१८,४; २५,३; ४,२८,२; अर्चतम् पै ५,१४,६; †अर्चत ऋ ६, ४५, ४; ८, ६९, ८[२]; कौ १, ३६२[२]; जै १, ३८,५[२]; शौ २०, ९२,५[२]; अर्चत ऋ १,५१,१;८०, ९,८४,५; २, १७,१;५,५४,१; ८,६९,८;६३, २६; ९, ११,४; १०,६४,९; ९२, १३[a]; ९४,७; [(१, ९,१०;) ९६,२;१३३,१]; †कौ १, ३६२, ३७६[a]; २, ३०१; ७९४; जै †१, ३९, ७; ३, २४, १७; शौ ७, ८७,१‡[b]; १८,३,६३;४, ५४; †२०, ३०, २; ९२, ५; ९५, २; †अर्चाम ऋ १, ६२, १; १७३,१; मा ३४, १६; का ३३, १, १०; †अर्चाम ऋ ९, ९७,४[a]; १०, १६५, १; कौ १, ५३५[a]; जै १, ५५, ३[a]; शौ ६, २७, १; आर्चत् ऋ ५, ३३, ९; आर्चन् ऋ १, ५२, १५; ५, २९, २[c]; ४५,७; आर्चन् शौ १३,३,२३. अर्चयः ऋ ३, ४४, २.

अर्क[d]– -र्कः ऋ १, ८३, ६; १६७, ६; ३, २६, ७; ६, २१, ४; ७, २४, ५; ८, ८८, ४; ८९, ६; १०, ६८, ४; मा १८, २२;५०; ६६†; का १९, ७, ४; २०,२, १३; तै २, २, ७, २¶; १२, ४; ४, ७, ९, १; ¶५, २, ५, ५; ३, ४, ६; ४, ३, ३; ५, ६, ३[२]; ७, ५, २[२]$; मै १, ६, २; २, २, ९[५]¶; ११, ६; ¶३, १, १; २[२]; २, ४[२]; ५[२]; १०; ३, ३; ४; ५[२]; ४, १२, ५†; काठ ७, १४; १०, ८[२]; १८, ११; १९, १[२]; २०, ३[२]; १२[२]; २१, १[२]; ५; ६[२]; ३५, ११; क ६, ४; २८,११; २९, ८[२]¶;¶३१, ५[३]; १४[२]; १६[२]; २०; २१[२]; ४८, ११; †कौ २, ७८०; ३, ३, १२; जै २, २, ७†; शौ ४, १५, ५; २४, ५; ६, ७२, १;

a) 'अभि' इत्यत्र सस्थ. टि. द्र.।

b) 'अर्षत' इति ऋ (४, ५८, १०) पाभे.।

c) 'अनु' इत्यत्र सस्थ. टि. द्र.।

d) पर्यायेण कर्तृकर्मकरणाऽन्यतमसाधनभूतः घः प्र. कुत्वप्रयोजकश्च प्र.स्व. अन्तोदात्तत्वसंपादकश्च उसं. [यक्र. पा ३,३,११८; ७,३,५२; ३,१,३ (वैतु. पाउ. [३,४०] तदनुवादकः दे. [२,२०;४,२] च कः प्र.अकित्[वैतु. पा १,३,८] चाऽनिडागमः[तु.पा ७,२,९] च कुत्वप्रयोजकश्च [पा८,२,३०]इति दवीयान् पन्थाः [*अर्क्कु->यनि.इत्यभिसंधेः];स्क.[५,४]'घञोऽस्मरणात् पचाद्यच्यपि कुत्वाऽनुपपत्तेः' [सुपा. एतदनु सुशोधः द्र.] इति वचनात् संभावितघञ्-पक्षपातः स्वरमुपेक्षुकः)]। यनि. परस्पराऽसंश्रितमनेकार्थं भवति(तु.स्क.दे. गपू.)। ततो विज्ञापितं भवति। यथा √अर्च् अनेकमूलः सँस्ताहशाऽनेकाऽर्थान् अभिधापयेदिति । कथमिति। मौस्थि. अस्य अनेकप्रकृतिपरिणामस्वरूपत्वे सति पूर्वांऽशतोऽनेकसरूपपरिणामस्वरूपत्वे सत्यनेकप्रकृतिप्रातिनिध्यभाज इव सतः √*३,५अर् इत्यतोऽभेदाऽभिसंधेरिति [√*अर् इत्यस्य प्राकृतिकभेदव्यूहसंकेताऽर्थं यस्था. टि. द्र. (यनि. तत्तत्प्रकृतिजतत्तदर्थपरिणामविस्तरस्तु वैश. एवाऽनुसंधेयः)]।

१३, ३, २३; †२०, १६, ४; २५, ६; पै ४, ३९, ५; ५, ७, ४; –र्कम् ऋ १,१०,१; १९,४; ६१, ५; ८; ६२, १; ८५, २; १६४, २४; १६६, ७;१८६,४; ३, २६, ८; ५, ३०, ६; ३१, ५; ६, ४९, ८; ६६, ९; ७, ९, २; [३९,७; ४०, ७; ६२, ३]; ९७, ५; ८; ५१, ४; १०; ९२, १९; १०१, १४; ९, ७३, २; १०, ६७, ५; ७८, ४; १०७, ४; ११२, ९; ११४, १; १५३, ४; १५७, ५: खि ३, ३, ४; १०; †मा ३४, १६; ४२; †का ३३, १, १०; २,५; तै †१, १, १४, २; ६, १२, ३; ६; ४, १, ११, ३; ३, ११, २; ५, १, ५, ५¶; मै २,१३,१०; ¶३,१, २[२];२,४;५; ३,४[२];५; †४,१०, ३; १२, २; ५; १४, ११; काठ ८, १६†; ९,१९†; १७,१८†; १९, २; २०, १५†; २१, ५; ३९, १०; ¶क २९, ८; ३१, २०; †कौ १, १५८; ३४२; ४४५$; २, ७२; ६९४; ९६०; †जै १, १७, ४; ३६, १; ४६, ९$; ३, ७,१०;३४,२२$;५६, २१; ४, १९, २; शौ ३, ३, २; ९, १५, २†; १०, ८,३†; १२, २, ५५; १३, १, ३३; १८, ३, ४०‡[a];४,२९†;†२०,३५,५;८; ६३, ३; ९१,५; ९३, ७; ११०, १; ११९, २; १२४, ६; पै २, ७४, २; ५, ३४,५; ६, १७, ५†; †१६, ६८, २; १०१, ६; –र्कस्य ऋ १, १३१, ६; ८, ६३, ४; [९, २५, ६; ५०, ४]; ¶तै ५, १, १, ४; ४, ३, ३; ¶मै ३, १, १; २, १०; ¶काठ १९, १; २१, ६; ¶क २९,८; ३१, १४; १६; २१; कौ १, ४७२‡[b];२,४२६‡[b];५५८†; जै १, ४९, ६‡[b];३, ३३,१‡[b];४४, ४†; शौ २०, ७२,३†; –?र्का[c] काठ १०, ९¶; –†र्काः ऋ ३, ५४, १४; ५, ५, ४; ५७, ५; ८, ६३, ५; ६; ९, ९७, ३५; १०, ६८, १; तै ३, ४, ११,३; मै ४, १२, ६; काठ २३, १२; कौ २, २१०; जै ३, १९, ५; शौ २०, १६, १; पै ६, १८, ३$; –¶र्कात् काठ २१, ६; क ३१, २१; –¶र्के तै ५, २, ५, ५; ३, ४, ७; मै ४, ८, १०; काठ २०, ३; क ३१, ५; –र्कैण ऋ १, १६४, २४; ६, ६५, ५; १०, ६८, ९; ¶मै ३, १, २;२, ४; ५; ३, ४[२]; ¶काठ २१, ६; ¶क ३१,२१; †शौ ९, १५,२; २०, १६, ९; पै १६, ६८, २†; –†र्कैभिः ऋ १, ७, १; ६, ५, ५; ८, १६, ९; तै १, ६, १२, २; मै २, १३, ६; काठ ८,१६; ३९, १२; कौ १, १६८; २, १४६; जै १, २१, ५; ३, १४, ७; ४, ५,२; शौ २०, ३८, ४; ४७, ४; ७०, ७; –र्कैषु ऋ १, १७६, ५; –†र्कैः ऋ १,३३,२; ४७, १०; ६२, ७; ११; ८८, ४; १४१, १३; १९०, १; २, ११, १५; ३, ३१, ९; ११; ३४, १; ६१, ६; ६२, ५; ४, ३, १५; १०, ३; १६, ४; ४४, ३; ५५,३; ५६,१; २; ५,२९, १२; ३१, ४; ३३, २; ४१,[६; (१०, ६४, ७)]; ७; ६, ३, ८; ४, ६; २०, १३; [२१, १०; ५०, १५; ७, २३, ६]; ३८, ३; ४९, १४; ६२, १; ६९, २; ७३, ३; ८, १२, २३; ९, ९७, ३१; १०, ६, ४; १५, ९; ६८,६; ११६, ९; १४८,५; मा १५,४६; २०, ५४; का १६, ५, २८; २२, ५, ८; तै १, ६, १२, ६; ४, ४, ४, ७; मै ४, १०, २; ६; १२, २; १४, ७; काठ ४, १६; ८, १६[२]; २०, १४$; ४०,११$; कौ १, ४३९; ५३४; २. ११२९; जै १, ४६, ३; ५५, २; शौ १८, ३, ४७; २०, ११, १; १२, ६; १६, ६; ७७, ४; ९०, ३; १४३, ३.

[°र्क- उद्°, चन्द्र°, बाल°, सु°>स्व्°, स्वर्ण°]

¶अर्क-त्व[d]– -त्वम् तै ५, ४,३, ३; काठ २१, ६; क ३१, २१.

¶अर्क-पर्ण[e]– -र्णेन तै ५, ४,३, ३; मै ३, ३, ४[२]; काठ २१,६[२]; क ३१, २१[२].

¶अर्कु-वत्[f]– -वते तै २, २,७, २; ३[२]; मै २, २, ९[५]; काठ १०, ८[४]; ९; –वन्तम् तै २,२,७,२.

अर्कुवती– -ती काठ १०, ८; ९¶.

†अर्क-शोकु[e]– -कैः ऋ ६,४,७; मा ३३, १३; का ३२, १, १३.

अर्कु-साति[g]– -तौ ऋ १,१७४, ७; ६, २०, ४; २६, ३.

---

[a]) 'एताम्' इति ऋ. (१०, १३, ३) पाभे. ।

[b]) 'ऋतस्य' इति ऋ. (९, ६४, २२) पाभे. ।

[c]) 'इयम्' इत्यनेन सामानाधिकरण्यार्थं स्त्रियां श्रुतिः । अथवा श्लेषमात्रमिति स्यात् । अस्त्रियामपि सुसंगतेः ।

[d]) भावे त्वः प्र. (पा ५, १, ११९) । तत्-स्वरश्च ।

[e]) तस. सासस्व. (पा ६, १, २२३) । उप. यद्र. ।

[f]) तु. टि. २अदिति->आदित्य-वत्- ।

[g]) तस. पूपप्रस्व. उसं. (पा ६, २,४२) । उप. यद्र. ।

अर्क-स्तुभ्- -स्तुभः खि ५, ५, ९.

अर्का(र्क-अ)श्वमेध्[a]- -धयोः तै ५, ७, ५, ३¶; -धौ तै २, २, ७, ५¶; शौ ११,९; ७; पै १६, ८२, ७.

¶अर्काश्वमेध्-वत्[b]- -वते, -वन्तम् तै २, २, ७, ५.

¶अर्काश्वमेधिन्[c]- -धी तै ५, ७, ५, ३.

†आर्क़िन्[c]- -र्किणः ऋ १,७,१; १०, १; तै १, ६, १२, २; ३; मै २, १३, ६; काठ ८, १६; ३९, १२; कौ १, १९८;३४२; २, १४६; ६९४; जै १, २१, ५; ३६, १; ३, १४, ७; ५६, २१; शौ २०, ३८, ४; ४७, ४; ७०, ७; -र्किणम् ऋ १, ३८, १५. [°र्किन्- वृहत्°]

अर्क़िणी- -णी ऋ ८,१०१, १३.

¶अर्क्य[d]- -र्क्यम् तै ५, ३, ४, ७; ७, ५, ९, १; काठ ३०, ५[2]; -र्क्यस्य काठ २०, १२; २१, १; -र्क्येण तै ७, ५, ९, १; -र्क्यैः मै ३, ३, ५; काठ २१, ५[2]; क ३१, २०[2].

*?अर्च्- नाउ.टि.अर्चद्-धूम-टि.च द्र.

अर्चॅ[e]- -र्चा ऋ ६, ३४, ४.

†१अर्चत्[f]- -र्चतः ऋ ७, २२,४; [२८, ५; २९, ५; ३०, ५;] १०, ८९, १६; तै ४, १, १,२; मै २, ७, १[g]; काठ १५, ११; कौ २,११४८; -र्चते ऋ १,८७, २;१५१,२; ५,६४,२; तै ४,३, १३, ८; -र्चन् ऋ [१, ८०, १-१६]; ३,३१,७; १०,१४९, ५; तै २, २, १२, ४$; कौ १, ४१०;४१२; ४१३; जै १,४०, २;४;५, -र्चन्तः ऋ १,६२,२; ८५, २; ३, ३२, ३; ५, १३, १[3]; ८, २९, १०; मा ३४, १७; का ३३, १,११; कौ २,२२६‡[h]; -$र्चन्तम् खि ५, ५, २.

*२अर्चुत्- नाउ. टि. द्र.

†अर्चुद्-धूम[i]- -मासः ऋ १०, ४६, ७; मा ३३, १; का ३२, १, १.

---

[a]) द्वस. सासस्व. (पा ६, १, २२३)। उप. यद्र.। 'अध्वर्युक्रतुः' (पा २, ४, ४) इत्यस्य विषयत्वे सत्यपि नैकवद्-भावः। द्वैवचनिकीनामेव श्रुतीनां मन्त्रब्राह्मणयोर् यावदुपलभ्ययोरुपलम्भाद् एकवद्-भावस्य निदर्शनं ततो बहिर् मृग्यम्।

[b]) तु. टि. २अ-दिति- >आदित्य-वत्-।

[c]) मत्वर्थे इनिः प्र. (पा ५, २, ११५)। तत्-स्वरः।

[d]) ण्यति कुत्वे तित्-स्वरः (यक्र. पा ३, १, १२४; ७, ३, ५२; ६, १, १८५)।

[e]) कर्तरि अच् प्र. चित्-स्वरश्च (पा ३, १, १३४; ६, १, १६३)। वा. द्वि२ सद् *२मास्- (यद्र.) इत्यस्य वि.। यद्वा प्र२ सद् *२मास्- इत्यस्यैवोद्देश्यस्य सतो विधेयम्। प्रथमे कल्पेऽर्धर्चव्याप्तमेकं वाक्यं स्याद् द्वितीये च प्रतिपादं पृथग् वाक्यमिति विवेकस्तु द्र. [वैतु. सा. PW. च स्तोत्रसूर्याऽन्यतरसंज्ञार्थिनौ सन्तौ घस्य प्र. क्षेत्रमिव प्रवेशुकौ ततश्च कुत्वाऽभावं प्रति पर्यनुयोज्यौ (पा ३,.३, ११८; ७, ३, ५२), GW. BW. च *?अर्च्- इतीव प्रतिपन्नौ सन्तौ 'ऋच्-' इत्यस्याऽगुणवतः सकृत्तायां साधनसामान्ये सत्यपि गुणवत्त्वोपपत्तिं प्रति च वा. प्रति च चोद्यौ (यनि. रू. तृ१ सति [तु. पक्षे सा.] वा. क्लिष्टत्वाऽऽपत्तेः,.प्र२ वा द्वि२ वेति कल्पनायामपि स्वराऽनुपपत्तेरित्यभिसंधेः), ORN (LRV. अनु) 'अर्चा' इति भावे निष्पन्नं सत् स्त्री. प्र१ इति ('यथा दिवि चन्द्रेणाऽर्चा तथेन्द्रे सोमो न्ययामि' इति वा. अभिसंधिः [तथा सति 'अस्मै एतत्' इत्यस्या वाचोयुक्तेर् अपूर्णेनाऽपि सता नाउ. ऋचा सामान्येनोच्यमानाऽप्युपपत्तिर्भूयोविमर्शसहैव द्र.])]।

[f]) शतुर्निघाते धातु-स्वरः (पा ६, १, १८६)।

[g]) 'अचतः' इति भ्रष्टरेफः मुपा. उपेक्ष्यः।

[h]) 'शोचन्तः' इति ऋ. (९, ८३, २) पाभे.।

[i]) व्यधिकरणः बस. उसं. (पा २, २, २४)। एतत्प्रकारकेषु स. पूप. शत्रन्तस्य सतोऽपि सूक्ष्मवृत्तिविवेकसमर्पणप्रयोजनकं लसार्वधातुकाऽनुदात्तत्वाऽविषयत्वम् उसं. [पा ६,१,१८६ (तु. MVG ४५५; वैतु. सा. प्र. आर्धधातुकत्वविकल्पं [पा ३, ४, ११७] समाश्रित्य निघाताऽभावं प्रतिपादयंश्चिन्त्यः [तथात्वे धारयत्-कवि-प्रभृ. णि-लोपाऽभावाऽनुपपत्तेरिति यावत्]; सा. प्रभृ. च समानाधिकरणः बस. इति कृत्वा वह्नेरावरकस्याऽपि सतो धूमस्याऽर्चद्भावं नाम प्रकाशवत्त्वं (तु. PW. प्रभृ.) ब्रुवाणा अर्थतश्च स्वरतश्च चोद्याः [समानाधिकरणे बस. शत्रन्तस्य पूप. धातुस्वरीयसामान्यविषयत्वाऽभिसंधेः])। यद्वोक्तम् उसं.। न वक्तव्यम्। कथमिति। पूपप्रस्व. सता साधारणेन समानाधिकरणेन बस. निर्वाहात्। कथमिति। पूप.*अर्च्युत्->*२अर्चुत्- इत्येवं नैप्र. परिणतिसंभावनादिति। किमेतद् *अर्च्युत्- इति। मौस्थि. *अर्च्-(भावे) >'-र्चै+यः'(<*यु-<√या) इति कृत्वा उस. =अर्च्यु-(<*अर्च्यु-)। तत आचारे क्विप् प्र.(=अर्च्युति<√*अर्च्यु)। तस्य नाधा. सतः शत्रन्तं सदप्यन्तोदात्तं रू. बस. पूप. सत्

*अर्चत्र[a]-
अर्चत्र्य[b]- -त्र्यः ऋ ६, २४, १.
अर्चत्रि[c]- -त्रयः ऋ ६, ६६, १०; मै ४, १४, ११†.
*अर्चन[d]-
अर्चना(न-अ)नस्[e]- -नसम् ऋ ५,६४,७; -नाः शौ १८,३,१५.
अर्चि[f]- -†र्चयः ऋ १,३६,३;२०; ४४, १२;४८, १३; ४, ६,१०; ५, ६, ७; ९, ५; १०, ५; १७, ३; २५, ८; ८, ४४, ४; १७; ९, ६६, ५; १०, १४०, १; खि ४, ९, ३; मा १२, १०६; का १३, ७, ५; तै १, ३, १४, ८; ५, ५, ३; ४, २, ७, २; मै १, ५,१; २, ७,१४; काठ १६, १४; ४०, १४; क २५, ५; कौ २, ८८४; ८९१; ११६६; जै ४, ८, ६; १२, १३; १३, ६; २८, ३; -र्चिभिः ऋ ५, ७९, ८; ६, ४८, ७; मा १२ ३२; का १३, ३, ३; तै ४, २, ३,१; मै २, ७,१०; काठ १६, १०; क २५, १; कौ १,३७†; जै १, ४,३†; शौ ८, ३, २३‡[g]; पै ७, ३, १†, १६, ८, ७‡[g].
अर्चि-मत्[h]- -मन्ता ऋ १०, ६१, १५.
†अर्चि-वत्[i]- -वत् ऋ ७, ८१, २; ९, ६७, २४; कौ २, १०२; जै ३, १०, ४.
¶अर्चितृ[j]- -तारः तै ७, ३, १,३.
†आर्चिन्[k]- -र्चिनः ऋ २,३४,१;५, ४५, १; -र्चिना ऋ ८, ४१, ८.
अर्चिस्[l]- -र्चिः ऋ १, ३२, ५; ३, ६, ३; ४, ७, ९; ८, ४३, १०; १०, १६,४; १४२, ६; मा ३७, ११; का ३७, २, १; तै १, १, १०, ३; ५, ७, ८, १; मै १, ५,२; ६,१†; २, ¶१, ८; ११; ४, ९, ३; काठ ३, ३; ६, ९; ७, १२†; ८, ९[३]¶; २६, ६; ४०, ५; क २, १०, ४, ८; ६, २†; ७, ५[३]¶; ४१, ४; शौ १, २५, २; २, १९, ३; २०, ३; २१, ३; २२, ३; २३, ३; १२,१,५१; १८, २,८†; पै १, ३२, २; २, ४८, ४; ९, ७, ४; ११; -र्चिषा ऋ १, १५७, १; २, ८, ४; ५, १७, ३; ७९, ९; ६, ४८, ३; ६०, १०; ८, ७, ३६; ४३, ८; १०, ८७, २;११; १४; १७; ८८,९; १२; मा १२, १५; का १३, १, १६; तै ४, १, ९, ३; २, १, ५; मै २ १, ११¶;७, ८; ४, १०, २†; काठ १६, ८; †कौ २, ४९९;११०८; जै ३, ५७, ११†; शौ ५, २९, १५; ६, ३२, ३; †८, ३, २; ११; १३; १७; २५$; १०, ५, ४९; १३, २, २; १९, ६५, १[२]; पै २, ६२, ३; ५; ५, २०, ३; ७,३, २; ९, २५, ३; ११; १७; १०, १२, ३; †१६, ६, २; ७, १; ३; ७; १५०, ४[२]$; -र्चिषि ऋ ९, ६७, २३; मा १९, ४१; का २१, ३, १२; तै १, १, १०, ३; ५, १, ९, २¶; मै ३, ११, १०; काठ ३८. २; -र्चिषे मा १७ ११; ३६, २०; का १८, १,१२; ३६,१,२०; तै ४, ६,१,३; मै २,१०,१; ४,९, १;३; काठ १७,१७; क २८,१; पै १,२९,४; -र्चीषि ऋ ७,६२. १; शौ ११, ७, १३; पै १६, १५४, ४. [°र्चिस्- सु>स्व°]
√*अर्च्यु, *अर्च्यु-,अर्च्युत्- अर्चद्- धूम- टि. द्र.
√अर्ज्, आर्जत् काठ १०, ३¶. [अनु>न्व्°, अव°]
*?अर्ग[m]- इष्ट°
अर्जुन[n]- -०न ऋ ७, ५५, २; पै ४, २४, ६; -नः मा १०, २१; कौ २,११८‡[o]; जै ३, १२,५‡[o];

प्रकृतिस्वरमिति । कथमर्थं इति । 'अर्चन्तः [=अर्चयन्तः (=अग्न्यर्चिर्वैभवात् प्रचिकाशिषवः,] धूमाः येषां (=तादृशा अग्नयः)' इति । एवमपि सर्वत्र सप्रवृत्तिषु बस. तत्तदन्तोदात्तं शत्रन्तं पूप. तत्तद्विशेषाऽपेक्षया नैप्र. यथायथं व्याख्यायमानं यद्र. इति दिक् ।

a) अत्रन् प्र. उसं. (पाउ ३, १०५) । नित्स्वरः ।

b) आर्हीयः यत् प्र. तित्-स्वरश्च (पा ५, १, ६६, ६, १, १८५) ।

c) अत्रिः प्र. उसं. (पाउ ४, ६९) । तत्-स्वरः ।

d) युच् प्र. उसं. चित्-स्वरश्च (पा ३, २, १५१; ६, १, १६३) । नाउ. व्यु. औपयिकं प्राति. द्र. ।

e) बस. पूपप्रस्व. (पा ६, २, १) । उप. यद्र. । पपा. अवग्रहाऽभावः ।

f) इः प्र. उसं. (पाउ ४, १४०) । तत्स्वरः ।

g) 'ऋष्टिभिः' इति ऋ. (१०,८७,२३) पाभे. ।

h) 'ह्रस्व-' (पा ६,१,१७६) इति मतुप उदात्तत्वम् ।

i) प्रत्ययमकारस्य वत्वं (पा ८,२,१५) । शेषं नापूटि.द्र. ।

j) तृचि चित्स्वरः (पा ३, १, १३३; ६, १, १६३) ।

k) णिनिः प्र. (तु. पा ३, १,१३४) । तत्-स्वरः ।

l) इसिः प्र. (पाउ २, १०८) । तत्-स्वरः ।

m) घञि धा. कुत्वं द्र. (पा ७, ३, ५२) ।

n) उनन् प्र. नित्-स्वरश्च (पाउ ३, ५८; पा ६, १, १९७) ।

o) 'अर्जुने' इति ऋ. (९, १०७, १३) पामे. ।

शौ १३, ३, २६; पै २, १४,२; ७, २, ६; –नम् ऋ ३, ४४, ५; ६, ९, १; ९, ६०, ४; कौ २, ७२२†; जै ३, ५९, १४†; शौ २, ३२, २; ५, २३, ९; २८, ५; ९; पै १, ९७, २; २, ५९,३;७;१५,१८,१; १६,५३, १३; –नस्य ऋ १, १२२, ५; –ना ऋ ३, ३९, २; १०, २१, ३; –नाः शौ ४,३७,५; पै १३, ४, ८; –ने ऋ ९, १०७,१३.

अर्जुनी[a]– -०नि शौ २, २४,७; पै २,४२,७; –०†नि ऋ १,४९,३; ५,८४,२; तै २, २, १२,३; कौ १,३६७; जै १,३८, ८; पै २,९१,१$; –न्याः खि ५, १५, ६; शौ २०, १३०, ३; –न्योः ऋ १०, ८५, १३.

¶आर्जुन[b]– -नानि काठ ३४, ३[3].

आर्जुनेय[c]– -यम् ऋ १, ११२,२३; ४, २६, १; ८, १, ११; –†याय ऋ ७, १९, २; शौ २०, ३७, २.

अर्जुन-काण्ड[d]– -ण्डस्य शौ २, ८, ३.

√*अर्ण् २अर्णव-, अर्णस्-, आर्णि- टि. द्र.

†अर्ण,र्णा[e]– -र्णम् ऋ ३, २२,३; ५, ३२, ८; मा १२, ४९; का १३, ४, ५; तै ४, २, ४, २; मै २, ७, ११; काठ १६,११; क २५, २; –र्णा ऋ ३, ३२, ५?[f]; ५,५०,४; –र्णाः ऋ १, १७४, २?[g]; ५,४१,१४.

अर्ण-साति[h]– -तौ ऋ १, ६३, ६; २, २०,८; ४, २४,४.

अर्णा-चित्ररथ[i]– -था ऋ ४, ३०, १८.

√*अर्णव् एउ. टि. द्र.

*१अर्णव- नाउ. टि. द्र.

२अर्णव[j]– -†वः ऋ १, ५५, २; ३, २२, २; ६, ६१, ८; ७, ६३,२; ९, ८६, ४५; १०,६६, ११; १९०, १; मा १२, ४८; का १३, ४, ४; तै ४, २,४,३; मै २, ७, ११; काठ १६, ११; क २५, २; कौ २,९६६; जै ४, २०, ९; पै ३, ३७, १$; –वम् ऋ १, १९, ७; ५१, १; ⌊५६, ५; ८५,९⌋; १६८, ६; २,२३, १८; ३, ५१, २; ५३, ९; ८, ४०, ५; १०, १०, १; ५८, ५; ६५, ३; ११५, ३; मै ४, ११, २‡[k]; काठ ३३,५¶;४०,११†; कौ १, ३७६†; जै १, ३९,७†; शौ ७, ८६, १‡[l]; १३, १,३६; २, ११‡[l]; १४, १, २३; १८, १, १†; पै १, ८४, ५; ६,१७, ८‡[k]; १६, ५२, ३; –†वस्य

[a]) स्त्रियां ङीप् प्र. उसं. (पावा ४, १, ३९)।

[b]) संबन्धाद्यर्थे अण् प्र. (पा ४, ३, १२०)।

[c]) ढक्>एयः प्र. उसं. कित्-स्वरश्च (पा ४, १, १२३; ६, १, १६५)।

[d]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[e]) √*अर्+नन् प्र. उसं. नित्-स्वरश्च (पाउ ३, १०; पा ६, १, १९७)।

[f]) अस्य रू. विसर्जनीयान्तत्वम् ऋ १, १७४, २ दिशा स्यादित्येषा जातोपरतेवोत्प्रेक्षा द्र.। निदर्शनस्य साध्येऽनैकान्तिकत्वात्। तत्र संधेरुभयथा विश्लेषण-संभवाच्च (तु. ORN. पक्षविपक्षोभयसंकेतकृत्), शोध-विशेषकल्पनाच्च (तु. नाउटि.)। एस्थि. इह विसर्गरहितः पपा. एव निरदेशीति तत्त्वम्।

[g]) 'ऋणोरपो अनवद्यवर्णाः' इत्येवं मूलतः पा. संभाव्येत [तु. ऋ १०, ६८, ३; ('स्पार्हाः सुवर्णा अनवद्य-रूपाः' ⌊गाः⌋); वैतु. ORN. पक्षे 'अर्णा' इत्यविसर्गं विसंधित्सुश्च 'अनवद्य-अर्ण-' इति समस्तं प्राति. निर्देशुकश्च सन्नध्यवसायपर्यवसितः (तु. नापूटि.)]।

[h]) बस. वा तस. वा। उभयथा पूपप्रस्व. (पा ६, २, १; ४२)। उप. यद्र.।

[i]) द्वस. देवताविषयत्वाऽभावेऽपि पूप. आनङ् पूर्वोत्तर-पदयोः प्रकृतिस्वरत्वञ्च उसं. (पा ६,३,२६; २,१४१)।

[j]) मत्वर्थे वः प्र. [पावा ५, २, १०९; (वैतु. पाका. ⌊गपू.⌋ अर्णस्- ⌊=नाउ.⌋ इत्यतः ⌊मौस्थि. तु 'अर्ण-' इत्येतद्गोत्रापत्यस्थानीयात् सतः⌋ तदन्त्यलोपप्रयोजकः प्र. इति दवीयसी सरणिः; GW.[तु.WW.(१,१३७) अपि तत्पक्षविशिष्टतररुचिः⌋ √*अर्>√*अर्ण्>√*अर्णु इत्यतः ⌊समभिजातविकरणात् नाउ.⌋ नामकरण इति ⌊चिन्त्यस्त्वेष पक्षः द्र.⌋। मौस्थि. √*अर्, √*अर्ण् इत्येतयोः धा. मध्ये अर्ण- इत्यस्य नाम्नो जन्य-जनकभावेनोपकल्पयितव्यत्वाऽभिसंधेश्च 'अर्ण- + *अव- (=*२अर्व-<*अर्प-<*अप्र-[*=अर्-+*प्रा-<√प्रा]) इति कृत्वा तस. शकन्ध्वादिन्यायतोऽनवग्राह्यत्वेन निष्पन्नात् सतः *१अर्णव- इत्यतः √*अर्णव् (=√*अर्णु) इत्यस्य निष्पत्तेरभ्युपगमाच्च (मौस्थि. सर्वेषां धा. नामजत्वसामान्याऽभिसंधेः)। एस्थि. अपि यदिह यनि. उपकल्पितं भवति तत्र पाप्र. अनुरोधतो यथाप्रसिद्धा-ऽनुवादमात्रत्वमिति दिक्।

[k]) 'ओजसा' इति ऋ. (१, १९,८) विशिष्टः पाभे.।

[l]) 'अध्वरम्' इति ऋ. (१०,८५,१८) विशिष्टः पाभे.।

ऋ [१०,६७,१२;१११,४]; शौ २०, ९१, १२; -वात् ऋ १०, १९०, २; मै ४, १४, १७; शौ १, १०, ४; १३, १,२६; पै १, ९, ४; १६, ५२, १; -वान् ऋ ५, ३२, १; कौ १, ३१५†; ३४०‡[a]; जै १, ३३, ३†; ३५, ९‡[a]; -वाय मा २२, २५; का २४, ११, १; मै ३, १२, १२; ४, ९, ८; काठ ४०, ४; -वे ऋ ८, २६, १७; खि ३, २२, ६; मा १३, ५३; १६, ५५; २३, ६३; का १४, ६, १; १७, ८, ९; २५, १०, ११; तै ४, ३, १, १; ५, ११, १; मै १, ६, १‡[b]; २, ७, १८; ९, ९; काठ १६, १८; १७, १६; क २५, ९; २७, ६; शौ ३, ६, ३;११, १०, २; ६; १२, १, ८; ६०; १३, १, ४०; २, २; पै ३, ३, ४; १५, ४; ६, ७, २; ५; १६, ८५, २; ६; -वेन शौ ५, ६, ४‡[c]; -वैः ऋ ५, ५९, १.

†अर्णस्[d]- -र्णः ऋ १, ३, १२; १२२, १४; १६७, ९; २, १९, ३; [३, ३२,११; ४, १९, २; ६, ३०, ४]; ४, १९, ६; [५, ४५, १०; ७, ६०, ४]; ६, ४७, ५; ८, २० १३; ९, ८६, ३४; ९७, २१; १०, ८, ३; मा २०, ८६; का २२, ८, ७; मै ४, १२, ४; १४, १८; काठ ३८, ७; -र्णसः ऋ १, ११७, १४; १५८, ३; १८२, ७; ६, ६२, ६; ७, ६९.७; मै ४, १४, १०; -र्णसा ऋ ९, २१, ६; १०७, १२; कौ १, ५१४; २, ११७; जै १, ५३, ४; ३, १२, ४; -र्णसि ऋ १, ५२, २; ६१, १२; १७४, ४; १८०, १; ४, १६, ७; ६, ७२, ३; ७. १८, ५; ८७, १; १०, ४९,९; मै ४, १२,३; काठ ८,१६; १२,१५; शौ २०, ३५,१२; ७७,७; -र्णोभिः ऋ ४, ३,१२. [°र्णस्- खादस्°, गो°, धनु>न्व्°, मधु>ध्व्°]

अ(र्णस्>)र्णो-वृत्[e]- -तम् ऋ २, १९, २.

अर्णस्[f]- -सम् ऋ ५,५ ४, ६.

अर्णसी[g]- -ऽर्णसि खि ४, ७, १, ६.

अर्णि- आणि- टि. द्र.

√*अर्णु २अर्णव- टि. द्र.

√*अर्त् अन्त्(तु√ऋ)त्, *अर्त-, √*अर्थ्, अर्थ-, √*अर्ध्, २अवत- टि. द्र.

*अर्त[h]-

---

[a]) 'अर्णवम्' इति ऋ. (१०, १०, १) पाभे. ।

[b]) 'रोचना' इति ऋ. ( १० १८९, २) पाभे. ।

[c]) विशिष्ट इह बाह्वृचः (९, ११०, १) पाभे. ।

[d]) पाप्र. √*अर्ण्+असुन् प्र. नित्स्वरः [वैतु. पाउ (४, १९७)√*अर् इत्यत एव नकारोपजनप्रयोजकः प्र. इति]। नैप्र. तावत् मौस्थि. इतरथैवोपकल्प्येत । तद् यथा । अर्ण-+*अस्- (यद्र.) इति कृत्वा बस. पूपप्रस्व. च वर्णसमापत्तौ शकन्ध्वादिन्यायप्रवृत्तिश्चेति (तु. नापू. टि.)। एस्थि. मौस्थि. बहून्यपि नामानि सन्ति पाप्र. ते ते कृतः प्र. इत्येवंमात्रत्वेनोच्यन्त इत्यभिसंधिः ।

[e]) उस. कृत्-प्रस्व. (पा ६, २, १३९) । उप. √२वृ+क्विप् प्र. ।

[f]) मत्वर्थीयः अच् प्र. चित्-स्वरश्च (पा ५,२,१२७; ६, १, १६३) ।

[g]) स्त्रियां ङीप् उसं. । पा. संदिग्धो भवति (तु. संटि.) ।

[h]) ननु तत्र (पृ २५७ टि. d) *अर्त->√*अर्त [स्वरः शोधितः द्र.(=√*अर्त् इति पाप्र.यनि.)] इत्येवं धा. नामजत्वं समकेतीह तु तद्वैपरीत्येन यनि.नाम्नो धातुजत्व-मुक्तं भवतीति वदतो- व्याघात इव स्यादिति । सत्यमेतत् । पर्यायेण द्वयोर्मिथो भिन्नयोः प्रक्रिययोः समाश्रयणात्त्वय-माभास्यमानो विरोधः प्रतिपत्तिविशेषहेतुतया द्र. । तद् यथा । *अर्-+*तु-(=√तन्+डः प्र.) इति मौस्थि. बस. सन् *अर्त- इति कृत्वा सुप्तद्धितसमासाऽन्यतमवृत्तं च √*अर्त इति नाधा. संस्तिङ्वृत्तं चोपेयात् । अस्मिन् दर्शने कृद्वृत्तं नाभ्युपेयेत । कृत्तया जिघृक्षितानां तेषां तेषां नाम्नां प्रादेशिकप्रवृत्तिभेद-मूलार्थभेदाऽन्यतरप्रयो-जित-स्वरभेदपरिणमित-गुणवृद्धिसंप्रसारणस्वरभक्तिहेतुक-वर्णवैशिष्ट्यलोपाऽऽगमप्रभृतिप्रकारकस्वरूपाणां सतां क्वचिद् मौलिक-नामसकल्पनामान्तरतया क्वचिद् मौलिक-नाम-स्वरूप-प्राकृतिकपरिणाममात्रतया च व्याख्यानाऽर्हत्वा-भिसंधेः । एस्थि. अपि यदाचार्यैर् √*अर्त इत्यस्य स्थाने √*अर्त् इत्येवं निर्दिश्येत, तत्र मौस्थि. प्रत्यजागरूकत्वे सति तत्र तत्र वृत्ते √*अर्त इत्यस्य तत्तच्छब्दरूपाऽऽदि-मावयवभूतस्य सतः क्वचिदकारान्ततया च क्वचिद् लुप्ता-कारान्तत्वे सति तकारान्ततया च श्रवणोपलब्धेस्तदुभय-प्रकारव्यापकसामान्यसंग्राहणपरा धीरेव निमित्ततां भजेत । एवं मौस्थि. नेदीय इव स्पर्शुकायाः सत्या अपि नैप्र. इह प्राधान्येन टि. एव संकेतो भवति । प्रसिद्धतर-त्वात् तात्कालिकप्रतिपत्तिविशेषकरत्वाच्च पाप्र. तु प्राधान्येन मूले संकेतो भवति । तद् यत्राऽनया दिशोभे प्रकृती (यथा *अर्त->√*अर्त इति च √*अर्त>

अर्तन्[a]– -नम् मा ३०, १९; का ३४, ४, १.
अर्ति-, अर्तितृ- अनु>न्व्°
?अर्ति– अवर्ति- टि. द्र.
*अर्त्नि– १अरत्नि- टि. द्र.
?अर्त्विरंनः[b] पै ११, ५, १३.
√*अर्थ्°
अर्थ[d]– -र्थः मा १८, १५; का १९, ५, ३; तै ४, ७, ५, २; मै २, ११, ५; काठ १८,१०; क २८, १०; –र्थम् ऋ १, १०, २; ३८, २; १०५, २; ११३, ६; १२४, १; १३०, ५; १४४, ३; १५८, ६; २, ३०, २; ३९, १; ३, ११, ३; ५३, ५; ६१, ३; ४, ६, १०; १३, ३; ६, ३२, ५; ७, १८, ९; ८, ६९, १७; ७९, ५; ९, १, ५; १०, १८, ४; २७, २०; २९, ५; ५१, ४; ६; ५९, १; ७३, ५; १४३, १; खि ५, ७,२, ७; मा ३५, १५†; का ३५, ४, १६†; तै ४,३,११, ५; मै ४,१३,७; काठ १, १२[e]; १८, २१; ३९, १०; कौ २, ६९५†; जै ३, ५६, २२†; शौ †१२, २, २३; १९, १७, ८; †२०, ७६, ५; ९२, १४; पै ९, १२, १; १६, १५२, ९; –र्थान् मा ४०, ८; का ४०, १, ८; –†र्थानि ऋ ७, ६३, ४; काठ १०, १३; –र्थाय शौ १, ७, ६; –र्थेषु ऋ १०, १०६, ७; पै ९, २५, २. [°र्थ- उपकार°, कद्°, तदिद्°, तूर्णि>र्ण्य्°, दूरे°, नि°, प्र°, शय्या°, शान्ति>न्त्य्°, सयस्°,समुद्र°, सर्व°, सु>स्व्°]
?अर्थ-दर्शिन्[f]– -नम् खि ३, १५, २८.
अर्थिन्[g]– -र्थिनः ऋ १,४८, ६; १०५, २;८, २७, १२;७९, ५; १०, २६, ८; १२७, ५; –र्थी ऋ ७, १, २३. [°र्थिन्- कूचिद्°]
अर्थे(र्थ-इ)त्[h]– -र्थेतः मा १०, ३[२]; का ११,२, ३[२]; तै १, ८,.११, १; काठ ३९, १.
√अर्थि[i], †अर्थयासे ऋ १, ८२, १; कौ १, ४१६; जै १, ४०, ८; अर्थयेथे ऋ १०, १०६, १.
√अर्द् >अर्दि, अर्दति शौ १२, ४, ३; ?अर्दतः[j] खि ५, २२, २; आर्दन् ऋ ४, १७, २.
¶अर्दयति मै ४,५,६[२]; अर्दयाति शौ ४, १५, ११; पै ५, ७,१०; अर्दयः ऋ ८, ५३, २; खि ३, ५, २; अर्दयः ऋ १०, १४७, २; अर्दय शौ ४, १५,६; †अर्दय ऋ ८, ७५, १०; तै २, ६, ११, ३; मै ४, १०,१;५;११,४$;६; काठ ७, १७; कौ १, ११; २, ९९८; जै १, २, १; शौ ६, ६५,१$; पै ५,७,३$; आर्दयत ऋ १०, १०४, १०.
अर्द[k]-
?अर्द-गण[l]– -णम् पै २, ८१,२.
अर्दयत्[m]– -यन् शौ ६, ४९, २.
*अर्द्र– आर्द्र- टि. द्र.
√*अर्ध्[n]
१अर्ध°– -र्धः ¶तै १, ७, ६, ३;

---

*अर्त- इति च) प्रदर्श्येयातां तत्रोभयथा प्रतिपादनप्रकार-समर्पणे तात्पर्यं द्र. न तु कश्चिद् विरोधः शङ्कनीय इति दिक् ।

[a]) युच् प्र. उसं. चित्स्वरश्च (पा ३, २, १५१; ६, १, १६३) ।

[b]) 'भरद्वाजो गोतमो अथ स्योनम्' इत्येवं मूलतः पादं संभाव्य मुपा. व्यर्थनपरः शोधः साऽवसरः स्यात् ।

[c]) वर्णवैशिष्ट्ये सति नैप्र. =√*अर्त् । एस्थि. पाधा. चुरा. सरूपात् (तु. √अर्थि) भेदः सुगमः ।

[d]) नैप्र.=*अर्त- (यद्र.) । पाप्र. भावकर्मणोः घञ् प्र. ञित्-स्वरश्च [पा ३, ३, १८;१९; ६, १, १९७; वैतु. पाउ (२, ४) √*अर्+थन् प्र. (तु. WW १,१३६), MW. <√अर्थि इति कृत्वा पुत्रं पितुष्पितृतामिव निनीषुकः] ।

[e]) 'अक्तम्' इति शोधः द्र. (तु. सस्थ. काठ ३१, ११; तै १, १, १३, १) ।

[f]) स्वरतो भ्रष्टः सन् मुपा. अन्तोदात्ततया सु-शोधः स्यात् (तु. सस्थ. 'सर्वज्ञम्' इति समानं भ्रष्टस्वरं सत् प्रकृतेऽपि तथात्वं ज्ञापुकम् ।

[g]) मत्वर्थीय इनिः प्र. (पावा ५,२,१३५)। तत्-स्वरः।

[h]) उस. कृत्-प्रस्व. (पा ६,२,१३९)। उप. √इ+क्विप् प्र. द्र. ।

[i]) =पाधा. चुरा. । यनि. अर्थ->नाधा. इत्यभिसंधिः।

[j]) मुपा. दुरुपपदो भवति [तु. 'वर्धतः' इति शौ. (२०, १३६, २) पाभे.] ।

[k]) नाउ. निष्पत्तावौपयिकेऽत्र प्राति. भावे प्र. द्र. ।

[l]) मुपा. नितान्तमसंस्कृत इव भवति (तु. ?२अद इत्यत्र ?२गण- इत्यत्र च सस्थ.टि.) । षतस. द्वि१ प्रयोगतः क्रिवि. । उप. अप् प्र. उसं. (पा ३, ३, ५८) ।

[m]) शतुर्निघाते धा. स्वरः (पा ६, १, १८६) ।

[n]) तु. टि. √*अर्त्>*अर्त- (=√ऋध् यद्र.) ।

[o]) आद्यन्तान्यतरस्वरभेदतो द्विरूपं प्राति. भवति (तु. नाउ.) । अर्थभेदतस्त्वस्य भूयस्तरामन्तर्विभक्तत्वे सत्य-नेकप्रकृतिजत्वं संभाव्यमानं परमप्रकृतिस्थानीयस्य सतः

५, २, १, ३; ५, ४; ३, ३, ५; ४, ४; ५, १; ¶मै ३, २, १०; ७, ६; ¶काठ ९, ११; १९, ११; २०, ९; २४, ४; ¶क ३१, १; ११; शौ ८, ९, १; पै १६, १८, १; –र्धम् ऋ १, १६४, १७; ६, ४७, २१; १०, २८, ५; ¶मै १, ११, ८; ३, २, १०; ७, ६[२]; १०, ५; शौ ९, १४, १७†; १३, १, ४१; पै १६, ६७, ७†; –¶र्धात् मै ३, २, ५; –†र्धे ऋ १, ९२, १; १२४, ५; १६४, १२; ६, २७, ५; कौ २, ११०५; शौ ४, १, ६; ९, १४, १२; पै १६, ६७, २; –र्धेन मै ३, ७, ६¶; –र्धौ ऋ २, २७, १५.

२अर्ध[a]– -र्धः ऋ १०, २७, १८; तै ६, १, ८, ५¶; क ८, १¶; –र्धम् ऋ २, ३०, ५; ४, ३२, १; ६, ३०, १; ४४, १८[b]; ७, १८, १६; मा २३, ६५†; का ३२, ५, ११†; ¶तै २, २, १०, ५[६]; ५, ४, ८, ३; ¶मै १, ९, ४[४]; ६[१०]; २, ४, २[२]; ३, २, ७[२]; ८, ९[४]; ९, ४[२]; ४, ३, १[२]; ११, ४†; ¶काठ ६, १०†; ८, ४[४]; ९, १२[४]; ११, ५[१०]; १२, १२[२]; १३, २[२]; १४, ८; १९, ५[६]; २६, ६[२]; ८; २८, १[२]; २९, ८; ३५, १८[२]; ¶क ६, ९[४]; ४४, १[२]; कौ १, १८१†; जै १, १९, ७†; शौ ५, १, ९; १०, ८, ७; १३; ११, ६, २२; पै ६, २, ८; १६, २३, २; १०१, २; १०२, २; –¶र्धाः तै ७, ५, २, १; काठ ३३, १; –¶र्धात् काठ २६, ६[२]; क ४१, ४[२]; –¶र्धे मै ३, ७, २; काठ ३५, १८; क ४८, १६; पै ५, २१, २$; –र्धेन शौ ५, १, ९[२]; १०, ८, ७; १३; ११, ६, २२; पै ६, २, ८[२]; १६, २३, २; १०१, २; १०२, २.

[°र्ध- अधि>ध्य्°, अभि>भ्य्°, उत्तम°, उत्तर°, जघन°, दक्षिण°, धन°, परा°, पूर्व°, प्र°]

¶अर्ध-ऋच[c]– -चः मै ३, २, ८[२]; १०, ४[२]; ४, ६, ८[२]; –चाभ्याम् मै ३, २, ८; –चे मै ३, १०, ४; –चेन मै ३, १, ५[२]; –$चैः मा १९, २५; का २१, २, १४.

†अर्ध-गर्भ[d]– -र्भाः ऋ १, १६४, ३६; शौ ९, १५, १७; पै १६, ६९, ५.

अर्ध-देव[d]– -वम् ऋ ४, ४२, ८; ९.

¶अर्ध-भाज्[e]– -भाक् मै ३, ४, १; ४, ६, ६; काठ २०, ११; २८, १; ३९, ११; क ३१, १३; शौ ६, ८६, ३$; –भाजः मै ४, ६, ६.

अर्ध-मास[f]– -¶सम् तै २, ५, ५, ४; ५; मै २, ४, ३; –¶सयोः तै ७, १, ४, ३; –¶सस्य तै २, ५, ६, ४; ८, ३; ५, ६, ७, २; ७, ३, ७, २[२]; मै १, ७, ३; काठ ९, १; २१, ५; ३३, ८; ३४, ९; क ८, ४; ३१, २०; –साः मा २३, ४१; २७, ४५; का २५, ८, ३; २९, ६, १; ¶तै २, ५, ७, ४; ५, १, ८, ५; २, १२, १$; ३, ४, ५; ६, ७, २; ७, २, ५; २५, १$; ६, २, ३, ५; ७, १, १, ६; ४, १, ३; २, २; ५; ३, ४; ११, ४; ५, १, ३; २०, १$; २५, १; ¶मै १, ८, ६; ३, ४, ६[२]; ४, ९, १८$; ¶काठ ६, ७; १०, ७; १४, ४[२]; २१, ५; २२, १; ३३, २; ३; ३४, ९; ४०, ६; ४५, ५; १७; ५०, ६; ¶क ४, ६; ३१, २०; शौ १०, ७, ५; ११, ९, २०; १५, ६, १७; पै १६, ८३, १०; –¶सान् तै ५, ७, २, ५; ६, २, ३, ५; –सानाम् मा २४, ३७; का २६, ८, २; तै ५, ५, १७, १; ७, १८, १; मै ३, १४, १८; काठ ४७, ७; ५३, ८; शौ १५, ६, १८; १६, ८, २३; –से ¶तै २, ५, ६, ६[२]; ७, १, ४, ३; ¶मै १, ४, ८; ४, १, १३; ¶काठ ३१, १२[२]; ३२, ६; शौ ८, १२, ५; ६; पै १६,

√*अर् इत्यस्य स्वयमनेकपरमतरप्रकृतिपरिणततत्वदर्शनेनोपपाद्यतां [तु. टि. √*अर्, (वैतु. WW. [१, १४३] स्वरतोऽर्थतश्च विवेकमपश्यन् पृथग्भावार्थविशिष्टमेवैकम् √*अर् इति धा. प्रस्तावुकः)]। पाप्र. यनि. घञ् प्र. ञित्स्वरश्च द्र. (तु. टि. अर्थ-)।

[a]) तु. नापू. सरूपं टि.। घः प्र. तत्स्वरश्च द्र. (पा ३, ३, ११८)। यस्तु समाऽसमाऽर्धभागपरतया स्वरविवेकः प्राचामभिमतो भवति (शौप्रा १, २, १) तस्य भूयोविमर्शसहत्वात् वैश. पुनरुपादानं द्र.।

[b]) वि. इति कृत्वा सा. अस्य 'सूरीन्' इत्यनेन सामानाधिकरण्यं वष्टि। तच्चिन्त्यम्। यस्थि. अप्य् अन्वयसौवच्यात् (तु. वैश.)। GW. अत्र नापू. आद्युदात्तं पिपठिषति। तदपि वैश. भूयोविमृश्यम्।

[c]) तस. समासान्तः अः प्र. (पा २, २, २; ५, ४, ७४)। तत्-स्वरः।

[d]) कस. सासस्व. (पा ६, १, २२३)। उप. यद्र.।

[e]) उस. ण्वि-अन्त-कृत्-प्रस्व. (पा ६, २, १३९)।

[f]) तस. सासस्व. (पा २, २, २; ६, १, २२३)।

१३४, ३²; -¶सि-सि मै १, ४, ८; ४, १, ९; काठ ३१, ७; ३२, ६; -सेभ्यः मा २२, २८; का २४, १४, १; तै ७, १,१५, १; मै ३, १२,७; काठ ४१, ६; -सैः तै ७, ५, ६, १²¶; मै ४, १०, ६.

¶अर्धमास-शस्‌(>:)[a] तै २, ५, २, ३; ५, ६, ७, २; ७, ३, ७, २²; काठ २१, ५²; ३३, २³; ३; ८²; क ३१, २०².

¶अर्धमासा(स-आ)यतन- -नाः काठ ३४, ९².

¶अर्ध(र्ध-ऋ)र्च[b]- -र्चः तै ६, ३, ११,३²; -र्चम्‌ तै २, ५,७, ४; -र्चात्‌ तै ३,२,९,५; -र्चे तै १, ६, १०, ५²; ६, ३, ११,३; -र्चेन तै ५, १, ४, १; शौ ९, १५, १९$; पै १६, ६९, ९$; -र्चौ तै २, ५, ७, ५².

¶अर्ध-वशा[c]- -शाम्‌ मै १,११, ७; काठ १४, ८.

¶अर्धिन्‌[d]- -र्धिनः तै ६, ५, २, १,२; -र्धी तै ६, ५,२,१. [°र्धिन्‌- सु>स्व्‌°]

?¶अर्धे(र्ध-इ)न्द्र[e]- -न्द्राणि तै ५, ४, ८, ३; मै ३, ४, १²; काठ २१,११²;-न्द्रैः मै ३,४,१.

*अर्धेन्द्र- नापू. टि. द्र.

¶१अर्धक[f]- -कः मै १, ८, ४.

२अर्धक[g]-

अर्धक-घातिन्‌[h]- -तिना शौ ११, २, ७.

अर्धयित्वा सम्‌°

अर्धि- प्रति>त्य्‌°

¶अर्धुक[i]- -कः तै ६, ३, १, ३; काठ ६, ४; २६, १; क ४, ३; ४०, ४; -कम्‌ तै २, ५, ५, ४; ५, ६, ४, ५; ६, २, ३, ५⁴, काठ २२,९; क ३५,३; पै १०, ९, ३$. [°क- वि>व्यू°, सम्‌°]

१अर्ध्य[j]- -र्ध्यः ऋ १, १५६, १; -र्ध्यम्‌ ऋ ५, ४४, १०.

?२अर्ध्य[k]- -र्ध्यः मै ३, ४, १¶.

३अर्ध्य- उत्तर°, दक्षिण°

√*अर्प्‌>अर्पि[l], अर्पयते काठ ११, ४¶; ¶अर्पयति तै ३, १, ९, १²; मै ४, १, ४; ¶अर्पयति तै २, ६,४,४; ५,१, १, ३²; ४, ३; ६, २; ४, ४, २; ३;५; ५,५,२; ६,२,४; ६, १, ९, २; १०, ४; २, ७, ५; ४, १, ५; ५, १, ५³; मै २, २, ३; ३, १, १²; ५; ३, ५³; ४, ८; ४, ६, ५³; काठ १८, १९², १९, ५; २०, ८; २१, ७³;२२; १२; १३; २४, ४; २७, १०³; ३१, ३; क २९, ७²; ३०, ३; ३१, १०; ३५, ५; ६; ३७, ५; ४७, ३; अर्पयन्ति मै १, ११,८¶; ¶अर्पयन्ति मै १,११, ८²; काठ १४, ८³; अर्पय तै ५, ७, ४, ३; शौ १०, ९, १; पै २, ८५, १; १६, १३६, १; अर्पयतम्‌ खि १, ११, ३; शौ ८, ४, १; ¶आर्पयत्‌ तै ५, १, ४, १; आर्पयन्‌ शौ ५, १९, २; पै ९,१८,८; ¶अर्पयेत्‌ तै ५,१, ४, २; ६, २; २, ७, १; २²; ४, ३, २; ६, ४, १, ५²; मै ३, १, ५; ४, १, ४; २, ९; काठ १९, ५²; ३१, ३; क ३०, ३; ४७,३; ¶अर्पयेयम्‌ तै ५, १,१, ३²; ६, ५, १, ४; ५²; मै ३, १, १²; काठ १८, १९²; २७, १०³; क २९, ७².

अर्पिपम्‌ शौ १२, १, ३५.

*अर्प्‌- नापू.टि., २अर्णव- टि. च द्र.

---

[a]) वीप्सायां शस्‌ प्र. तत्‌-स्वरश्च (पा ५, ४, ४३)।

[b]) अत्र पूर्वोत्तरयोःपदयोर्‌ अन्त्याद्ययोर्‌ अचोःप्रकृतिवद्‌-भावाऽभाव इति विशेषः। शेषम्‌ 'अर्ध-ऋच्‌-' इत्यत्र द्र.।

[c]) तस. सासस्व.(पा २,२,२;६,१,२२३)। उप.यद्र.।

[d]) मत्वर्थे इनिः प्र. तत्स्वरश्च (पा ५, २, ११५)।

[e]) तस. सासस्व. ('अर्धं यथा स्यात्तथा इन्द्राणि= ऐन्द्राणि इति कृत्वाऽतिप्राकृरः पा. विकारः *अर्धेन्द्र- इत्येवं सु-शोधः स्यात्‌)। अथ बस. एवाऽऽग्रहश्चेदुक्ते शोधे नाऽऽदरश्च, तर्हि यनि. हविर्विशेषसंज्ञात्वादन्तोदात्त-प्रकरणे इन्द्र- इति उसं. (पा ६, २, १६५)।

[f]) ण्वुल्‌ प्र. लित्‌-स्वरश्च (पा ३, १, १३३; ६, १, १९३)। अर्धुक- इति शाखान्तरीयः पाभे. द्र.।

[g]) नाउ. पूप. नापू. भिन्नवृत्तीव संभाव्यते। तद्‌ विमृश्यम्‌।

[h]) उस. णिन्यन्त- कृत्‌-प्रस्व. (पा ६, २, १३९)।

[i]) उकञ्‌ प्र. उसं. ञित्‌-स्वरश्च (पा ३, २, १५४; ६, १, १९७)।

[j]) ण्यति प्र. आद्युदात्तता उसं. (पा ३, १, १२४; ६, १, २१४)।

[k]) ण्यत्‌ प्र. तित्‌-स्वरश्च (पा ६, १, १८५)। मूको. 'अर्द्धं' इति 'अर्द्धौ' इति च संस्कर्त्रा यमु. शोधितं भवति तत्‌ साध्वेवाऽकारीति संभाव्येत। एवं सत्यपि विमृश्यमेव।

[l]) पाप्र.=पुगन्तः (तु.WW १,६९) √ऋ (>√*अर्‌) +णिच्‌ प्र. (पा ७, ३,३६)। मौस्थि. अनु नैप्र. *अर्‌- +*पु-[=*भु- (तु.WW १,७३)] =*अर्पु- इत्यस्य कास. सतः नाधा. सुवचः। √*अर्प्‌>*अर्पु- इति च व्यत्या-सेनोक्तस्य पाप्र. पुनर्निर्देशः द्र. (तु.टि.√*अर्त्‌,*अर्त-)।

अर्पण[a]— -णेन शौ १२, ३, २२. [°ण- अन्°, प्र°]

¶अर्पयितोस्(>:)[b] मै ३, ९, ४. अर्पयित्वा प्रति°

१अर्पित[c]— -†तः ऋ ६,५८,२; ९, ८६,१४; ३९; ४५; मै ४, १४, १६; कौ २, ३०५; ९६६; जै ३, २५,१; ४, २०, ९; -†तम् ऋ १, १६४, १२; १० ८२, ६; १७०, २; मा १७, ३०; का १८, ३, ६; तै ४, ६, २, ३; मै २, १०, ३; काठ १८, १[d]; क २८, २; कौ २, ८०४; जै ४, २, १०; शौ ९, १४,१२; पै २, १७, ५§; १६, ६७, २; -ता ऋ १, १४२, ९; १६४, १४?[e]; पै १,६६,२; -ताः काठ ३७,९; पै ४, ३,१; ९, १०, ५; -तानि मा २३, ५१; ५२; का २५, ९, ७; ८; पै १, ९१,४; -ते तै ४, ७, १३, २. [°त- नि>न्य्°]

२अर्पित[f]— -ताः ऋ १, १६४, ४८.

*अर्प्र— २अर्णव- टि. द्र.

*अर्बु-, √*अर्बुद् नाउ. टि. अर्बुदि- टि. च द्र.

१अर्बुद[g]— -दम् क २, ११, २०;१४, ४; ८, ३२, २६; मा १७, २; का १८, १, ३; तै ४,४, ११, ४; मै २, ८, १४; काठ १७, १०[2]; क २६, ९; -दस्य ऋ ८, ३, १९; ३२, ३; -दाय तै ७, २, २०, १; काठ ४२, १०; -दे काठ ३९, ६¶.

†२अर्बुद[g]— -दम् ऋ १, ५१, ६; -दस्य ऋ १०, ६७, १२; शौ २०, ९१,१२. [°द- नि>न्य्°]

¶अर्बुदि(न्>)नी— -नीः काठ २६, ४; क ४१, २.

अर्बुदि[h]— -दिः शौ ११, ११, ४; २३; -०दे शौ ११,११,५;१२, ५; -०दे शौ ११, ११, १-३; ७-११; १३; १४; १५[2]; १८; २०; २२; २४; २५; १२, २३.

?अर्बुदेनम्[i] पै १६, ८९, ७.

√*अर्भ्[j]

१अर्भ,र्भा[j]— -र्भस्य ऋ ७, ३७,३;

---

a) ल्युट् प्र. लित्-स्वरश्च (पा ६, १, १९३)।

b) तोसुन् प्र. नित्-स्वरश्च (पा ६, १, १९७)।

c) पाप्र. कर्मणि क्ते विभाषितमाद्युदात्तत्वम् (पा ६, १, २०९)। मौस्थि. तु *अर्प्- (<√*अर्प्<*अर्प्-)+ (भावे) इत- (<√इ) इति कृत्वा बस. (='अर्पि इतं यस्य') पूपप्रस्व.। एस्थि. यद्यपि २अर्पित- इति प्रस्व. इति कृत्वा पाप्र. संवादः सुलभः, तथापि तद्विषयकसामान्यलक्षणं मौस्थि. अनु *अर्प्- +(कर्तरि) इत- इति उस. थाथीयः स्वरः । यद्वाऽनिट्क्रान्तलक्षणसामान्यमनुरुध्य √*अर्प्>*अर्पि-(भावे)+*त-(<√तन् गपू. दि. एव पर्यायेण भावे च कर्तरि च) इति कृत्वा सस्व. द्र.।

d) 'अधि' इत्यत्र सस्थ. टि. द्र.।

e) स्वरूपतः संदेहः। 'आ । अर्पिता', 'आ-अर्पिता' इत्युभयथा सुवचत्वात्। तथाहि प्रथमे कल्पे 'आ' इति कप्र. 'तस्मिन्' इत्येतदन्वितः स्यात्। द्वितीये च प्रास. वा गस. वा पूपप्रस्व. (पा ६, २, २; ४९) स्यात्। यद्वा 'आर्पिता' इत्यविभक्तः पपा. इति कृत्वा मौस्थि. *आर्-> *आर्प- >√*आर्प् इति सर्वत्राऽऽदिमाऽक्षरवैशिष्ट्यमुपकल्प्य निर्वाहे संभवत्य् आद्युदात्तत्वे '१अर्पित-' (तु. एपूटि.) इत्यनेन सन्यायता द्र.। वैं. सा. प्रभृ. अत्र किमप्यनालोचयमाना मौनमुद्रिता इत्यहो प्रमादः।

f) १अर्पित- इत्यत्र टि. द्र.।

g) तात्पर्याऽभेदेऽपि सति यत् स्वरतो द्वैविधी भवति, तत्र स. कारणं स्यात्। तद् यथा। बस. पूपप्रस्व. इति कृत्वाऽऽद्युदात्तः स्यात्, उस. उपप्रस्व. इति कृत्वा चाऽन्तोदात्त इति(पा६,२,१;२,१३९)। अथ कावत्राऽवयवाविति। *अर्बु- (तु.या ३,१० यत्राऽऽद्युदात्तत्वस्योपपत्तिसंकेताऽभावे सति 'अम्बु-' इत्यस्य पर्यायमात्रता स्यादिति कृत्वा '*अर्बु अरणाद् अम्बु भवति' इत्येवं मुपा. सु-शोधः द्र.) इति पूप. भवति, द- (<*ध- <√धा) इति उप. चेति। *अर्बु- इत्यपि *अर्- +(भावे) *बु- (=*भु- < *भ्रु- <√भ्रू) इत्येवं बस. पूपप्रस्व. द्र. [वैतु. या. गपू. उप. द- (<√१दा? [अनुपदमेव √भा, √भू इत्येतयोरर्थसांगत्योपलब्धेः या. स्थ. भूयोविमर्शार्हता भवति])]। *अर्- इत्यत्र च √*अर् इत्यस्य कतमो विशेषः संगततमः स्यात् (तु. यस्था. टि.) इत्यपर्यवसितविमर्श द्र.।

h) १अर्बुद- इत्येतेनैव व्याख्यातं द्र.। तत्रत्यं न्यायमन्व् इह *दि- इति उप. भवतीतिमात्रे विशेषः (वैतु. वाच. अर्बुद- >√*अर्बुद्+इन् प्र. इति व्यर्थं द्राघीयांसं पन्थानमनुव्राजुकः)।

i) तु. शौ ११, १, ७ यदन्विह 'उदुब्जै(ब्ज-ए)नम्' इति पदद्वयाऽऽत्मकतया पा. सु-शोधो भवति।

j) पाप्र.निर्दिष्ट्यर्थं धा. संकेतः द्र. (तु. √*अर्व् प्रभृ.)। तेन यत्राऽऽद्युदात्त एतज्जः नाउ. कृच् श्रूयते तत्र घञः प्र. यत्र चाऽन्तोदात्तः श्रूयते तत्र घस्य प्र. विषयो भवतीति विवेकः। मौस्थि. तु *अर्- +(भावे वा कर्तरि वा)

काठ ३९,१३‡[a]; कौ २,२३४‡[a]; जै ३,२८,६‡[a]; -र्भाः पै १,९,२; -र्भात् ऋ १,१२४,६; ८,४७,८; -र्भाम् ऋ १,५१,१३; -र्भाय ऋ १,१४६,५; -†र्भे ऋ १,७,५; ४०,८; ८१,१; ६,५०,४; १०,९१,८; मै ४,१२,४; कौ १,१३०; ४११; २,३५२; जै १,१४,६; ४०,३; ३,२९,९; शौ २०,५६,१; ७०,११; -†र्भेषु ऋ १,१०२,१०; पै ३,३६,२.

२अर्भ[b]- र्भस्य शौ ७,५८,३.

१अर्भक[c]- -†कः ऋ [८,३०,१; ६९,१५]; शौ २०,९२,१२; -†कम् ऋ १,११४,७; मा १६,१५; का १७,१,१५; तै ४,५,१०,२; शौ ७,५८,६$; ११,२,२९; $पै १,४८,२; १६,१०६,९; -काः शौ १,२७,३; १९,३६,३; पै २,२७,३; -कासः ऋ ७,३३,६; -के ऋ ४,३२,२३; -केभ्यः ऋ १,२७,१३; मा १६,२६; का १७,३,५; मै २,९,४; काठ १७,१३; क २७,३.

*२अर्भक- नाउ. टि. द्र.

?अर्भग[d]- -गाय ऋ १,११६,१.

√*अर्म्

अर्म[e]- -र्मात् पै ५,३४,४[f]; -र्मेभ्यः मा ३०,११; का ३४,२,३.

अर्मक[g]- -के ऋ १,१३३,३[२].

*¶अर्म-कपाल[h]- -लैः तै ५,१,६,२.

अर्म्य[i]- -र्म्या खि ३,२२,६; -¶र्म्यैः काठ १९,५[j]; क ३०,३.

अर्मन्[k]- -र्म पै २,८१,२[l]. [°र्मन्- अन्°]

अर्मण्य- दुर्°

√*अर्य्

१अर्य,र्या[m]- -†र्यः ऋ १,२३,३;

---

*भ-(<√भा) इति कृत्वा यत्राऽऽद्युदात्तस्तत्र बस. पूपप्रस्व., यत्र चाऽन्तोदात्तस्तत्र उस. उपप्रस्व. सुवचः [तु. १अर्बुद- टि.; वैतु. पाउ. (३, १५२) √*अर्+भन् प्र. इति]। इह √*अर् इत्यस्य मूलभूतस्य सतो हिंसाविशेषभूतनिरसनाऽऽत्मकाऽर्थविशेष-प्रतीत्यर्थं तु. WW १, १८३ (तु. टि. √*अर्)।

a) 'अर्भे' इति ऋ. (१०, ९१,८) पाभे.।

b) तु. टि. १अर्भ-।

c) कुत्सार्थे कः प्र. तत्स्वरश्च (पा ५, ३, ७४)।

d) ण्वुल् प्र. लित्स्वरश्च (पा ६, १, १९३) इति =*२अर्भक- इत्यस्य सतो वर्णविकारः। यद्वा १अर्भ- +अनुकम्पोपाधिके स्वार्थे कन् प्र. नित्स्वरश्च द्र. [पा ५, ३, ७६; ६, १, १९७; वैतु. सा. (पा ५, ३, ७५ इति संज्ञाविषयत्वाभावाच्चिन्त्यः)]; यदपि सा. शाकल्यपदकारनाम्ना 'अर्भ-ग-' इति स्वरूपतः उस. इति कृत्वा उप. √गैं+टक् प्र. (पा ३, २, ८) इति वैकल्पिकीं व्यु. आह, तत् पपा. अनुपलम्भात् सांशयिकं स्यात्। ननु सा. सकाले पपा. तथोपलेभ इति चेत् तदपि उस. पूपप्रस्व. अनुपयोगाद् नेष्टमिति दिक्।

e) पाप्र. नापू. धा. उपकल्प्य ततः घञ् प्र. ञित्स्वरश्च द्र.। मौस्थि. तु *अर्-+*म- (यद्र.) इति कृत्वा बस. पूपप्रस्व. सुवचः [तु. टि. अर्थ-; WW १, १४२ (यत्तु पृथग्भावीयः √*अर् इति मूलतया प्रत्यपादि, तत्रांशिकं तथ्यं द्र.। प्रकरणविशेषतः √*अर् इत्यस्य तत्तदर्थ-विशेषान्तराणामप्युपादेयत्वात्। तद् यथा। चचूरोग-विशेषेऽभिधेयेऽन्तश्चक्षुर्वर्तमानं पृथग्भावाऽविशिष्टं कर्त्तन-मात्रं वा तपनमात्रं वाऽभिप्रेतं स्यात्। मृत्पात्रेष्टकादिपाकार्थं निर्मिते [अर्मक->*अम्मअ->*आमा->] पंजा. आवा- इति प्रसिद्धेऽभिधेयेऽन्तःखननाऽऽत्मकं गृहीकरणमभिप्रेतं स्यात्। अथवा तत्राऽपि तपने एवाऽभिप्रायः स्यात्। तेन प्रकरणानुसारव्यवसेयतत्तद्वैशेष्यपरः √*अर् [तु. टि.] अत्र मूलभावमुपेयादिति तत्त्वम्); वैतु. पाउ. (१, १३०) √अर्+मन् प्र. इति]।

f) सुपा. पदविभागः सु-शोधः द्र.।

g) अज्ञाताद्यर्थे कः प्र. तत्स्वरश्च (पा ५, ३, ७३ प्रभृ.)।

h) तस. सासस्व. (पा ६, १, २२३)। उप. यद्र.।

i) तात्रभविकः यत् प्र. यतोनावीय आद्युदात्तश्च (पा ६, १, २१३)।

j) मूको. अंचैः इति पा. (तु. संटि.)।

k) पाप्र. कनिन् प्र. नित्स्वरश्च (पा ६,१,१९७)। मौस्थि. तु *अर्-+*मन्- (यद्र.) इति कृत्वा बस. पूपप्रस्व. द्र.।

l) 'यथोर्मे' इति पा. 'यथा। उ। अर्मे' (=विसन्ध्यात्मकः शोधः) इत्येवं वा 'यथा। ऊर्मे' (*<उर्मन्- यद्र.) इत्येवं वा विभज्येत।

m) स्वामिभावे वर्तमानात् नापू. धा. कर्तरि अच् प्र. चित्स्वरश्च (पा ६, १, १६३)। मौस्थि. तु *अर्-+*य-(<√या कर्तरि) इति कृत्वा उस. उपप्रस्व. स्यात् ['=अरा स्वामिभावेन याति' (वैतु. पा. पावा. च ३, १, १०३ √ऋ+यत् प्र. स्वामिन्यर्थेऽन्तोदात्तश्चेति), पाप्र. यस्थि. सौवरीयं दिगनुपपादिता सती संज्ञाप्रमाणितमात्रा तु द्र., अपि च तु. टि. ?३अर्य-]।

८१, ६; ९[a]; ११६, ६[b]; १२१, १५; १२२,१४[c]; २, २३,१३[d]; १५; ३५, [२; ४०, ५; (१०, ८५, १८)]; ४,१, ७[b]; २, १२; ४, ६[d]; २४, ८; ५, ३३, ९[a]; ६, ४७, ९; ५१, २[d]; ७, २१, ५; ३१, ५[d]; ६४,३; ८६, ७; १००, ५; ८, १९, ३६[a]; ६३,७; १०,२७,१९; ३४,१३; ८६, ३; ८९, ३; मा २६, ३; का २८, २,१; तै १, २, १४,३; ८, २२, २; २, २, १२, ५; मै ४, १०. १; ११, ५; १४, ४; काठ ४, १६; ६, १०; १२; १२, १५; ४०, ११; कौ २, ९७६; जै ४, २३, ६; शौ २०, १८, ५; ५६, ६; १२६, १; –र्यम्[e] ऋ ८, ३३, १४; –*र्यया ऋ ५, ७५, ७; –र्या ऋ ७, ६५. २; –†र्ये ऋ ५, १६, ३; ८, ५१, ९; ५४, ७; खि ३, ३, ९; ६, ७; मा ३३, ८२; का ३२, ६, १३; कौ २, ९५९; जै ४, १९, १; –र्येषु कौ ४, ९; जै २, ७, ३. [°र्य- साधु> व्°]

†अर्यु-प(ति>)त्नी[f]– -त्नी ऋ ७,६,५; १०, ४३,८; शौ २०, १७, ८.

अर्य-समान[g]– -नः खि १, ५, १०.

२अर्य,र्या[h]– -र्यस्य मै ४, ६, ६; –र्याय मा २६,२; का २८,१,३; –र्यायै मा २३, ३१; का २५, ६, ११; –र्ये मा २०, १७; का २२, १, ४; काठ ३८,५.

अर्य-जारा[i]– -रा मा २३, ३०; का २५, ६, १०; तै ७, ४, १९, ३; मै ३, १३, १; काठ ४४,८.

?३अर्य,र्या[j]– -र्या ऋ १, १२३,१; –य तै १, ८, ३, १.

[a]) १अरि- इत्यस्य रू. इति B. JAOS ४५, १६६।

[b]) तु. PW. प्रभृ.; वैतु. NW. १अरि- इत्यस्य. रू. इति।

[c]) तु. सा. प्रभृ.; वैतु. PW. १अरि- इत्यस्य रू. इति।

[d]) तु. सा.; वैतु. GW. १अरि- इत्यस्य रू. इति।

[e]) यनि. द्वि१ द्र. [वैतु. GW. (>L ४००) अरि- (=तदीयं शत्रुपरम्)>ष३ इति। चिन्त्यस्त्वेष प्रस्तावः स्यात्। अभ्युपगमे सत्यनुपदमेव कांचिदाकाङ्क्षां पूरुक्तयेव श्राव्यमाणयोर् 'अन्येषां या' इति पदयोरन्यथासिद्धत्वप्रसङ्गात् (तदभिप्रायेण 'अर्याम्' इतीव श्राविते सति तृतीयपादेनैव नैराकाङ्क्ष्यसंभवादित्यभिसंधेः)। अन्यच्च। असंगतेश्च परप्रस्तावस्य चिन्त्यत्वं द्र.। तद् यथा। अरिप्रतियोगिक-सवनकर्मक-तिरस्कारे संपन्ने सति अन्यप्रतियोगित्वेन यद्विशेष्यत्वेन च शिश्रावयिषितस्य सतः 'सवनानि' इति पदस्य सकृद् द्वि३ च प्र३ चेत्युभयथा श्रावणार्थमनुपलम्भादित्यर्थात्। अथाऽपि परपक्षे 'अन्येषाम्' इति पदं तात्पर्यतः पिष्टपेषणतां नैव व्यभिचरेत्। अस्वत्व-प्रतीतिकरत्वेऽस्य च ?'अर्याम्' इत्यस्य चाऽनर्थान्तरत्वोपगमादिति दिक्।

[f]) बस. पूपप्रस्व. (पा ६, २, १)। स्त्री. वैकल्पिको नान्ताऽऽदेशः ङीप् प्र. च (पा ४, १, ३४)।

[g]) तृतस. पूपप्रस्व. उसं. (पा ६, २, ११)।

[h]) कर्मणि घञ् प्र. ञित्स्वरश्च [पा ३, ३, १९ (वैश्यसंज्ञाविषयत्वं द्र.); ६, १, १९७]। मौस्थि. तु. *अर्-*+य- <√या(भावे) इति कृत्वा बस. पूपप्रस्व. स्यात् [='अरा स्वामिभावेन यः (=यानं) यस्मिन्' (वैतु. पा. [३, १, १०३] गपू. [तु. १अर्य- टि.] आद्युदात्तार्थं पा. [६, १, २१३] च (अपि तु. टि. ?३अर्य-])]।

[i]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[j]) व्यु. ?। १अरि- +यत् प्र. तद्धित इति कृत्वा लक्ष्याऽनुरोधाद् भस्य सतोऽपीवर्णस्य लोपाऽभावः उसं. (पा ६,४,१४८)। तेन *अरिय- इत्यस्य त्र्यच्कस्य तित्स्वरितत्वतश्च (पा ६, १, १८५) सतः नैप्र. यनि. द्व्यच्कः परिणामः स्यात् (तु. टि. १अग्रिय-, अर्ज्यू-)। छन्दस्तो विमानश्च पाद इह मानं स्यात्। तद् यथा। ऋ १, १२३, १ इत्यत्र कृष्णादुदस्थात्, *अरियां विहायाः' इत्येवं श्राव्यमाणः सन्नेव त्रैष्टुभः पादः साधीयान् प्रतीयेत। तै. स्थ. अप्येवं प्रमीयेत। तथाहि। 'यच्छूद्रे यद् *अरिये उ' इत्यक्षरद्वयसाकाङ्क्षः पादः सुपूरः स्यात्। कुतः 'उ' इति नि. इति। यस्थि. पा. 'अर्ये' इत्यत्राऽऽवसानिकस्य 'ए>अय्>अ' इत्यनेन संधिपरिणामेनाऽच्परत्वे संकेतिते सत्यर्थतः '…उ'इत्यस्य सुसंगतिदर्शनादिति। ननु'एनः'इत्युत्तरपादाऽऽदौ वर्तमानमचमुपादायोक्तः संधिः प्रवर्तेतेति। नेति। कुत इति। उत्तरस्य पादस्याऽप्येकाऽक्षरसाकाङ्क्षस्य सतः सश्रु. मा. (२०,१७) मेलनेन यत्- पूर्वत्वेन सुश्रवस्त्वे सत्यनजादित्वादुक्ते संधौ निमित्तत्वाऽसंभवात् (तु. काठ ३८, ५ यत्राऽप्येवं यत्- पूर्वत्वं चिकीर्षितं द्र., मा. गपू., का २२, १, ४ च यत्राऽप्युक्तयैव दिशा षडक्षरः सन्नष्टाऽक्षरत्वेन प्रकृतः पादः सुपरिणमः द्र.)। स्वामित्वसामान्यपरं च सद् '*अरिय-' इत्येवोत्तरोत्तरघटमानसामाजिकवैशेष्यनैघ्न्येन १अर्य-, २अर्य- इति विशिष्टरूपान्तरयुगलतया पर्यणंसीदि-

अव-वि√मुच्>ञ्च्, अव·····विमु-ञ्चामि शौ ५, १३, ६.

†अव√वी, अववेति ऋ १०,२३,४; शौ २०, ७३, ५.

¶अव√वृज्, अववृजेयुः काठ ३४,२.
  अव-वृक्त– -क्तम् काठ १३, ३.
  अव-वृज्य काठ १३, ३; क ३६, १.

अव√वृष्.
  अव-वर्षत्[a]– -र्षते मा २२,२६; का २४, १२, १.
  ¶अव-वृष्ट[b]– -ष्टेन काठ ३५, १९; क ४८, १७.

अव√व्यध्>विध्, ¶अवविध्यति तै २, ५, ५,६[2]; ७, ४, ५, १[2]; अव···विध्यति ऋ ९, ७३, ८.
  †अव-विद्ध[b]– -द्धम् ऋ १, १८२, ६;७, ६९, ७; मै ४, १४, १०.

†अव√व्ये
  अव-व्ययत्[a]– -यन् ऋ ४, १३, ४; मै ४, १२, ५[c]; काठ ११, १३.

अव√व्रश्च्>वृश्च्, अव····वृश्च ऋ १, ५१, ७; अव···अवृश्चत् ऋ ७, १८, १७.

अ-वश[d]– -शः शौ ६, ४२, ३; ४३, ३.

अव√शंस्
  अव-शस्[e]– -†शसा शौ ६,४५,२.

अ-वशा[f]– -शा शौ १२, ४, ४२; –शाम् शौ १२, ४, १७.

अव√*शीय्[g], ¶अवशीयन्ते तै १, ८, १, १; मै ४, ३, ७; काठ १५, १; अवशीयताम् शौ १८, ३, ६०.

¶अव√शॄ>शिर्, अवशीर्यते[h] क ४८, १४; अवशीर्येत मै ४, ८, १०; काठ ३०, ५.

अव√शो>शिशी, अव···शिशीहि ऋ १०, १०५, ८.

†अव√श्रथ्, अव(श्रथाय) ऋ १, २४,१५; मा १२,१२; का १३, १, १३, तै १, ५, ११, ३; ४, २, १, ३; मै १, २, १८; ४, १४, १७; काठ ३, ८; १६, ८; ४०, ११; क २, १५; कौ ३, १, ४; जै २, ५, १; शौ ७, ८८, ३; १८, ४, ६९.

अव√श्वस्
  अव-श्वसम्[i] शौ ४, ३७, ३; पै १३, ४, ३.

?अव√श्वि[j] अव···अश्वैत् ऋ १, १२४, ११.

१अवस्- √अव् द्र.

२†अवस्[k*]- -वः ऋ १, ८३, ९; १६३, ६; १६४, १७; १८; ५, ४०, ६; ६, ९,३; ८,४०, ८;९, ७४,६; १०, १७,१३;२७,२१; ६७, ४; मा २९, १७; का ३१, ३, ६; तै ४; ६, ७, २; काठ ३५, ८; ४६, ३; शौ ९, १४, १७; १८[2]; १३, १, ४१; २०, २५, २; ९१, ४; पै १६, ६७, ७; ८.
  अवस्-तात्[l] ऋ ३, २२, ३; १०, ८८, १४; १२९, ५; मा ८, ९; १२, ४९†; ३३, ७४†; का ८, ६, २; १३, ४, ५†; ३२, ६, ५†; तै ३, ५, ५, १; ४, २, ४, २†; ¶७, २, ५, ५; ३, १०, १[2]; २; ४, २, २, ४; ¶मै १, ३, २६; ८, ५[2]; २, ७, ११†; ३, ६, १; ८, ८[2]; ९, ४; ४, ३, १; ¶काठ १३, ५[2]; १६, ११†; २०, ३; ३३, ६[4]; क २५, २†; पै ११, ५, ७.

---

[a]) गस. शत्रन्त-कृत्-प्रस्व. (पा ६,१,१८६;२,१३९)।

[b]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।

[c]) 'अवव्ययन्' इति मुपा. स्वरो भ्रष्टः ।

[d]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र. ।

[e]) गस. क्विबन्त-कृत्-प्रस्व.(पा ६,१,१६२;२,१३९)। 'यद्, आशसा' इति ऋ. (१०, १६४, ३) विशिष्टः पाभे. । यत्तु सा. √शस् इत्यस्य रू. आह, तद्विमृश्यम् ।

[f]) तस. नञ्-स्वरः (पा ६, २, २) । उप. यद्र. ।

[g]) मौस्थि. √शॄ>√*शीर्य्>यनि. इति नैप्र. क्रमः द्र. [वैतु. पा. (७,३,७८) √शद् इत्यस्य साधा. शादेशमात्रमिति प्रतिपादुकः; PW. प्रभृ. च √शी इत्येतस्य यगन्त-वृत्तेन संभेदुकाः (तु. W. [शौ १८, ३, ६०]))] ।

[h]) 'अपिशीर्यते' इति काठ. (३५, १६) पाभे. ।

[i]) णमुल्-कमुल्-सकक्षोऽलिद् अमुः प्र. उसं. (पा ३, ४, १२) । यद्वा, उपं. भावे अप् प्र. थाथादि-स्वरश्च (पा ६, २, १४४) । वा. क्रिवि. द्र. ।

[j]) प्रागिदगवाऽऽसेस्तदुपलक्षणभूतगोयोगश्रुतिसंकेतितायाः प्राकरणिकत्वाद् गत्यर्थः √श्वि सा. अनु निरदेशि, PW.प्रभृ. अभियुक्तैः समादृतो वर्णार्थः √श्वित् च नाऽऽदृत इति विविचो विमृशन्तु ।

[k]) व्यु. ? मौस्थि. अव+*अस्- (=√१अस्+भावे क्विप्) इति कृत्वा गस. शकन्ध्वादित्वम् उपप्रस्व. च द्र. (पा ६, २, १३९) । वा. क्रिवि. इति कृत्वोपलब्धेश्च अव्य. इति प्राक्तनो व्यवहारो भवति । वस्तुतस्तु न. द्वि१ द्र. [वैतु. पा. (५,३, ३९) अवर->*अव्+असिः प्र. इति (वैतु. टि. अधस्-*; WW १, १३)] ।

[l]) 'अधस्तात्' इत्यत्रत्यं न्यायमनु (तु. यस्था. टि.) तातिल् प्र. उसं. [तु. WW १, १३; १५; ६०४; वैतु. पा. (५, ३, ४१) अवर->अव्*+अस्तातिः प्र. इति]।

अ(व॒स्>)व॒ो-देव[a]- -वम् ऋ ८, १९, १२.

अवस॒- √अव् द्र.

†अव-सं√स्वृ, अ॒व···स॒मस्वरन् ऋ ९, ७३, ४?[b]; काठ ३८, १४.

अव√सद्>सीद, ¶अवसीदति काठ २३, ६; ¶अ॒वसीदन्ति तै २, ६, १, १; अ॒व···सीद ऋ ९, ९६, १३.

¶अ॒व-स(न्न>)न्ना[c]- -न्नाम् मै ३, ६, १०.

अव-स॒र्जन- अव√सृज् द्र.

अव-सा॒तृ- अव√सो द्र.

१अव-स॒ान-,अवसानीय-,अवसान्य॑-, अव-स॒ाय, अव-सायिनी-, अव-स॒ाय्य अव√सो द्र.

२अ॒-वसा(न>)ना[d]- -नाः ऋ ३, १, ६.

अव√सिच्>ञ्च्, ¶अवसिञ्च॒ति मै ३, ८,८[२];९; ९, ३; काठ २५, ९;१०; २६,५; क ४०, २; ३; ४१, ३; अ॒वसिञ्चामि मै १, २, ११; काठ २, ११; २५, ९; क २, ५; ४०, २.

अ॒व-सित- अव√सो द्र.

अव√सृज्, अ॒व···ससृज्यात् ऋ १, २४, १३.

अ॒वसृजन्ति ऋ ५, ३०, १३; अ॒वसृजथः ऋ १०, ६५, १२; अ॒व···सृजत् ऋ १, ५५, ६; १०, ११३, ४; अ॒व···सृ॒जत् ऋ १, १७४, ४; अ॒वसृजात् ऋ १०, १०८, ५; अ॒वसृजः ऋ १, १८९, ५; अ॒व···सृजन्तु ऋ ५, २, ५; ६; अ॒वसृज>जा ऋ १, १३, ११; मा २७, २१‡[e]; का २९,२,११‡[e]; तै ४,१,८,३‡[e]; मै २,१२,६‡[e]; काठ १८,१७‡[e]; क २९,५‡[e]; शौ ५,२७,११‡[e]; १८,२,१०†; पै ९, १,११‡[e]; अ॒व···सृज>जा ऋ ७, ८६, ५[२]; शौ १, ११, ३; ४, १५, १२[f]; ६, २६, १; पै १, ५,३; १५, १?[g]; ५, ७,११; अ॒व···सृज॒>ज॒ा ऋ १, ८०, ४; ७, ८६, ५; अ॒व···सृजतम् ऋ १, १५१, ६[h]; ५, ६२, ३; अ॒वसृजतात् मै ४, १३, ४; †अव॒ासृजत् ऋ २,१२,१२; ८, ३२, २५; १०, ८५, १३; शौ १४, १, १३$; २०, ३४, १३; पै ६, ३, १; १३, ७,१३; अ॒वासृजत् तै ६, २, ३, २; अ॒वासृजन्त ऋ ⌊(३, ३२, ११) ४, १९, २; (६, ३०, ४)⌋; अव॒ासृजन् शौ ४,६,७; पै १, १०७, ६; ५, ८, ६; †अ॒वासृजः ऋ १, ⌊३२, १२; (२, १२, १२)⌋; ५७, ६; ⌊(३, ३२, ११;४,१९, २) ६, ३०, ४⌋; १०, १३३,२; १३८, २; मै ४, १४, १८; काठ ३८, ७; कौ २, ११५२; जै ४, १, ५; शौ २०, १५, ६; ९५, ३; पै १३, ६, १२; अव॒ासृजः ऋ ६, ४३, ३; ¶अव-सृजे॒त् मै १, ६,४; काठ २६,६[२]; क ४१, ४[२].

¶अ॒वस्रक्ष्यति मै ३, ८, १; अ॒व···असृक्षत शौ १४,२,५२; ?अवास्राक्[i] पै २, ५२, ५.

अव-स॒र्जन[j]- -नाय मा १२, ६४;

---

[a]) बस. पूपप्रस्व. (पावा २,२, २४; पा ६, २, १)। 'व॒चस्-' इत्यस्य वि. 'उप॒रि-मर्त्य॑-' (यद्र.) इत्यस्य प्रतियोगि च [=अवोगताः (स्वस्य च यजमानस्य चाऽभीष्टफलस्य प्रदायुकतया) सामीप्यं गताः(नीताः) देवा येन(स्तोतृयजमानयोरवस्थितेर्देवलोकाऽपेक्षयाऽवोवर्तितवात्तत्सामीप्यपराणां देवानामवोगतिरित्यभिसंधिः ⌊तु. ऋ १, १४२, ११;३,४,१०; १०,११,१० यत्र वनस्पतिकर्तृकं देवानामुपावसर्जनमाशस्यते⌋), तु. PW.GW. BW. प्रभृ.; वैतु. सा. LRV. GRV. NW. च 'अवस्ताद् देवानाम्' इतीव व्याचक्षाणा उसं. अस. अभिसंदधानाः स्वरतः (तु. टि. अध-ई॒ष-) चोद्याः (भूयसेऽपि विमर्शाय तु. टि. उप॒रि-मर्त्य॑-)]।

[b]) मुपा. विमृश्यः। 'अ॒व' इत्यस्य स्थाने शौ.(५,६,३) 'ए॒व' इत्यस्य च, पै. (६, ११, ४) 'अ॒भि' इत्यस्य च श्रूयमाणत्वात् तन्मूलस्वरूपतः संदेहादिति यावत्।

[c]) १अ॒व-गत- टि. द्र.।

[d]) तस. नञ्-स्वरः (पा ६,२,२)। उप.<√२वस् द्र.।

[e]) 'उ॒प···अ॒वसृज' इति ऋ. (३, ४, १०) पाभे.।

[f]) इह सा. 'अवनीचीरपोऽपसृजे' इत्येवं शिश्रावयिषन् 'अवनी॒चीः' इत्येतद् एकं पदम् अव-न्य॑ञ्च्- इत्यस्य शसि रूपमाह, अथ अप√सृज् इत्यस्य वृत्तमन्त्यं क्रियापदमिति च मेने। तद् विमृश्यम्। त्रैष्टुभपाद-पुपूर्षा हि सायणीयं पाठमाकाङ्क्षततरामिति दिक्।

[g]) 'इ॒व स्रजम्' इति शौ. (१, १४, १) पाभे.। तत्र उपु. वा. प्रकृते च मपु. वा. इति भेदमुपेक्षमाणः मूको. विरुध्यमानश्च 'अव स्रजम्' इति मुपा. सु-शोधः द्र.।

[h]) 'अ॒व···सृ॒ज॒तम्' इत्येवं पठन् GW. चिन्त्यः।

[i]) 'आजस्रा' इति मूको.। ततः अ-जस्र- इति श्रुत्यभिप्रायः संभाव्येत। दीक्षायाः वि. चापरमुपलभ्येतेति चिन्त्यो भवति मुपा.।

[j]) गस. ल्युडन्त- कृत्-प्रस्व.(पा ६,१,१९३;२,१३९)।

का १३, ५, ३; तै ४, २, ५,३; काठ १६, १२; क २५, ३; शौ ६, ८४, १.

¶अव-सृज्य[a]- -ज्यः मै १, ६, ४.

१अव-सृष्ट, ष्टा[b]- -ष्टः ऋ १०, ४, ३; मा २०, ४५; का २२, ४, १०; मै ३, ११, १; काठ ३८, ६; -ष्टम् तै २, ४, ७, १; काठ ११, १३; -†ष्टा ऋ ६, ७५, १६; ७, ४६, ३; मा १७,४५; का १८, ४, १३; तै ४, ६, ४, ४; कौ २, १२१३; शौ १, ३, ९$; ३, १९, ८; $पै १,५६,४; ३, १०, ३; ४, १४, ५; -ष्टाः काठ ३८, ९; शौ १७, १,२८; -ष्टाम् शौ १४, २, ५३-५८. [°ष्ट- उप°, रुद्र°]

२†अव-सृष्ट[c]- -ष्टान् ऋ १०,२८, ११; -ष्टासः ऋ १०, ९१, १४; मा २०, ७८; का २२, ७, १२; मै ३, ११, ४.

अव√सृप्, अवसर्पति मा १६, ७; का १७, १, ७; तै ४, ५, १,३; मै २, ९, २; काठ १७, ११; क २७, १; अवसर्पतु तै ४, २, ७, १; अवसर्पन्तु शौ ११, १, १७; पै १६, ९०, ७.

अवसृपः शौ ८, ६, ३; पै १६, ७९, ३.

अव-सै नाउ. द्र.

अव√सो>सा, >सायि, >सि, >सु, अवस्यति ऋ १०, ६१, २०; ¶तै २,५,६,१;६,२,९,१; मै ४,६,५¶; ¶काठ ८,१; १३, १२;२९,८[2]; क६,६¶; अवस्यन्ति शौ ९,२,१४; पै १६, ७७, ४; अव···सात् ऋ ७, २८, ४; अवस्य ऋ ४, १६, २; ६, ४०, १; तै १, २, ३, ३; शौ २०, ७७, २†; †अवस्यतम् ऋ ६, ७४, ३; तै १, ८, २२,५; मै ४, ११, २; काठ ११, १२; शौ ७, ४३, २; पै १, १०९, ४; ¶अवस्येत् तै २, ५, १, ३.

अवासुः[d] ऋ १,१७९,२.[निर्°]

अव-सातृ[e]- -तारम् ऋ १०,२७,९.

१अव-सान[f]- -†नम् ऋ १०, १४, ९; मा १२, ४५; ३५, १; का १३, ४, १; ३५, ४, २; तै ४, २,४,१; मै २, ७, ११; ३, २, ३; काठ १६, ११; ३४, ९¶; क २५, २; शौ १८, १, ५५;२, ३७$; $१९, १४, १; $पै २, २३, ३; १०, १, ११; -¶ने तै २, ५, ६, १. [°न- नव°]

अवसान-दर्श[g]- -र्शः शौ ७, ४२, १.

?अवसान-भ(द्र>)द्रा- -द्रात्[h] पै १४, ४, २.

अवसानीय- उद्°

अवसान्य[i]- -न्याय मा १६, ३३; का १७, ५,२; तै ४,५,६, १; मै २, ९, ६; काठ १७,१४; क २७, ४.

अव-साय[j] ऋ १, १०४, १; मै ४, १, ६¶; ¶काठ ६, ६; ३१, ४; ¶क ४,५; ४७, ४. [°य अधि >ध्य्°, अनु>न्व्°]

अव-सायिनी- अनु>न्व्°

¶अव-साय्य[j] तै ३, ४, ८, ७.

अव-सित[b]- -†तस्य ऋ १, ३२, १५; मै ४, १४,१३; पै १३, ६,१५;

---

[a]) गस. क्यबन्त-कृत्-प्रस्व. (पा ३,१,११०;६,२,१३९)।

[b]) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।

[c]) गस. उप. अधिकरणे क्ते प्रवृद्धादित्वाद् अन्तोदात्तः (पा ६, २, १४७)।

[d]) 'अव । असुः ।' इति पपा. भवति। लुङि प्रपु३ द्र.।

[e]) गस. तृजन्त-कृत्-प्रस्व. (पा ६,१,१६३;२,१३९)।

[f]) गस. ल्युडन्त-कृत्-प्रस्व. (पा ६,१,१९३;२,१३९)।

[g]) उस. अजन्त-कृत्-प्रस्व. (पा ३, १, १३४; ६, २, १३९)।

[h]) 'रात्री' इत्येतेन प्र१ समानाधिकरणं '-द्रा' इत्याकाङ्क्ष्यते न तु '-द्रात्' (पुं. पं१) इति । तत् '-द्रा आत्' इति द्वे पदे स्यातामिति प्रथमः कल्पः । अर्थतः साकाङ्क्ष्याऽभावाच्च सश्रु. शौ. (१९, ४९, २) मूको. भूयस्तरामिव विकृतस्य सतोऽपीह ज्ञापकत्वाभावाच्च न त्वयं साधुतामियात् । एस्थि. मूको. अस्मिन्नंशे विकृतः स्यादित्यपरः कल्प एव सुवचः [तु. गपू. सश्रु. शौ. यत्र यमु. (पाएड्.) पा. छन्दस्तो विमाने सति च्युताक्षरपूर्तिकरः '*अनुसामम(द्र>)द्रा->-द्रा(प्र१)' इति समस्तपदात्मकः शोधो भवति (अनुशब्दादुपरि साशब्दश्रुतौ साद्यसामस्त्यसुपुष्टत्वात् तत्स्थाने 'मा' इत्यस्य श्रावणस्याऽनौचित्याच्च [तु. WR.; वैप १, १९४ यत्र यनि. शोधः द्र.] समानेन हेतुना *मद्र- इत्यस्य साध्वर्थशक्तेः सतः स्थाने भद्र- इत्यस्य श्रावणस्याऽनौचित्याच्च [तु. WR. प्रसृ.] यनि. च्युतपूर्तौ संभवन्त्यां पादान्तेऽपुष्टस्य सतः 'आभिः' इति पदस्य श्रावणस्याऽनौचित्याच्च, पाएड्. अनु निर्दिश्यमाने सति सा. पा. 'क्षणम्' इति पदस्य श्रावणस्याऽनौचित्याच्च [क्षणमित्यस्य अनु इत्यस्य च व्याख्यानतया भाष्यकृत्प्रयोगाऽभिसंधेश्च तदीयस्य पा. त्रुटितत्वाऽभिसंधेश्चेति दिक् ])]।

[i]) तात्रभविके यति तित्-स्वरः (पा ६, १, १८५)।

[j]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)।

–तासः ऋ ४, २५, ८; –¶ते तै ५, २, २४. [°त- प्रतिचीन°]
अव-सैa ऋ ३, ५३, २०.
२अव-स्यँत्b– -स्यन् काठ १३, १२. [°स्यत्- अधि>ध्य्°, अन्°]
अव√स्कु
अव-स्कवc– -वम् शौ २, ३१, ४; पै २, १५, ४.
अव√स्तम्भ्>भू, अव…अस्तभ्नात् खि ५, ५, ११.
अवस्-तात् २अवस्*- द्र.
¶अव√स्तृ>स्तृ, अवस्तृणाति तै ६, २, १०, ३; ११, ३; ३, ४, २; अवस्तृणाति मै ३, ८, ८; ९²; ९, ३; अव…स्तृणाति मै ३, ८, ८; काठ २५, ९; क ४०, २; $अवस्तृणामि मा ५, २५; का ५, ६, ४; तै १, ३, २, २; मै १, २; ११²; १४; काठ २, ११; २५, ९; क २, ५; ४०, २.
अव-स्तीर्यd तै ६, २, १०, ४. [°र्य अन्°]
अव√स्था>तिष्ठ, अवतिष्ठति ऋ ८, २४, ३०; अवतिष्ठति शौ ६, ४३, २; ७, ८०, ३; ¶अवातिष्ठत् काठ १२, १३; †अव…अतिष्ठत् ऋ ८, ९६, १३; काठ २८, ४; क ४४, ४; कौ १, ३२३; जै १, ३४, १; शौ २०, १३७, ७; ¶अवतिष्ठेत् मै ३, ९, ४.

अवतस्थे ऋ ५, ४४, ९; १०, ४८, ५; अव…स्थात् ऋ ७, ८७, ६; अवस्थात ऋ ५, ५३, ८; अवस्थाम् ऋ [२, २७, १७; २८, ११; २९, ७].
†अव-तस्थिवस्e– -वांसम् ऋ ८, ९६, १४; शौ २०, १३७, ८.
अव-स्थf– -स्थम् पै २, ८४, ७; -स्थस्य शौ ७, ९०, ३.
अव-स्थाg– -स्था मै २, १३, २१; पै २, ५६, ४; –स्थाः ऋ ५, १९, १.
¶अव-स्थावन्h– -वा तै ५, ५, १०, २; –वानः तै ५, ५, १०, ४.
¶अव-स्थित– -ताय काठ २४, ७; क ३७, ८.
अव√स्पृ, अवस्परत् ऋ ६, ४२, ४; अव…स्पः ऋ ९, ७०, १०. अवस्पृधि ऋ ५, ३, ९; ८, ६६, १४; अवस्पृतम् ऋ १०, ३९, ६.
अव-स्पर्तृi– -र्तः ऋ २, २३, ८.
अव√स्फूर्ज्, अवास्फूर्जत् पै २, ७०, ४.
अव-स्फूर्जत्j– -र्जत् मै २, ८, १०; काठ १७, ९; –र्जते मा २२, २६; का २४, १२, १; –र्जन् मा १५, १९; का १६, ४, ९; तै २, ४, ७, १; २; ४, ४, ३, २; मै २, ४, ७²; काठ ११, ९²; क २६, ८.

अव√स्मि, अवस्मयन्त ऋ १, १६८, ८.
√अवस्य्, १अवस्यत्- √अव् द्र.
२अवस्यँत्- अव√सो द्र.
अवस्यु- √अव् द्र.
अव√स्रंस्>स्रस्
अव-स्रस्k– -स्रसः ऋ २, १७, ५.
अव√स्रु, अवस्रव पै ५, १०, २; अवस्रवेत्, अव…स्रवेत् ऋ १, १२९, ६.
अवस्-वत्-, अवस्वद्-वत्-, अवस्व-द्वन्-नेत्र- १अवस्- द्र.
अव√स्वन्, अव…अस्वनीत् ऋ ४, २७, ३.
अव-स्वँन्l-
अवस्वन्यm– -न्याय मा १६, ३१; का १७, ४, ५; तै ४, ५, ५, २; मै २, ९, ५; काठ १७, १४; क २७, ४.
अव√स्वप्, अवस्वाप्सीत् पै ९, २५, १६.
†अव√स्वृ, अवस्वराति ऋ ८, ६९, ९; शौ २०, ९२, ६; अवस्वरत् कौ २, ७९३‡n.
¶अव√हन्>जङ्घन्, अवहन्ति तै ५, २, ८, ७; काठ २९, ३; ¶अव…हन्ति तै १, ६, ९, ३; अव…हन्मि शौ १२, १, ५८; अवहन्तु पै ५, ३३, ४o; अव…(हन्तु) शौ ६,

a) 'अव√या>अव-यै' इत्यत्रत्यं टि. द्र.।
b) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, १, १८६; १९७; २, १३९)।
c) गस. उप. अजन्ते थाथादि-स्वरः (पा ३, १, १३४; ६, २, १४४)। पपा. अवग्रहाऽभावश्चिन्त्यः।
d) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)।
e) गस. क्वस्वन्त-कृत्-प्रस्व. (पा ६, २, १३९)। 'अवतस्थि-वस्-' इति पपा.।
f) गस. उप. कः प्र. थाथादि- स्वरश्च (पा ६, २, १४४)।
g) स्त्री. भावे अङि टाप् कृत्-प्रस्व. च (पा ३, ३, १०६; ६, २, १३९)।
h) गस. वनिबन्त-कृत्-प्रस्व. (पा ६, २, १३९)।
i) गस. तृजन्त-कृत्-प्रस्व. (पा ६, १, १६३; २, १३९)।
j) गस. शत्रन्त-कृत्-प्रस्व. (पा ६, १, १८६; २, १३९)।
k) गस. क्विबन्त-कृत्-प्रस्व. (पा ६, २, १३९)। PW. प्रभृ. कसुबन्तं मन्वाना विमृश्याः।
l) नाउ. व्यु. औपयिकं प्राति. द्र.।
m) तात्रभविके यति तित्-स्वरः (पा ६, १, १८५)।
n) 'अवस्परत्' इति ऋ. (६, ४२, ४) पाभे.।
o) 'अपहन्तु' इति शौ. (६, १३४, १) पाभे.।

१३४, १; पै ५, ३३, ४; अुव-जहि शौ ५, १४, २; १३, १, ३०; पै १०, १०, २; १६, १५२, १०; अुव···जहि ऋ १, १३३, ३; ८, ६४, १; ९, ८५, २; खि २, ५, १; ६², २४; †कौ १, १९४; २, ७०४; †जै १, २१, १; ४, ७, ९; शौ ५, १४, १; २; २१, १; १०, ४, ३; १३, १, ३०; ३२²; १९, ६५, १; २०, ९३, १†; पै १२, १, ९‡[a]; १६, १५, ४; १५०, ४; अुव···हन्तन ऋ २, ३४, ९; अुवाहन् ऋ ४, ३०, १४; १०, ७३, ६; †अवाहन् ऋ ५, ४०, ६; [(१, ८४, १३) ९, ६१, १]; कौ १, ४९५; २, ५६०; जै १, ५१, ९; ३, ४५, २; †अुव···हन् ऋ ५, २९, ४; ३२, १; ६, ३६, ५; कौ १, ३१५; जै १, ३३, ३; अुव···अहनम् ऋ १०, ४८, ६. अवजिघ्नते ऋ १, ८०, ५. अुव···जघन्थ ऋ ६, ३१, ४. अवजङ्घनी पै २, ६५, ३?; अवजङ्घनीहि शौ ५, २०, ८; पै ९, २४, ७.

अव-घ्न(घ्नत् >)ती[b]- -ती ऋ १, १९१, २; शौ ११, १, ९; पै ४, १६, ३†; १६, ८९, ९.

अुव-हत[c]- -तः काठ ४, १३; २९, ३; शौ ६, १३४, २; पै ५, ३३, ५; -तम् काठ ३७, १२; -तस्य पै ६, १५, ५. [°त- वि>व्यु°]

अव-हन्तृ[d]- -न्ता ऋ ४, २५, ६.

अव √१हा > हापि, अुवाहाः[e] ऋ १, ११६, ३.

¶अवहीयते काठ २६, ९; क ४१, ७; अुवहीये ऋ १०, ३४, ५.

¶अवहास्यते काठ २६, ९; क ४१, ७.

अुवजीहिपः ऋ ३, ५३, ११.

अव-हाय[f] तै ५, ७, ९, १; मै १, ६, १; काठ ७, १२²; क ६, २; शौ ७, ५५, ४; १६, ४, ३. [°य अन्°]

अव-हीय- पाप°

अुव-हित- अव √धा द्र.

अव √हु, अुव···जुहुति ऋ ५, ७, ५.

अव √हृ > भृ, ¶अवहरति काठ २५, १०; २६, ५²; क ४०, ३; ४१, ३²; ¶अुवाहरत् मै १, ८, १; ¶अवहरेयुः काठ ११, ५. †अुव···जभार ऋ १, ३२, ९; पै १३, ६, ९.

अव-हरत्-, अुव-हृत-, अव-हृत्य उप°

अव-ह्रियमाण- अभि>भ्यु°, उप°

अव √ह्वृ

अव-ह्वर- अन्°

अव √ह्वे, अुवह्वये ऋ ५, ५६, १.

*?अवा ?अवाश्वन- टि. द्र.

अुवाका[g]- -कया तै ४, ६, १, १.

अवा(व-आ) √कृ, अुव···आकृधि ऋ ८, ५३, ४; खि ३, ५, ४; जै ४, १८, ८.

अवा(व-आ) √गम्, अवाजगाम पै २, ५७, १.

अवा(व √अ)च्, ञ्च्

¶अुवाच्, ञ्च्[h]- -वाक् काठ २७, ३; क ४२, ३; -वाङ् तै ३, २, ५, ३; ६, ३, १, ५; ५, २, २; मै १, ९, ३; ३, ६, ३; ४, ६, ६; काठ ९, ११²; २७, २; ५; २८, १; क ४२, २; ५; पै १, ७१, ३$; -वाचः ऋ ४, २५, ६$; मै ४, ७, ५; -वाञ्चः मै १, ९, ३; काठ ९, ११; ३७, १६; -वाञ्चम् मै ३, ६, ३; -वाञ्चौ तै ५, ३, २, ५; काठ २७, ३; क ४२, ३.

अुवाची- -¶ची मै १, ८, ५; २, १३, २१; काठ १३, ४²; -चीः शौ १०, २, ११; पै १६, ६०, ३; -¶चीम् तै ६, ३, ४, ६²; काठ २६, ६; क ४१, ४; -च्यै मा २२, २४; का २४, १०, १; -च्यौ पै २, ८७, ४.

अवाचीन[i]- -नम् ¶तै ६, १, ३, ४; ¶मै १, ८, ५; ३, ६, ७; ४, १, १३; ५, ५; ८, १²; ¶काठ २३, ४; २६, १; २७, १; ¶क ३६, १; ४०, ४; ४२, १; शौ १०, ४, २५; पै १६, १७, ३; -नाः पै १३, १०, २; -नान् शौ १३, १, ३०.

अवा(व √अ)ज्, अुवाजति ऋ १, १६१, १०.

अ-वाजिन्[j]- -जिनम् ऋ ३, ५३, २३.

---

a) 'अुप···जहि' इति ऋ. (१, ९४, ९) पामे.।

b) गस. शत्रन्त-कृत्-प्रस्व. स्त्री. ङीप उदात्तत्वञ्च (यक. पा ६, २, १३९; १, १७३)।

c) कर्मणि क्तेऽनन्तरगति-स्वरः (पा ६, २, ४९)।

d) गस. तृजन्त-कृत्-प्रस्व. (पा ६, १, १६३; २, १३९)।

e) लुङि प्रपु१. द्र. (=अुवाहास्त)। एतत् रू. <अव √हृ इत्येवं प्रदर्शुकः PW. चिन्त्यः। पृथक्कारविशिष्टाऽङ्गीकाराऽऽत्मकार्थाऽसंगतेः।

f) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)।

g) व्यु.? आ √वृ > *२आ-वर्- > *२आवर्-आ- (यद्र.) इत्यस्य नैप्र. विपरिणामः स्यात् [तु. टि. अुवका- यत्र *१आ-वर्- > *१आवर्-आ- (यद्र.) इत्यस्य नैप्र. विपरिणामं प्रयोजुकः शोधः सुवचः]।

h) गस.उप.क्विबन्ते पूपप्रस्व. (पा ३, २, ५९; ६, २, ५२)।

i) ख > ईनः प्र. (पा ५, ४, ८; ७, १, २)। तत्-स्वरः।

j) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

†१अ-वात, ता[a]— -तः ऋ ६, १६, २०;१८, १; ९, ८९, ७; ९६, ८;११; मा १९, ५३; का २१, ४, ३; तै २, ६, १२, १; मै ४, १०, ६; काठ २०, १४; २१, १४; -ता ऋ ६, ६४, ५; -ताः ऋ ६, ६७, ७; पै २, ५५, ५.

२अ-वात, ता[b]— -तः ऋ ८, ७९, ७; -तम् ऋ १०, १२९, २; -ताः ऋ १, ५२, ४; ६२, १०; -ताय शौ २०, १३६, ३[c]; -ताम् ऋ १, ३८, ७; -ते ऋ ६, ६४, ४.

¶अवा(व√१अ)न्

अवाँ(व-आँ)नम्[d] काठ २६, ८; क ४१, ६. [°नम् अन्°, वि>व्य्°]

अवा(व-अ)न्तर[e]— -रः पै १३, १२, २; -¶रम् तै ७, ४, ५, ३; ५, ४, २; ७, १; मै २, ५, १; ४, ५, ८[2].

अवान्तर-दिशा[f]— -¶शाः तै २, ४, ९, २; ७, २, ३, १; ५, २५, १; काठ ४५, ५; -शाभ्यः मा २४, २६; का २६, ६, १; तै ७, १, १५, १; मै ३, १४, ७; काठ ४१, ६.

¶अवान्तर-दीक्षा[f]— -क्षया तै ६, २, २, ७; मै ३, ७, १०; काठ २४, ९[2]; क ३८, २[2]; -क्षा तै ६, २, ३, ५[2]; -क्षाम् तै ६, २, २, ७; ३, ५[2]; क्षायाम् काठ ३४, १४.

¶अवान्तर-शफ[f]— -फः तै ५, २, ६, ५.

अवा(व-आ)√भृ(<ह्)

अवा-भृत— -तम् पै ९, ८, ३.

अवाय-, अवा-यत्-, अवायन-, अवायिन्- १अवे(व√इ) द्र.

अवा(व-आ)√या, अव...आ...ययुः ऋ १, १६८, ४[g].

अवार- अवर् द्र.

*अवारिक- १अवार्य- टि. द्र.

अवारीय- अवर् द्र.

अवार्छ्(व√ऋ>ऋच्छ), अवार्छति तै २, ६, ३, ४.

¶अवा(व√अ)र्ज्, अवार्जति काठ २८, १; क ४४, १.

१अवार्य- अवर् द्र.

*२अ-वार्य[h]-

†अवार्य-क्रतु[i]— -तुम् ऋ ८, ९२, ८; कौ २, ९९३; जै ४, २७, २.

अवा(व-आ)√१लभ्>लिप्स

अवा-लिप्स— -प्सः पै १, ६९, १; २; -प्सम् पै १, ६९, ३.

?अवावपन[j]— -नम् मै ३, १२, १९.

अवा(व-अ)व√सृज्

?अवावसृ(ष्ट>)ष्टा[k]— -ष्टा पै १, ९५, ४.

*अवा(व-आ)√शृञ्ज् नाउ. टि. द्र.

¶?अवाशृङ्ग[l]— -ङ्गः तै २, १, ८, ५.

अवा(व√२अ)स्, ¶अवास्यति तै ६, ३, ४, २; ¶अवास्यति मै ३, ८, ९; ९, ३[2]; काठ २१, ७; २६, ५; क ४१, ३.

अवा(व-अ)स्य[m] ऋ १, १४०, १०; ¶तै ३, २, २, १.

१अ-वास्तु[n]— -स्तु तै ३, ४, १०, २.

२अ-वास्तु[b]— -स्तुम् शौ १२, ९, ७; पै १६, १४५, ७.

---

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. <√वा हिंसायां (वैतु. PW. प्रभृ., NW., WW १, २११ √वन् + क्तः)।

[b]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[c]) 'अवानाय' इत्यपि मूको.। 'आ-तत्य' इति WR. संशोधयतः। सर्वसंग्रही सात. शोध-मूलाऽविवेककर उपेक्ष्यः।

[d]) गस. णमुलन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)।

[e]) बस. अन्तोदात्तः उसं. (पा ६, २, १६६)। उप. यद्र.।

[f]) कस. सासस्व. (पा ६, १, २२३)। उप. यद्र.।

[g]) तु. सा.; वैतु. वें. 'अव' इत्यस्य श्रुतिमुपेत्सुक इव, PW. GW. 'आ' इत्येतत्र श्रावयन्तौ (कप्र. असौ 'दिवः' इत्येतदन्वित इतीवाऽभिसंदधानौ)।

[h]) ६अ+*१वार्य-(<√*१वृ) इति तस. वा बस. वा द्र.। तस. तावत् उप. गतिद्वयी। तद्धितान्तं वा (=√*१वृ>*१वार-+यत्) कृदन्तं वा (=√*१वृ> वारि+यत्)। उभयथाऽप्याद्युदात्तस्य सतः (पा ६, १, २१३) नञा स. अन्तोदात्तः (यक्र. पा ६, २, १५६; १६०)। अथ बस. उप. भावे निष्पन्नमिति चान्तोदात्तं (पा ६, २, १७२) इति च विशेषः।

[i]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[j]) मुपा. विकृतो भवति तु. संटि., पपा. शाखान्तरीयं साद्यम्, सश्रु. आ-वपन- इति च।

[k]) अत्र मुपा. शोधाऽर्हः, मूको. चाऽऽदरार्हः द्र. [तु. टि. 'प्र√हि>प्रहिते(त-इ)षु-तस्(>:)']।

[l]) व्यु. ? ?*अवा(=अव+आ)+शृङ्ग- इति कृत्वा बस. अन्तोदात्तः (पावा २, २, २४; पा ६, २, १७७) इति वा, ?अवा√*शृञ्ज्+कर्तरि अचि न्यङ्क्वादित्वात् कुत्वं थाथीयः स्वरश्च (यक्र. पा ७, ३, ५३; ६, २, १४४) इति वा। अथवा नैप्र. पूप. २अव-गत- इत्यस्यैवैकोपसृष्टस्य सतः परिणामः स्यात् (वैतु. पपा. अनवगम इति कृत्वाऽवग्रहरहितः; भा. अव>अवा इति वा, अवाञ्च्->अवाक् इति वा पूप., स्वरस्तु निरुदकादित्वात् द्र. (पा ६, २, १८४) इति च; MW. २अवस्- इति पूप. इति च)।

[m]) गस. ल्यबन्त-कृत्-प्रस्व. (पा ६, १, १९३; २, १३९)।

[n]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

**१अवि-** √अव्, ?अविष- टि. च द्र.

**२अवि**[a]- -¶वयः तै ६, ५, १०, १; काठ २८, १०; ३५, १५; क ४५, १; पै १, ४०, ४$; -विः ऋ ९, ७८, १; मा १९, ९०; २१, ३०; २३, १२; ५४; का २१, ६, ११; २३, ४, २; २५, ३, ९; १०, २; तै ¶२, १, २, २[२]; ७, १, १, ५¶; ४, १८, १; ¶मै १, ५, २; १०; ८, १; २, ५, २[४]; $३, ११, २; ९; १२, १९; ४, ५, ७; ¶काठ ६, २; ७, ७; १२, १३[3b]; ३४, ७; ३८, ३; ४४, ७; ¶क ४, १; ४२, २; शौ ३, २९, १; २; ५, १९, २; १२, २, ५३; -†विभिः ऋ २, ३६, १; ९, ८६, ११; ९१, २; १०७, २; कौ २, ३८२; ६६४; जै ३, ३१, २; ५५, ५; पै ११, १, १०$; -विम् मा १२, ७१; १३, ४४[c]; का १३, ५, १०; १४, ४, ७; तै ¶२, १, २, ३[२]; २, ६, ३[२]; ४, २, ५, ६; १०, ३; ¶मै २, ५, २; $७, १२; १७; ३, १०, २; ४, ८, ३; ८[२]; काठ १६, १२; १७; २८, ५; क २५, ३; ४४, ५¶; शौ ३, १७, ३; २९, ३-५; ५, ८, ४; ६, ७१, १; ७, ५२, ५; पै २, २८, २; ७, १८, ५; -वी तै ५, ६, २१, १; काठ ५०, १; -वीः तै ७, ३, १४, १; काठ २८, १०; ४३, ४; क ४५, १¶; -वीनाम् ऋ ९, १०७, ८; १०९, ७; १०, २६, ६; ¶तै २, १, १, ५; ५, ५, १, ३; †कौ १, ४३६; ५१५; २, ३४७; †जै १, ५३, ५; ३, २९, ४; शौ १९, ४७, ६; पै २, ३७, ४; ६, १५, ८; २०, ६; -¶वेः मै २, ५, १; काठ १३, १; क ६, ७; -व्यः ऋ ८, २, २; ९, ६, १; ७, ६; १२, ४; [१६, ८; २८, १; (६४, २५) १०६, १०; ७, ७४, ९]; [२०, १; ३८, १]; ५०, ३; ५२, २; ६३, १०; १९; ६८, ७; ७४, ९; ८६, ४८; [१०१, १६; १०८, ५]; १०७, ६; -व्याः खि १, ७, २; काठ ८, २; ‡कौ[d] १, ५०६; ५१९; ५८४; २, ८५; ३१८; ४८३; ५४९; ५५७; ६२४; ‡जै[d] १, ५२, १०; ५३, ९; ५९, ७; ३, ८, ११; २६, ४; ३६ ८; ४०, १; ४३, ५; ४४, ३; ५२, ४; पै १, ७२, २; -व्याम् शौ ५, ३१, २; १२, २, १९; २०. [°वि- अज°, अति>त्य्°, त्रि>त्र्य्°, पञ्चन्°, शत°]

**अवि-का(<क)**[e]- -का ऋ १, १२६, ७; खि ५, १५, ५; -काः शौ २०, १२९, १७[f].

**अवि-पाल**[g]- -लम् मा ३०, ११; का ३४, २, ३.

**अवि-मत्**- -मतः शौ ६, ३७, १[h]; -¶मन्तम् मै १, ४, ८; काठ ३२, ६; -†मान् ऋ ४, २, ५; तै १, ६, ६, ४; ७, ६, ७; ३, १, ११, १; मै १, ४, ३; ८; काठ ५, ६; ३२, ६.

**अवि-वृत्**[i]- -वृतः[j] खि ४, ५, २१.

**१अव्य**[k]- -व्यम् ऋ ९, १३, ६; ६१, १७; ६७, ५; ६९, ९; ९७, ४; [(८५, ५) ५६]; १०७, १७; १०९, १६; †कौ १, ५२०; ५३४‡[l]; ५३५; ५७२‡[m]; २, २४०; २९०‡[m]; ५१०; ५४१; ६३०‡[n]; †जै १, ५३, १२;

[a]) व्यु.? <√अव् इति स्यान्न वा स्यात्। तत्संभवेऽपि द्वौ कल्पौ स्याताम्। १अवि- इत्यस्यैवाऽऽर्थिकः परिणाम इति प्रथमः। बधा. सतः √अव् इत्यस्माद् १अवि- इत्येतद्गतार्थभिन्नार्थवृत्तेर्निगम इत्यपरः। ननु भोः कोऽसावर्थ इति। अद्याप्यध्यवसेयकल्प इति। अथवा √अव् इत्यनेन संबन्धाभावे *आ-व्रि- [आगतो *व्रिः (<√*वृ) आच्छादनं यत इति कृत्वा बस. पूपप्रस्व.] इत्यस्य नैप्र. विपरिणामः स्यात् [तु. WW. (१, १६७) सिद्धवदुपवर्णुकः]।

[b]) 'आविस्*->विः' इति ब्रुवाणः SIM. नितरामुपेक्ष्यः।

[c]) पुरुषादिपञ्चपशुसंकेतस्य ४१तमान्मन्त्रादारभ्य प्रकृतत्वादतत्परः सन् देवताविशेषीयोऽर्थ इह नैव संभाव्येत [तु. टि. १अवि->-विः शौ. (१०, ८, ३१); वैतु. NW.]।

[d]) 'अव्यः' इति ऋ. (९, ६, १) पाभे.।

[e]) स्वार्थे कः प्र. तत्स्वरश्च (पा ५, ४, २८)।

[f]) तु. टि. *अजक-, ?१अरुक-।

[g]) उस. अण्णन्त-कृत्-प्रस्व. (पा ६, २, १३९)। उप. √२पा>पाल->√पालि द्र.।

[h]) तु. 'अवि-वृतः' इति खि. (४, ५, २१) पाभे.। यस्था. टि. च द्र.।

[i]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[j]) तु. अवि-मतः इति शौ. (६, ३७, १) पाभे.। तत्सापेक्ष्यात् प्रकृते द्वि३ संभवत्यपि ष१ रू. इत्येव सुवचम्।

[k]) तद्धिते यति प्र. आद्युदात्तः (पा ४, ४, ११०; ६, १, २१३)।

[l]) 'अव्यान्' इति ऋ. (९, ९७, ३१) पाभे.।

[m]) 'अव्यः' इति ऋ. (९, १०६, १०) पाभे.।

[n]) 'अव्यः' इति ऋ. (९, २८, १) पाभे.।

५५, २‡[a]; ३; ५८, ७‡[b]; ३, २१,५; २४, ६‡[b]; ४०,६; ४२, ८; ५१, ८‡[c]; -व्या ऋ ९, ७५, ४; ८८, ६; -¶व्याः तै २, १, १, ५; ५, ५, १, ३; -व्यान् ऋ ९, ९७, ३१; -†व्ये ऋ ९, ५०, २; ६६, ९; ६९, ३; ७०, ८; ८६, १३; २५; [९१, १; ९२, ४]; ९६, १३; ९७, ३; १२; [१६; १९]; [(८६, ३) ४०]; ९८, ३; कौ १, ५२९; ५३२; ५४३; २, ३७१; ५५६; ५९०; ६०३; ७५१; जै १, ५४, ५; ८; ५५, १२; ३, ३०, १४; ४४, २; ४८, ५; ४९, १.

१†अव्यय[d]- -यम् ऋ ९, ३७, ३; ४९,४; ६६, २८;६७,२०;६९, ४; ८२,१; [८५, ५; (९७,६)]; ८६, ८; ३१; ९८, २; १००, ४; कौ १, ५६२; २, ६४४; ६६६;७२२; ७८८; जै १, ५७, ७; ३, ५३, २; ५५, ७; ५९, १४; ४, ३०, २; -या ऋ १, १३५, ६[2]; [९, ६२, ८; ६७, ४; १०७, १०]; [१०३, २; (१०७, २२)]; कौ १, ५१३; २, ३३०; १०३९; जै १, ५३, ३; ३, २७,६; -ये ऋ ९, १६, ६; [३६,४; ६४,५];६६, ११; [८६, ३; (९७,४०)];९९, ५; १०३, ३; [(१०३,२)१०७, २२]; ११०, १०; कौ २, ८; ३८५; ४३०; जै ३, १, १०; ३१, ५; ३३, ५; ५३, ७.

अव्ययी- -यी ऋ ९, ७०, ७.

२†अव्यय[e]- -यम् ऋ ८, ९७, २; शौ २०, ५५, ३; -यानि ऋ ९, ८६, ३४.

¶अ-विकृत[f]- -तम् तै १, ५, ९, १.

अ-विक्रीत[f]- -तः ऋ ४, २४, ९.

अ-विक्षित[g]- -तम् ऋ ८, ३२, ८; -तासः ऋ ७, १, २४.

¶अ-विक्षुब्ध[h]- -ब्धम् मै १, ४, १२; ३, १०, २; काठ ३२, २.

¶अ-विक्षोभ[f]- -भाय मै २, ५, ३; काठ ३१, १४.

अ-विचर्त्य[i]- -र्त्यम् तै ४, २, ५, ३; मै २, ७, १२; काठ १६, १२; क २५, ३.

अ-विचाचल[f]- -लाः शौ १०, ८,४; पै १६, १०१, ७.

‡अ-विचाचलत्[j]- -लत् मै २, ७, ८; काठ १६, ८; ३५,७[2k]; क ४८, ९; शौ ६, ८७, १; २.

†अ-विचाचलि[f]- -लिः ऋ १०, १७३, १; २; मा १२, ११; का १३, १, १२; तै ४, २, १, ४; ५, २, १, ४; क ४८, ९.

¶अ-विचित[f]- -तः मै ३, ९, ५; -तानाम् मै २, १, ६.

अ-विचृत्य[l]- -त्यम् मा १२, ६५; का १३, ५, ४.

अ-विचेतन[m]- -नानि ऋ ८, १००, १०; खि ५, २०, २; शौ २०, १३५, ७[n].

अ-विचेतस्[f]- -तसः ऋ ९,६४,२१.

¶अ-विच्छिन्दत्[o]- -न्दन् मै ४, ८, ४.

¶अ-विच्छिन्न[f]- -न्नः काठ २४, ८[2]; क ३८, १[2]; -न्नम् मै ३, ४, १; ९, ३; काठ ९, १२; ३१, १३; -न्नाः काठ २३, ६; -न्नान् काठ २६, ९; क ४१, ७; -न्नौ मै १, ४, ९; ६, १०.

¶अ-विच्छेद[f]- -दाय तै ५, ५,१,१; मै ३, १, १०; ४, १; ५, ४; ४, ४, ७; ६, २; ७, ७; ८,४;

---

a) 'अव्यान्' इति ऋ. (९, ९७, ३१) पाभे.।

b) 'अव्यः' इति ऋ. (९, १०६, १०) पाभे.।

c) 'अव्यः' इति ऋ. (९, २८, १) पाभे.।

d) पाप्र. विकाराऽर्थे ययद् प्र. उसं., तस्मिन् परत इकारलोपश्च (पा ४, ३, १५०; ६, ४, १४८)। प्रस्व. द्र.। मौस्थि. तु *अवि-मय->*अविअय>यनि. इत्येवं नैप्र. लक्ष्यसिद्धिः (तु. टि. गव्यय-, हिरण्यय-)।

e) ययन् प्र. उसं. नित्स्वरश्च (पा ४, ३, १५०; ६,१,१९७)। नापू. वि. इदं च विशेष्यगर्भं वि. (=संप.) श्रूयत इति विवेकः द्र.। अथवा समूहाऽर्थे प्र. (पा ५, ४, २२; वैतु. सा. प्रभृ. इमं विवेकमदर्शकाः)। यदपि सा. प्रथमे स्थ. नञादि समस्तं पदमिति कृत्वा विनाशरहिततया व्याचष्टे, तदप्राकरणिकत्वाद् दुर्ग्रहं द्र.। गवाश्वाऽव्ययानां जातावेकवचने श्रूयमाणानां च प्रत्येकं समानं संप. सतामेव च भागशब्देन सामानाधिकरण्यं संभाव्येतेति दिक्।

f) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

g) सस्व. नापूटि. द्र.। उप. वि √१क्षि+क्तः द्र.।

h) उप. वि √क्षुभ्+क्तः। शिष्टम् एपूटि. द्र.।

i) तस. अन्तोदात्तः (पा ६, २, १६०)। उप. वि √चृत्+कर्मणि ण्यत् प्र.।

j) 'अविचाचलिः' इति ऋ. (१०, १७३, १) पाभे.।

k) एकत्र 'अविचाचलिः' इति ऋ. (१०, १७३, २) पाभे.।

l) सस्व. द्विपूटि. द्र.। उप. वि √चृत्+क्यप् प्र. उसं. (पा ३, १, ११०)।

m) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

n) '?अहानेतरसम्' इति सस्थ. टि. द्र.।

o) तस. नञ्-स्वरः (पा ६,२,२)। उप. वि √चू-छिद्+शतृ-प्रत्ययः द्र.।

काठ १९, ८; २१, ११; २४, ८; २६, ५; ९; २७, १; २९, ३; ३०, ७; क ३८, १; ४१, ३; ७; ४२, १; ४५, ४; $शौ ९, ८, ८; $पै १६, ११३, ११.

**अ-विजा(त>)ता**[a]- -ताम् मा ३०, १५; का ३४, ३, २.

**अ-विजानत्**[a]- -नन् ऋ १, १६४, ५; शौ ९, ९, ६; पै १६, ६६, ५.

**अ-विज्ञात**[a]- -¶तः तै ६, ५, १०, २; काठ २७, ९; –ताः मा २४, ५; ९; का २६, १, ९; २, ४; मै ३, १३, ६; १०; –¶तेन तै ६, ५, १०, ३; मै ४, ६, ४; काठ २७, ९.

अविज्ञात-ग(द>)दा[b]- -दा शौ १२, ४, १६.

***अवितरी-** अवि(तृ>)त्री- टि. द्र.

**अवितवे, अवितृ>ता** √अव् द्र.

**अ-वितारि(न्>)णी**[a]- -णीम् ऋ ८, ५, ६.

**अवितृ,त्री-** √अव् द्र.

¶अ-वितृण्ण- -ण्णे काठ २५, ९[२]; क ४०, २[२].

?**अवित्त**[c]- -त्तम् पै १०, १, १.

**अ-वित्ति**[a]- -त्तेः शौ १६, ६, १०.

¶**अ-वित्त्वा**[d] मै १, १०, १५[e]; काठ ३६, ९; ३७, १.

**अ-विथुर**[a]- -राः ऋ १, ८७, १.

**अ-विदस्यु**[f]- -स्यम् ऋ ७, ३९, ६.

¶**अ-विदहत्**[g]- -हता तै २,६,३,४.

**अ-विदीधयु**[h]- -युम् ऋ ४, ३१, ७.

†**अ-विदुष्टर**[i]- -रासः ऋ १०, २,४; तै १, १, १४, ४; मै ४,१०,२; काठ ३५, ९; शौ १९, ५९, २.

¶**अ-विदोह**[j]- -हाय मै २, ४, २; काठ १२, १२.

**अ-विद्या**[a]- -द्यया खि ४, २, ७; मा ४०,१४; का ४०, १, १०;११; –द्याः शौ ११, १०, २३; पै ६, ३, २; १६, ८७, ३; –द्याम् मा ४०, १२; १४; का ४०, १, ९; ११; –द्यायाः मा ४०, १३.

†**अ-विद्रि(य>)या**[k]- -याभिः ऋ १, ४६,१५; मा ३४,२८; का ३३, १, २२.

**अ-विद्वस्**[a]- -दुषः शौ ४, १८, २; पै २, ३८, ३; ५, २४, २; ७, १, ६; १०, ३, ३; –¶दुषा मै ४, १,१४; –द्वांसः ऋ ६, १५, १०; तै २, ५,१२, ५†; ४, ७, १५,६‡[l]; †काठ ७,१६; शौ ६, ११५, १; पै ९, २२, २३; १६,४९,४; –द्वान् ऋ १,१२०, २; ५, ३०, ३; १०, ७९, ६; मा ८, १३; ¶तै ३, २, ७, ३; ५, २, ८, २; ७, १, ७, २; ¶मै १, ८, २; ९, ४[५]; ११, ९; ३, ८, १०[२]; १०, ७; ४, १, २; ११; ¶काठ ९, १२[६]; १४, ९; २०, ६; ३१, १; १३;३४, १८; ¶क ३१, ८; ४७, १; पै ५, ३६, ४; ८.

**अ-विद्विषे**[m] शौ १,३४,५; पै २,९,३.

**अ-विद्वेष**[n]- -षम् शौ ३, ३०, १; पै ५, १९, १.

**अ-विधवा**[o]- -वा खि ३, १७[२], १; काठ १, १०; पै ११, ७, १०; –वाः ऋ १०, १८, ७; शौ १२, २, ३१†; १८, ३, ५७.

---

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[b]) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

[c]) संदिग्धः संस्करणान्तरसापेक्षः सुपा. भवति।

[d]) सस्व. द्विपूटि. द्र.। उप. √२विद्+क्त्वा प्र.।

[e]) 'अवित्त्वा' इति सुपा. शोधाऽपेक्षः (तु. सश्रु. तैब्रा १, ६, ७, २)।

[f]) तस. अन्तोदात्तः (पा ६,२,१६०)। उप. यद्र.।

[g]) तस. नञ्-स्वरः (पा ६,२,२)। उप. <वि√दह्।

[h]) सस्व. नापूटि. द्र.। उप. वि√धी>दीधी+उः प्र. उसं. (पाउ १, ७)।

[i]) सस्व. एपूटि. द्र.। उप. विद्वस्- +तरपि संप्रसारणार्थं छान्दसं भत्वम् (पा १, ४, २०; ६, ४, १३१)।

[j]) सस्व. द्विपूटि. द्र.। उप. वि√दुह्+घञ् प्र.।

[k]) तस. अन्तोदात्तः उसं. (पा ६, २, १५५)। उप. *विद्रिय- <*विद्र- (<√विद् वा √विध् वा यद्र.) +घच् प्र. उसं. [पा ५, १, ६३; (वैतु. सा. अ-विद्रि- [उप. <वि√द्रा]+या-[<√या] इति कृत्वा उस. इति वदन् कृत्-प्रस्व. च व्युपसर्गादूर्ध्वमवग्रहस्य च [तु. पपा. अवि-दस्यु- प्रभृ.] अभावं प्रति चोद्यः। म. च [मा. स्थ. उ. लब्धसंकेतः सन् यनि.] GW. च तस. अभिप्रयन्तावपि उप. <वि√दृ [GW. धात्वंशो मुद्रणभ्रष्टः] इति ब्रुवाणौ नञ्-स्वरस्य चोक्ताऽवग्रहस्य चाऽभावं प्रति दुर्वारनिग्रहौ द्र.। यदपि ORN. [ARV. अनु] श्रुतिश्लेषतामिवाऽनुमन्येत, तदप्यप्रमाणं वच इति दिक्)]।

[l]) 'अचित्तिभिः' इति ऋ. (४, १२, ४) पाभे.।

[m]) तस. नञ्-स्वरः (पा ६,२,२)। उप. वि√द्विष्+क्विप् प्र., वा. च१। यद्वा केनन्तं द्र.।

[n]) सस्व. नापूटि. द्र.। उप. वि√द्विष्+भावे घञ् प्र.। वा. क्रिवि. भवति।

[o]) तस. चार्वादिषु उसं. अन्तोदात्तः (पा ६, २, १६०)। उप. यद्र.।

अ-विधान- -नानि पै १४, ३, ८.

¶अ-विधृ(त>)ता- -ताः काठ २७, ४; क ३९, ४; ४२, ४.

अ॒-विनष्ट[a]- -ष्टान् मै १,५,१४[3]; काठ ७, ३; क ५, २.

अ-विप्र॒[b]- -प्रः ऋ ८, ६१, ९; -प्रे ऋ ६, ४५, २.

¶अ॒-विभक्त,क्ता[a]- -क्तः मै १, ६,४; -क्ता काठ २३, २; क ३५, ८.

‡अ-विभूति- -तिः जै ४, ५, १[c].

¶अ॒-विमुक्त[a]- -क्तः तै ६, २, १, १; काठ २४, ८[2]; क ३८, १[2]; -क्तम् काठ २७, ५; क ४२, ५; -क्तौ काठ २४, ८; क ३८, १.

¶अ॒-विमुच्य[a] तै ६, २, १, १.

¶अ॒-विमुच्यमान[a]- -नः तै ५, ५, १०, ६.

अ-विमोक्य॒[d]- -क्यम् शौ ६, ६३,१; -क्यैः पै ३, ३, ६.

अ॒-विमोचन[a]- -नाय खि २, १०,६.

अ॒-विरण[e]- -णाय ऋ १, १७४, ८.

अ॒-विराधय(त्>)न्ती[f]- -न्ती शौ २, ३६, ४; पै २, २१, ४.

अ-विरुद्ध- -द्धाः पै १६, ५७, १८.

¶अ-विवाक्य॒[g]- -क्ये तै ७, ३, १, १; २[2].

¶अ॒-विवादिन्[h]- -दिनः मै ४, ३, ७.

¶अ॒विवादिनी- -नीम् मै २, १,९; ५, ८.

*अ॒-विवेन- एउ. टि. द्र.

अ॒-विवेनत्[i]- -नन् ऋ ४, २४, ६.

अ॒-विवेनम्[j] ऋ ४, २५, ३.

†अ-विशस्तृ॒[k]- -स्ता ऋ १, १६२, २०; मा २५, ४३; तै ४, ६, ९, ४; काठ ४६, ५.

?अविशीरि[l] पै १, ८७, २.

*अ॒-विश्वमिन्न- एउ. टि. द्र.

†अ॒-विश्वमिन्व,न्वा[m]- -न्वम् ऋ २,४०,३; मै ४,१४,१; -न्वाम् ऋ १, १६४, १०; पै १६, ६६, १०.

‡अ॒-विश्ववि(न्न>)न्ना[n]- -न्नाम् शौ ९, १४, १०.

---

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[b]) तस. चार्वादिषु उसं. अन्तोदात्तः (पा ६,२,१६०)। उप. यद्र.।

[c]) 'अभि॒भूतिः' इति ऋ. (८, १६, ८) पाभे.।

[d]) तस. अन्तोदात्तः (पा ६, २, १६०)। उप. वि√मुच्+कर्मणि ण्यत् प्र.।

[e]) तस.नञ्-स्वरः (पा ६,२,२)। उप. <वि√१रण्।

[f]) सस्व. नापूटि. द्र.। उप. <वि√राध्>राधि।

[g]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. वि-वाक्य॒*- इत्यत्र विवचनात्मकशब्दसंज्ञायां कर्मणि ण्यति प्र. गस. कृत्-प्रस्व. [पा ६, १, १८५; २, १३९; (तु. *अनु-वाक्य॒-, वि-व॒चन-, वि-वा॒चन-) वैतु. सा. प्रास. इति कृत्वा व्याचक्षाणः सजातपर्यायभूतशब्दान्तरश्रुतिसाद्यमुपेक्षुकः सन् स्वरतश्चोद्यः। तद्दर्शने हि पूपप्रस्व. स्यान्नोक्तः उपप्रस्व. इति]। यदपि भा. पक्षे तस. पश्यन् उप. अधिकरणे कृत्यं प्र. चोक्तवांस्तद्धितविषयेण सूत्रेण (पा ६, २, १५६) अन्तोदात्तत्वं च सिषाधयिषितवांस्तदुभयं नोपपद्येत। अशब्दसंज्ञायां कृत्वाऽनुत्पत्तेः (पा ७, ३, ६७) उक्तस्य सौवरसूत्रस्य कृत्योत्तरे तस. अनुपयोगाच्च। भा. प्रत्याख्यानमनुकृत्योत्तरं तस. वदन्तः PW. प्रभृ. अपि प्रत्याख्याताः द्र.। अथोक्ते पक्षेऽप्याग्रहश्चेत्, तर्हि उप. *वि-वाक्॒->वि-वाक्य॒- इत्येषा ताद्धिती वृत्तिः समाश्रयणीया। दवीयस्त्वात्त्वस्य पथो नात्राऽऽदरविशेष इति दिक्।

[h]) सस्व. द्विपूटि. द्र.। उप. वि√वद्+णिनिः प्र.।

[i]) तस. नञ्-स्वरः(पा ६,२,२)। उप. <वि√वेन्; वैतु. MVG६८णमुलन्ततया (=नाउ.) पपा. शोधमिच्छुः (भूयसे विस्तराय तु. ORN.)।

[j]) सस्व. नापूटि. द्र.। उप. णमुल् प्र. इति नापू. विवेकः। यद्वा क्रिवि. इति कृत्वा *अ॒-विवेन- इत्यस्य प्राति. विप. सतः न. द्वि१ रू. इति वक्तव्यम्। पक्षं चैनमनुसंधाय *वि॒-वेन- इत्यत्र बस. सति उप. *२वे॒न- इति भावे निष्पन्नं द्र.। √वि॒वे॒न् इति च ततः नाधा. सुवच इति दिक्।

[k]) तस. अन्तोदात्तः (पा ६, २, १६१)। उप. वि√शस्+तृन् प्र.।

[l]) संस्करणान्तराऽपेक्षः पा. भवति।

[m]) तस. नञ्-स्वरः (पा ६,२,२)। उप.*विश्व॒-मिन्व- [तु.पपा.;वैतु.सा.ऋ.(१,१६४,१०) उस. इति कृत्वा व्याचक्षाणोऽन्तोदात्ततयेव शिश्रावयिषुः; GW. प्रभृ. विश्वम्-इन्व॒- इतीवाऽवगृह्णन्तः उप. <√इन्व् इति दर्शयन्तः (तु. ORN)] इत्यत्र बस. पूपप्रस्व. द्र. (पा ६, २, १)। तत्राऽपि उप. *मिन्व॒- इत्यस्य मूलभूतः √मिन्व् इति मानं परिच्छेदनमित्यस्मिन्नर्थे पाधा. उसं.। परमते नञ्पूर्वत्वे सति दिव्यरथवागन्यतरविशेषणभावाऽनुपयोगो मा भूदिति 'आ॒ विश्वम्-इन्व॒(न्वा॒)म्' इत्ययं श्रुतेर्मूलत आकार इतीयं या कल्पना भवति (तु. ORN.) साऽपि यस्थि. सूपपत्तिसंभवादन्यथासिद्धा द्र. (तु. नाउ. टि.)।

[n]) सस्व. नापूटि. द्र.। उप. विश्वँ॒-विन्न-(<√२विद्)

?१अविष- √अव् द्र.
२अ-विष[a]- -षः खि २, १४, २; ३; -षम् मा २, २०; का २,५, १; मै १, ६, २; काठ १, १२; ३१, १२; क १, १२; ४७, ११; शौ ८, २, १९; पै ५, १६, ४; १२, ३, १४; १६, ४, ९; -षस्य ऋ ८,२५,२०; -षा ऋ ६,३९,५.
?अ-विष्कन्द[b]- -न्दः पै १, ४६, ३.
अविष्ठ-, √अविष्यु, अविष्युत-, अविष्या-, अविष्यु- √अव द्र.
अविस्- ? परि. अविष्यत्- टि. द्र.
¶अ-विसृष्ट[c]- -ष्टम् तै १, ७, ६,६.
¶अ-विस्रंस[d]- -साय तै ७,३,१०,३.
*अ-विहर्यत[e]-
अविहर्यत-क्रतु[e]- -०तो ऋ १, ६३, २.
¶अ-विहित[c]- -तः मै १, ९, ६.
अ-विह्रुत,ता[c]- -†तम् ऋ ५, ६६, २; १०, १७०, १; मा ३३, ३०; का ३२, ३, १; मै १, २, ८; काठ २, ९; क २, ३; कौ २, ८०३; ३, ५, २; जै २, ३, २; ४, २, ९; शौ ६, २६, १$; -ताः मै ४, २, १०; पै २, १३, ५; -तान् मै १, ५, १४[३]; काठ ७, ३; क ५, २.
अ-विह्वरत्[f]- -रन्तम् ऋ ४, ३६,२.
अ-वी(त>)ता[c]- -ताः ऋ ४, ४८,१.
†अ-वीर,रा[g]- -राः ऋ ७,४, ६; ६१, ४; -राम् ऋ १०, ८६, ९; शौ २०, १२६, ९; -रे ऋ १०, ९५, ३.
अवीर-ता[h]- -ता[i] ऋ ७, १, ११; -तायै ऋ ३, १६, ५.
*?अवीर-ताति- नापू. टि. द्र.
*अवीर-त्[j]- -रते ऋ ७, १,१९.
¶अ-वीरस्थ[c]- -स्थाः मै ४, ३, ६[२]; काठ १२, ८[३].
अ-वीरहन्[c]- -हणौ मा ४, ३३; का ४,१०,४; तै १, २, ८, २; काठ २, ७; क २, १; -†हा ऋ १, ९१, १९; मा ४, ३७; का ४, १०, ८; तै १, २, १०, १; मै ४, १२, ४[k]; काठ ११, १३; $शौ १, १६, ४; ६, १४, ३; $पै १, १०, ४; १४, २, ३.
अवीरघ्नी- -घ्नीः शौ ६, ८३, २; १४, १, ३९; पै १, २१, ३.
¶अ-वीर्य[a]- -र्यः काठ ३५, १७; क ४८, १५.
¶अ-वीर्यव(त्>)ती[c]- -तीः मै ३, ८, १.
*?अवु- ?अव्- टि. द्र.
†अ-वृक,का[a]- -कः ऋ ४, १६, १८; ६, २, २; १५, ३; -कम् ऋ [१, ४८, १५; ८, ९, १]; ६, ४८,१८; ७,८८,५; ८,२७,४; १०, ३६, ३; १४४, ५; मै ४, १४, ९; शौ २०, १३९, १;

इत्यत्र तृतस. पूपप्रस्व. (पा ६, २, ४८) द्र.। अयमेवं वास्तविकः पाभे. (तु. ऋ १, १६४, १०; पै १६, ६६, १०) वा स्यात्, °मिन्व- इत्यस्य *°मिन्न- इत्येतद्द्वारकं वर्णविकारमात्रं वेत्यत्र भूयसी विमृट् सावसरा द्र.।

a) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

b) उप. <वि √स्कन्द् द्र.। '°न्ध-' इति मुपा. चिन्त्यः।

c) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

d) सस्व. नापूटि. द्र.। उप. वि √स्रंस्+घञ् प्र.।

e) बस. पूपप्रस्व. (पा ६, २, १)। उप. यद्र.।

f) सस्व. द्विपूटि. द्र.। उप. <वि √ह्वृ।

g) बस. पाप्र. पराद्युदात्तत्वप्रकरणे उप. वा पूप. वा उसं. द्र. (यक्र. पा ६, २, ११६; १२०)।

h) भावे तप् प्र. उसं. (पा ५, १, ११९)। पाप्र. तु. नञ्-पूर्वे तस. 'वा छन्दसि' (पामवा ५, १, ११९) इति त्वतल्भ्यां नञ्-समासविप्रतिषेधाऽभावविकल्पे ?*वीर-ता- इत्यस्य तलन्तस्याऽपि उप. नापूटि. दि. आद्युदात्तत्वम् उसं. (यक्र. पा ६, २, ११६; १२०)।

i) तृ१ द्र. [°तया>°तआ>°ता इत्येवं छन्दोऽनुरुद्धो वर्णविपरिवर्तनक्रम इत्यभिसंधिः (यतः 'माशेषसो अवीरता परि त्वा' इत्येवं त्रैष्टुभः पादो मूलतः श्राव्येतेति संकेतलाभः); वैतु. NW. (Mei. प्रमाणतः) *?अ-वीरताति->°ताता>°ता (तु. नाउ. टि.) इत्येवं व्यर्थं तृ१ स्थाने स१ उपकल्पुकः]।

j) यनि. च१ सत रू. उपपत्त्यर्थं हलन्तमेतत् प्राति. सुकल्पं भवति। तस्य रू. प्रादुर्भावश्च त्रैष्टुभपादेऽधिकाक्षरनिविवर्त्तिषाप्रयोजितः सन् °तायै>°ताइ>यनि. इत्येतत्क्रमेण संभाव्येत [तु. 'देवतातये>°ताते' इति समानप्रवृत्तिकं रू.; वैतु. L ३५९, ४६६ उक्तस्य वर्णविपरिणामस्य विषये शब्दाऽऽदौ वर्त्तमानाया नञः श्रुतेर्विस्पष्टप्रतीत्युत्कण्ठाऽऽत्मकमसद्धेतुं प्रदर्शुकः (पूर्वसवर्णैकादेशे सत्यवर्णेऽश्रूयमाणेऽप्युभयथा ['मा नो अग्नेऽवीरतायै परा दाः' इत्यत्र च 'माऽवीरतायै नो अग्ने परा दाः' इत्यत्र च] समानमेव स्वरतो नञ्पूर्वत्वस्य प्रत्याख्यमानत्वादित्यभिसंधेः); NW. [Mei. प्रमापयन्] *?अ-वीरताति- (यत्र पाप्र. *वीरताति- इति उप. अवीर-ता- इत्येतद्वत् पराद्युदात्तत्वम् उसं.) इति प्राति. उपकल्प्य (तु. नापू. टि.) ततये>°ताते>°ते इत्येवमपार्थमाध्यमिकाधिकाक्षरमिवाऽनुक्रामुकः]।

k) '-हा' इत्येवमन्तोदात्तः मुपा. चिन्त्यः (तु. संटि. पपा.)।

—कस्य ऋ १, १५५, ४; —काः ऋ ४, ४, १२; १०, १५, १; मा १९, ४९; का २१, ४, १; तै १, २, १४, ५; २, ६, १२, ४; मै ४, १०, ६; ११, ५; काठ ६, ११; शौ १८, १, ४४; —काणि ऋ १, ५५, ६; —काभिः ऋ २, ३१, ३; —काय ऋ १, ३१, १३; ७, ६६, ८; कौ २, ४१८; जै ३, ३२, ८; —कासः ऋ ७, ७४, ६; —के ऋ ६, ४, ४; तै १, ३, १४, ७; —केभिः ऋ ६, ४, ८; ७, १९, ७; तै १, ६, १२, ६; मै ४, १२, ३; शौ २०, ३७, ७.

अवृक्-तम- -मः ऋ १, १७४, १०.

¶अ-वृक्ण[a]- -क्णः मै ३, ९, ३.

अ-वृजिन[a]- -नाः ऋ २, २७, २; मै ४, १२, १‡[b].

†अ-वृत[a]- -तः ऋ [१, १३३, ७; ८, ३२, १८]; ६, १४, ५[2]; ८, ३३, ६; १०; जै ४, २०, ३; शौ २०, ६७, १; —तम् ऋ ८, १०२, १४; काठ ४०, १४; कौ २, ९२१; जै ४, ६, ६; —¶ताः मै ३, ९, ८.

अ-वृत्त[a]- -त्ताः मै ४, ६, ४.

अ-वृद्ध[c]- -द्धान् ऋ ७, ६, ३.

*अ-वृष्टि-

?अवृष्टि-द(त्त>)त्ता[d]- -त्ता पै ५, ३१, ३.

१अवे(व√इ), ?अवायते[e] पै ८, १५, १३; अव…अयत् ऋ ५, ३७, २; अवायन्ताम् शौ ११, १२, ८. ¶अवैति तै १, ७, ५, ४; २, ३, १२, २; ६, ६, ३, १; काठ १०, ५; ९; ३६, ७[2]; ३७, १[2]; ¶अवैति तै ३, ३, ८, १; †अव…एति ऋ ८, ४, ३; कौ १, २५२; २, १०७१; जै १, २६, १०; अव (एति) ऋ १, १६४, ५१; ¶अवयन्ति तै ६, ५, १०, ३; मै ३, ८, ७; ४, ५, १; ६, २; अवयन्ति मै ४, ४, ७; काठ २९, ३; क ४५, ४[2]; अवैतु ऋ ५, ४९, ५; शौ १, ११, ४; पै १, ५, ४, १३, ५, ७; १५, ६, ६; अवेहि ऋ ५, ७८, ८; ¶अवेयात् काठ १०, ९; अव… इयाम् ऋ ७, ८६, ४.

अव-य(त्>)ती[f]- -तीः का १३, ६, १७‡[g].

अवा(व-अ)य- अन्°

†अ(व>)वा-य(त्>)ती[h]- -ती ऋ ८, ९१, १; पै ४, २६, १.

अवा(व-अ)यन- अभि>भ्य्°

अवा(व-आ)यिन्- अनु>न्व्°

अवे(व-इ)त- अन्°

अवे(व-इ)त्य अनु>न्व्°

अवे(व-इ)त्य- -त्यः, -त्या३ः काठ ३७, १.

अवे(व-ए)तुम् अनु>न्व्°

¶अवै(व-ए)ष्यत्[i]- -ष्यन् तै ३, ३, ८, १.

२अवे(व√ई), अव…ईमहे ऋ १, २४, १४; ७, ५८, ५; मा १६, ६; का १७, १, ६; तै १, ५, ११, ३†; ४, ५, १, ३; मै २, ९, २; ४, १४, १७†; काठ १७, ११; ४०, ११†; क २७, १; पै १४, २, ९; †अव(ईमहे) ऋ १, २४, १४; तै १, ५, ११, ३; १२, १; ४, २, ११, २; मै ४, १४, ३; १७; काठ ४०, ११.

¶अवे(व√ई)क्ष्, अवेक्षते तै २, ३, ११, २; ५, १, १०, ५; ७, १, ३; मै ४, १, १२; काठ ६, ७; २२, ८; २९, २[2]; ३१, ९[4]; क ४, ६; ३५, २; ४५, ३[2]; ४७, ९[4]; पै १६, ११२, ५$; अवेक्षते मै ३, २, ७; ४, १, १२; अवेक्षन्ते तै ६, ६, ७, २; पै १५, १९, ७$; $अवेक्षे तै १, १, १०, ३; मै १, १, ७; ११; ४, १, ७; अवैक्षत मै २, १, ११; काठ १०, ५; ३१, ९; क ४७, ९; अवेक्षेत तै ३, २, ३, ३[2]; ४; ६, ६, ७, २[2]; मै १, ८, ४; ४, ६, ९; काठ ६, ७; २९, २; क ४, ६; ४५, ३; अवेक्षेत मै ३, २, ७.

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

[b]) 'अस्वप्नजः' इति ऋ. (२, २७, ९) पाभे.।

[c]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

[d]) 'अवृष्टिनिवृत्त्यै दत्ता' इति मध्यमपदलोपः स्यात्। एस्थि. अपि 'अतोवृ-' इति मूको. 'अतूर्णदत्ता' इति कौसू. (६२, २१) पा. उपलभ्यमानौ मुपा. संदिग्ध इत्येव सूचयेताम्।

[e]) यनि. मुपा. चिन्त्यः। लङि प्र१ सतः 'ऐच्छन्' इत्यस्य नापू. पदस्य नकारान्ततया शुश्रावयिषाया अन्याय्यत्वात्। एस्थि. नापू. पदे मूलतस्तकारान्ते सति परादिनकारप्रभावजा सांहितिकी तकारस्य नकाराऽऽपत्तिः सुवचेति कृत्वा मूको. अनु 'न वायते(<√वै)' इति पदद्वयाऽऽत्मकः शोध-प्रस्तावो विमृश्यताम्।

[f]) गस. शत्रन्त-कृत्-प्रस्व. स्त्री. ङीप उदात्तत्वं च (यक. पा ६, २, १३९; १, १७३)।

[g]) 'अवपतन्तीः' इति ऋ. (१०, ९७, १७) पाभे.।

[h]) शाखान्तरनिग्रः सांहितिको दीर्घः (यतु. ऋप्रा ९, २३; ORN.)। सस्व. एपूटि. द्र.।

[i]) गस. लृटः शत्रादेशे कृत्-प्रस्व. (पा ६, २, १३९)।

$अवे(व-ई)क्ष्य पै ५, २८, ७.
अवेज्य- अव √यज् द्र.
अ॒वेण √अव् >?१अव- द्र.
अ॒वेत-, अवेत्य, अवेत्य- १अवे द्र.
अ॒-वेनत्[a]- -नन्तम् ऋ १०,२७,१६.
अवे(व √इ)न्व्, अ॒व···इन्वतम् ऋ ७, ६४, २[b].
अवे(व √ई)ल् >लि, अ॒वेलय शौ ६, १६, ३.
अव····ऐलयीत् शौ ६, १६, ३.
अवे(व √ई)श्, अ॒व···ई॒क्षे ऋ ८, ७९, ९[c].
अ॒वेष्ट-, अ॒वेष्टि- अव √यज् द्र.
अवै॒तुम् १अवे द्र.
¶अ॒-वैभीदक[a]- -कः मै २, १, ६.
अ-वैरहत्य॒[d]- -त्याय शौ ६, २९, ३.
अवै॒ष्यत्- १अवे द्र.
अवो॒ः √अव् >?अ॒व्- द्र.
¶अवो(व √उ)च्, अ॒वोक्षति तै ५ २, ३, २; ४, ५, २[२]; ३; मै ३, २, ३; काठ २१, ७; अ॒व···उ॒क्षति तै ६, २, ७, ४; काठ २१, ७.
अवो(व-उ)क्ष्य काठ ८, ७; क ७, ४.
अवो॒-देव- २अवस्[*]- द्र.
¶अवो(व √१ऊ)ह्, अ॒वोहेत् तै ६,३, ४, ६[२]; मै ३, ९, ४.
अवो॒(व-ऊ)ह्य[e] मै ४, ४, ६.
१अ॒व्य- २अवि- द्र.
?२अव्य, अ-पाव्य- द्र.
¶अ-व्यतिहार- -राय काठ २७, १; क ४२, १.
अ॒-व्य(त् >)ती[a]- -त्यै ऋ १०,९५,५.
अ-व्यथ- -थाय काठ १७, ८[५].
अ॒-व्यथमा(न >)ना[a]- -ना मा ११, ६३; १३, १६; का १२, ६, ४; १४, २, १; तै ४, २, ९, १; मै २, ७, ६; १५; ३, १, ८; काठ १६, ६; १६; १९, ७; क ३०, ५; -नाम् मा १४,११; का १५, ४, १; तै ४, ३, ६, १; ५, ३, २, १¶; मै २, ८, ३; ३,२, ९; काठ १७, ३; २०,११; क २६, २; ३१, १३.
अ॒-व्यथय(त् >)न्ती[a]- न्ती तै ४, ४, २, ३.
अ॒-व्यथा[a]- -थायै मा १०, २१; १५, १०-१४; का ११, ७, १; १६, ३, २; ५; ८; ११; १४; मै २, ८, ९[५]; क २६, ७[५].
१अ॒-व्यथि[f]- -थ्यै काठ ३५, १०[२]; क ४८, १२[२].
२†अ-व्यथि॒[g]- -थिः ऋ १, ११७, १५; ९, ४८, ३; -थिभिः ऋ १, ११२, ६; ७, ६९, ७; मै ४, १४, १०; -थिषु ऋ ८, २, २४[h]; -थी कौ २, १८८‡[i]; जै ३, १७, ९‡[i].
*?अव्यथि॒-या[j]- -थी ऋ १०, २७, २१.

[a]) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।
[b]) तु. सा. GW.MW. च; वैतु. PW. 'अ॒व' इत्यस्य पृथगन्वय इतीवोपेक्ष्यवचनः।
[c]) मपु१ इडभावः उसं. [पा ७, २,७७ (तु. ऋ ४, २०, ८; ६, १९, १०; ORN. च मतान्तरमुभिन्नं संकेतुकः; वैतु. सा. √ईक्ष् इत्यस्य उपु१ वा मपु१ वेति; GW.उपु१ इति)]। यद्योगीयस्तिङ्निघाताऽभावश्च द्र.।
[d]) तस.उप. वै॒रहत्य- (यद्र.)<*वीर-हति॒- + स्वार्थे ष्यञ् प्र. अन्तोदात्तत्वप्रकरणे उसं. च द्र. (पा ५, १, १२४; ६, २,१५६; वैतु. PW. प्रभृ. उप. <वीर-हन्- इत्यपार्थं वदन्तः। वीरमारकत्वाऽभावाऽपेक्षया वीरमारणाऽभावस्य नेदीय इव प्रकरणं स्पर्शुकत्वादनुपदं सु-वीरता- इति भावनिष्पन्नेन पदेन भूयोऽप्येवं संकेतितत्वाच्च। पपा. अवैर-हत्य॒- इत्याकारकोऽवग्रह इति यथातन्त्रं विवेकः सुलभः।
[e]) गस. ल्यबन्त-कृत्-प्रस्व.(पा ६,१,१९३;२,१३९)।
[f]) तस. नञ्-स्वरः (पा ६, २, २)। उप. √व्यथ् + भावे इन् प्र. (पाउ ४, ११८)।
[g]) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. नापूटि. द्र.।
[h]) विशेष्यगर्भं वि. द्र. (वैतु. PW. प्रभृ. १संख्याकेन सरूपेण संभेदुकाः)।
[i]) 'अव्यथि॒ः' इति ऋ. (९, ४८,३) पाभे.। तस्यैव °थि॒र्भरत् > °थि॒भ्भरत् > °थी॒ भरत् इति नैप्र. विपरिणामः संभाव्येत। स्यादिममेव निगमं लक्षयित्वाऽऽचार्यः ६अ॒+√व्यथ् इत्यतो नञा युक्तादेव सत इनिं प्र. शशास (पा ३,२,१५७) यथा प्रस्व. स्यादिति (वैतु. पाम ६, १, १५८ यत्रैवं सहनिर्दिष्टस्य नञः स्वरो बलीयानिति प्रत्यपादि स्वोक्तिविरुद्धस्वरश्चायमेव निगम उदाहारि)। एस्थि. प्रकृतं रू.<*?अव्यथि॒न्- इत्येवमुक्तं भवतीति पाप्र.विशेषस्तत्त्वतारतम्यापेक्षया भूयोविलोडनार्हः द्र.।
[j]) 'त॒दव्यथि॒या, जरि॒माणस्तरन्ति' इत्येवं मूलतोऽधिकाक्षरे सति त्रैष्टुभे पादे स्वरपुरस्कृतयतिभारवशात् *?अव्यथि॒या- (=बस. पूपप्रस्व. व्यथारहितप्राप्तिमति तात्पर्यं च द्र.) >-याः (संहितायां>-या) इत्येतत् रू. 'अव्यथी॒' इत्येवं विपरिणतमिति संभाव्येत [=तत् (तृतीयपादोक्तं श्रवः) व्यथाराहित्येन (यथासमयं) प्राप्नुवाना जरिमाणः(जरोपलक्षितपरिपक्वभावाः[वैतु.सा.स्तोतृपर्यायतया ब्रुवाणः ज॒रमाण- इत्यनेन संभेदुकः])तरन्ति(वैतु. वें. सा. च २अ-व्यथि॒- इत्यस्य प्र३ इतीव व्याचक्षाणौ,PW.

*?अव्य(थि-ई)थी[a]– -थीः[b] ऋ १०, ३१, १०.

*?अव्यथिन्- *?अव्यथि-या- टि. द्र.

?अ-व्यथिषे[c] मै १, २, १७.

अ-व्यथिष्यै काठ ३, ७; क २, १४.

अव्यथी, २अ-व्यथि-, *?अव्यथि-या- द्र.

अ-व्यथेय[d]– -यम् खि १, ११, ५.

अ-व्यथ्य[e]– -थ्याय ऋ २, ३५, ५.

†अ-व्यनत्[f]– -नत् ऋ १०, १२०, २; खि ४, ५, १५; कौ २, ८३४; जै ४, ५, ६; शौ ५, २, २; २०, १०७, ५; पै ६, १, २.

१अव्यय-, २अ-व्यय- २अवि- द्र.

¶अ-व्यर्धुक[g]– -कः तै ५, ३, ६, ३; मै ४, ५, ६.

¶अ-व्यवच्छिन्न[h]– -न्नम् मै ४, १, ११; -न्नानि तै ७, ५, १, ४.

¶अ-व्यवानत्[i]– -नता मै ४, ७, ७; -नन् मै १, १०, ९[j].

¶अ-व्यवानम्[k] मै ४, ७, ७.

?अव्यषसूता[l] पै १२, ३, १५.

अ-व्य(च?)स्[m]– -व्य(च?)सः शौ १९, ६८, १.

*अव्या- अव√यज्> ?अव-याः टि. द्र.

¶अ-व्याकृ(त>)ता[n]– -ता तै ६, ४, ७, ३.

¶अ-व्याकृत्य[n] काठ ८, ६; क ७, २.

¶अ-व्यायुक[g]– -कः मै ४, १, ५; काठ ३१, ३; क ४७, ३.

¶अ-व्यावृत्त,त्ता[o]– -त्तः काठ २०, ५; क ३१, ७; -त्तम् तै ५, ३, ४, ७; ६, ४, ८, ३; मै ३, २, ५; ४, ६; ४, ६,७; -त्ता मै ४, ५, ८; -त्ताः काठ ३४, ७.

अ-व्युप्तकेश[p]-

¶अ-व्युप्तवह[q]– -हः, -हाः मै २, ५, ९.

†अ-व्यु(ष्ट>)ष्टा[h]– -ष्टाः ऋ २, २८, ९; मै ४, १४, ९.

¶अ-व्युष्टि[h]– -ष्ट्यै तै १, ५, ७, ५.

अ-व्यृद्ध[h]– -द्धम् मै २, ४, २.

अ-व्यृद्धि[h]– -द्धिः शौ १०, २, १०;

---

प्रभृ. च *१अ-व्यथि- इत्यस्य भावपरस्य प्राति. अभिप्रायतस्तत्संभिन्नस्य सतः २अ-व्यथि- इत्यस्यैव स्त्री. सतः प्राति. तृ१ इति तात्पर्यवन्तः)]।

a) बस. पूपप्रस्व. (पा ६, २, १)। उप. *ई-[<√ई+भावे क्विप् प्र. (=*?अव्यथि-या-)]। स्तरी- इत्यस्य वि. द्र.।

b) प्र१ द्र. [=स्थिरस्वभावाऽपि सती व्यथिः (=न. द्वि१<व्युथिस्- यद्र.) अकरोदिति वा. (वैतु. सा. प्रभृ. [तु. ORN. PW. प्रभृ.] २अ-व्यथि- इत्यनेन संभेदुकाः स्त्री. द्वि३ इति वदन्तः वा. कृते 'व्युथिः' इति कर्तरि निष्पन्नस्य सतः व्युथि- इत्यस्य स्त्री. प्र१ इति संलापुकाः सन्तश्चोद्याः[कर्तृभावाऽन्यतराऽर्थे व्यु. अपेक्ष्य २अ-व्यथि- इत्यत्र व्युथि- इत्यस्य भाव एवाऽऽद्युदात्तत्वेन प्रवृत्तिस्वाभाव्योपगमात्]; NW. च वा. नेदीय इव संवदमानोऽपि *?अ-व्यथिष्- इत्यस्य रू. ब्रुवाणः संहितायां नत्वभावं यथाकथमपि समाधित्सुर्विमृश्यः)]।

c) पपा. नञ्-रहितः स्वरहीनश्च भवति (तु. मा ६,१८ इत्यत्र 'व्यथिषत्' इति)। एवं मुपा. परादिस्वरः स्वरतः स्वरूपतश्च प्रामाण्यसापेक्षो भवति। नाउ. शाखान्तरीयोऽपरः पाभे. संटि. च द्र.।

d) उग्र- इत्यनेन सामानाधिकरण्यं द्र.। तस. अन्तोदात्तः (पा ६, २, १६०)। उप. कृत्य-समानाऽर्थः एयः प्र. भवति (तु. दिदृक्षेय-)। व्यथा- +ढ>एयः प्र. इत्येवं तद्धितवृत्तेऽपि सति (तु. सभेय-) तद्धिताऽभिव्यज्यमानगुणप्रतिषेधेऽन्तोदात्त एव द्र. (पा ६, २, १५५)। यत्तु सं. '?अव्यथा इयम्' इति पदद्वयमाह, तच्चिन्त्यम्। निष्प्रमाणं पदपार्थक्यस्याऽभ्युपेयत्वेऽपि मातृपदसमानाधिकरणतयाऽभीष्टस्य सतः प्रथमस्य पदस्येहाऽन्तोदात्तत्वेन निर्देष्टव्यत्वात् (पा ६, २, १७२)।

e) सस्व. नापूटि. द्र.। उप. √व्यथ्+क्यप् प्र. (पा ३, १, ११४)।

f) तस. नञ्-स्वरः (पा ६,२,२)। उप.<वि√१अन्।

g) तु. टि. अ-क्षोधुक-।

h) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

i) सस्व. नापूटि. द्र.। उप. <व्यवा-(व√१अ)न्।

j) 'अव्यवानम्' इति मूको. पाभे. (तु. BW.)।

k) सस्व. द्विपूटि. द्र.। उप. णमुल् प्र. इति विशेषः।

l) संस्करणान्तरसापेक्षः मुपा. द्र.।

m) 'अवि-असू-' इति पपा.। तस. नञ्-स्वरः (पा ६, २, २)। उप. वि√२अस्+भावे क्विप्। यत्तु सा. WR. 'अ-व्यचस्- इत्यतश् चकारलोपे यनि. प्राति. आहुः, तद्विमृश्यम्। यनि. गतार्थत्वात्।

n) सस्व. नापूटि. द्र.। उप. <व्या (वि-आ)√कृ

o) सस्व. एपूटि. द्र.। उप. <व्या(वि-आ)√वृत्।

p) तु. टि. व्युप्त-केश- यदनु पराभिप्रेतं सद् नञ्पूर्वत्वं नेष्टं भवति।

q) तस. नञ्-स्वरः (पा ६, २ २)। उप. व्युप्त-वह- इत्यत्र बस. पूर्वपदान्तोदात्तत्वम् (पा ६,२,११०)। तत्रापि उप. √वह्+करणे घः प्र.(पा ३, ३, ११९)।

पै १६, ६०, २[a].

**अ-व्येष्यत्**[b]- -ष्यन् शौ १२, ४, ९.

**अ-व्रण**[c]- -णम् मा ४०, ८; का ४०, १, ८.

**१अ-व्रत**[d]- -तम् कौ १, २९८; जै १, ३१, ६.

**२अ-व्रत,ता**[e]- -तः ऋ ८, ९७, ३; कौ १, ४४१; जै १, ४६, ५; शौ ६, २०, १; ७, १२१, २; -तम् ऋ १, १०१, २; १३२, ४²; [१७५, ३; ९, ४१, २]; ६, १४, ३; कौ २, २४३; ७८४; जै ३, २१, ८; -ता खि ३, ५, १६; -तान् ऋ १, ३३, ५; ५१, ८; १३०, ८; ९, ७३, ५; ८.

**¶अ-व्रत्य**[e]- -त्यः काठ ६, ६; क ४, ५; -त्यम् तै २, २, २, २; ६, १, ४, ६; काठ १०, ५².

**अ-व्रात्य**[f]- -त्यः शौ १५, १३, ११.

**√१अश्**[g], अशेम ऋ ५, ३०, २. अष्टु मा ७, ३; ६; ८. ६०³; का ७, १, ३; २, २; ९, ७, ९³; तै १, ४, २, १; ३, १; ६, ४, ५, ५; मै १, ३, ४; ४, ५, ५; काठ ४, १²; २७, १; २; क ३, १²; ४२, १²; ?अष्टात्[h] मै ४, ९, १२²; आष्ट तै २, ३, १४, ६[i]; काठ १०, १३[i]; अश्यात् का ९, २, ७; ८³; मै ४, १३, ९; अश्युः ऋ २, १९, ८; अशीथाः मै १, ६, १; ६; अश्याः ऋ १, ६९, ३; ७०, १;

---

a) 'अतिवृद्धिः' इत्यस्य मुपा. स्थाने छन्दोदृष्ट्या शोधः द्र.।

b) तस. नञ्-स्वरः (पा ६, २, २)। उप. वि√इ+लृटः शत्रादेशः।

c) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. यद्र.।

d) तस. नञ्-स्वरः (पा ६, २, २)। उप. यद्र.।

e) तस. अन्तोदात्तः (पा ६, २, १५६)। उप. यद्र.।

f) सस्व. एपूटि. द्र.। उप. यद्र.। अन्तोदात्तः (पा ६, २,१५६) न भवति। तद्धितार्थस्य सामान्यविशेषणतापरस्य वाच्यविशेषनिरूढेः विशेषणमात्रत्वाऽपहानादिति दिक्।

g) बधा. भवति। नैप्र. √*अर्श् इत्येतत्साध्यत्वेन √*अर् इत्यस्य शब्दान्तरयोगानुगतकायवृद्धिरूपतयाऽस्य प्रतिपत्तेः, यावन्तः √*अर् इत्यस्य प्रभेदाः स्युस्तावन्त एवास्याऽपि संभवेयुरित्यभिसंधिः। एस्थि. यथा √*अर् इत्यत्र प्रभेदविवेकस्याऽद्यापि परिणिष्ठेयस्वरूपत्वात् सामान्येन निर्देशोऽकारि, एवमिहाऽपि सामान्येनैव निर्देशस्य कर्त्तव्यतया प्राप्तावपि यत् १मश्च २यश्च प्रभेदौ विविच्येयातां तत्राऽभियुक्तानां प्रायेण व्याप्ति-भोजनाऽर्थकतया भिन्नयोः सतोर्द्वयोरेव धा. विषये परिचितित्वमात्रं निमित्तं द्र.। एवं तावदिह प्रकृते धा. पूर्वप्रसिद्ध्यनुरोधादेव भुज्यर्थकसरूपप्रभेदमात्रं विरहय्य यथासंभवं भेदान्तरसर्वस्वस्येत ऊर्ध्वं वैप. वाऽन्यत्र वा क्वचिदाकाङ्क्ष्यमाणविवेचनप्रयत्नस्य सामान्येनाऽन्तर्भावो भवति। शब्दान्तरसामान्येन वक्तृप्रवृत्तिविशेषलक्षणश्च '?अनुशामहै, आनश्याम्, आनशे, आनंश, आनशुः, आनाश' इत्येभिस्तिङ्भिः, अंश-,अंशु- इत्याभ्यां कृद्भ्यां च समर्प्यमाणसद्भावसंकेतः सानुनासिकोपक्रमः √*अंश् इत्ययमपरोऽपि बधा.पाधा.उसं. सन्निह परि. निर्दिश्यमानः यद्र.। तदनु अंश- इत्यत्र गपू. टि. च कियानपि विशेष आधेयः (तु. वैप ३, ४टिh)। किं च, नैप्र. सकृत्तमिव विपरिणम्यमाणः √*१आश् इति दीर्घादिरपरोऽपि बधा. पाधा. उसं.। ततश्च १आशा- (=वैप २,२१७; २आशा- यत्र स्वरतः संख्यातश्च शोधः द्र.), आशु- इत्येतयोः व्यु. यस्था. निर्दिश्यमाना द्र.। यत्तु GW. अशन्-, अश्मन्-, अशनि- इत्येतेषां व्यु. कृते √*?३अश् इति पृथगुपकल्पयेत्, तन्नेष्टम्। तदभिप्रेततदीयतैक्ष्ण्यपरत्वस्य √*अर् इत्यस्य हिंसार्थीये ६ठे प्रभेदेऽन्तर्भावस्य सुवचत्वात् तदभिमतस्य मौस्थि. √शा(=√शो) इत्यनेन संबन्धस्य प्रकृतस्य धा. आद्यज्मात्रेण तत्प्रतिनिधिना सता विज्ञापिते सत्यवशिष्यमाणस्य शकारस्य सामर्थ्याऽर्थतया प्रतिपिपादयिष्यमाणस्य √*२शृ इत्यस्य वंश्यस्य सततस्तद्दर्शनतो दुर्वचत्वाच्चेति दिक्।

h) मुपा. आद्यक्षरं प्रति संदेहः। कथमिति। १मे स्थ. साक्षाद् दीर्घश्रुतेः २ये स्थ. अपि 'वा आष्टात्' इत्येवं व्यवच्छेदसंभवाद् उभयत्राऽऽकारादि रू. इति १मः कल्पः (तु. संटि.१२ '?आष्ठा' इति BC., 'आष्ठाम्' इति पाभे.)। अथ 'नो' (तु. संटि.) इत्येवं १मे स्थ. नापू. पदस्य पाभे. उपलब्धेस्तदुत्तरवर्तिनोऽस्य रू. अकारादित्वं संभाव्येतेति २यः कल्पः (तु. संटि.२१ यदनु २ये स्थ. पपा. अकारादित्वमेव श्राव्येत)। एस्थि. १मे कल्पे आ इत्यनेनोपसृष्टस्य २ये कल्पे चाऽनुपसृष्टस्य सतोऽस्य यनि. एतत् तातङि रू. इति द्र.। उभयथाऽपि प्रस्व. भवति। १मे स्थ. च-लोपवशाद् २ये स्थ. च वा-योगवशात् प्रकृतस्य तिङो निघाताऽभावविकल्पे सति १मे कल्पे ग. निघातात् (पा ८, १, ७१) २ये कल्पे च प्रस्व. सतिशिष्टत्वादिति दिक् (वैतु. संटि.२१ यदनु पपा. २ये स्थ. तिङ्निघात-विकल्प इव श्राव्येत)।

i) तु. सस्थ. टि. अभि।

